# फक्किकाप्रकाशः ।

उपाध्यायोपाह्ववैयाकरणकेसरीविरुदाङ्कित-
मैथिलेन्द्रदत्तशर्मविरचितः
सीतारामशर्मणा सपरिष्कारं
शोधितः ।

वाराणस्याम् ।
सेठ-श्रीहरिदासगुप्तपुत्रेण चौखंबासंस्कृतसीरीज-
काशीसंस्कृतसीरीजाद्यनेकपुस्तकप्रकाशकेन
सेठ-श्रीजयकृष्णदासेन विद्याविलासयन्त्रे
मुद्रिता ।
सन् १९१७ इशवीये ।

*Published and Sold by H. D. Gupta & Sons,*
PROPRIETORS,
THE "CHOWKHAMBA SANSKRIT SERIES OFFICE."
BENARES CITY.
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press,*
BENARES.

1917.

# फक्किकाप्रकाशः ।

उपाध्यायोपाह्ववैयाकरणकेसराविरुदाङ्कित-
मैथिलेन्द्रदत्तशर्मविरचितः

सीतारामशर्मणा सपरिष्कारं
शोधितः ।

वाराणस्याम् ।

सेठ-श्रीहरिदासगुप्तपुत्रेण चौखंबासंस्कृतसीरीज-
काशीसंस्कृतसीरीजाद्यनेकपुस्तकप्रकाशकेन
सेठ-श्रीजयकृष्णदासेन विद्याविलासयन्त्रे
मुद्रिता ।

सन् १९१७ इशवीये

*Published and Sold by H. D. Gupta & Sons,*

PROPRIETORS,

THE "CHOWKHAMBA SANSKRIT SERIES OFFICE."

BENARES CITY.

*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press,*
*Benares.*



1917.

॥ श्रीः ॥

—:०:—

विदितमस्तु तद्विदाम् यदयं फक्किकाप्रकाशनामा ग्रन्थः मैथिलेन्द्रदत्तविरचितो व्याकरणमध्यमादिपरीक्षादित्सूनां छात्राणामुपकारक इति । एतस्य सौष्ठवत्वादिविषये सहृदयधुरीणानामनुभव एव प्रमाणमिति नात्र किञ्चिद्वक्तव्यमस्ति । स चायं ग्रन्थोऽन्यत्र मुद्रितो ऽपीदानीं मुद्रितानां सर्वेषां विक्रयाद्ग्राहकाणामुत्साहतः पुनर्मुद्रितुमारब्धो भगवत्कृपया समापत् । अत्र यथामति ग्रन्थान्तरसाहाय्येन क्वचिट्टिपन्यादिकमपि योजितमस्ति । अत्र मम मतिमान्द्याद्, अनवधानतः, सीसकाक्षरयोजकानां चानवधानादिदोषेण सम्भाव्यमानान्दोषान् क्षमेरन् अत्र भवन्तः कृपार्द्रदृष्ट्येति क्षमापयन् श्रीकाशीपुर्यधीश्वरं श्रीविश्वेश्वरं प्रार्थयते ।

विपश्चिद्विधेयः प्रस्तावकः ।



# अनुक्रमणिका





# शुद्धिपत्रम् ।

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १४ | १४ | यावियाव | यावयवि |
| ३० | २१ | प्रतिवन्ध्यक | प्रतिवन्धक |
| ४० | ६ | मन्दोक्तपा | मन्दोक्तमपा |
| ६४ | २३ | तद्धितत्र्योः | तद्धितयोः |
| ६५ | १६ | ब्दादचक्षादा | ब्दादा |
| ७२ | १२ | ष्टी | ष्ठी |
| १११ | १८ | अनिष्ठ | अनिष्ट |
| ११७ | १६ | प्राप्तो | प्राप्तौ |
| १३० | १५ | पूर्वत्रपर | पूर्वपर |
| " | १६ | प्रसङ्स्तु | प्रसङ्गस्तु |
| " | २० | व्यापर | व्यापार |
| " | २१ | एकाऽत्रस्त्रतःसिच्त्वा | एकाच्त्रस्यस्त्रतःसि- |
| १३२ | १५ | दोश्चदोषंश्चेति | ककुच दोषश्चेति |
| १३३ | १ | 'चकृते ककुच्छब्देन | समाहारद्वन्द्व' इदमनपेक्षितम् |
| १३३ | २१ | दिगित्यस्योर्द्ध-वस्तुतस्तु द्विवचने एकशेष इति | समाहारद्वन्द्वस्य ककुदोषशब्दयो-मूलाभिप्रायः । |
| २१९ | २२ | वोत्र | वात्र |

श्रीगणेशाय नमः ।

# फक्किकाप्रकाशः ।

संत्रास्य मास्यकञ्जालिं हरिं हृदयपङ्कजे(१) ।
सिद्धान्तकौमुदीगूढफक्किकार्थः प्रकाश्यते ॥ १ ॥
गर्गवंशावतंसो यो वैयाकरणकेसरी ।
उपाध्यायोपनामेन्द्रदत्तस्तस्यैव सत्कृतिः ॥ २ ॥

(२)"एतदेकमाचार्यस्य मङ्गलार्थं मृष्यताम्, मा-

---

(१) मायाः लक्ष्म्या आस्यरूपं यत् कञ्जं तस्मिन्नलिर्भ्रमरस्तं हरिं विष्णुं हृदयरूपपङ्कजे कमले संत्रास्य सम्यग् वासयित्वा एकतानमनसा ध्यात्वेत्यर्थः । सिद्धान्तकौमुद्या गूढा दुर्बोधार्था याः फक्किकास्तासामर्थः प्रकाश्यते विव्रियते इत्यर्थः ।

(२) मङ्गलाचरणस्य प्रामाणिकत्वख्यापनार्थं वृद्धिसूत्रस्थभाष्यमुपन्यस्यति–एतदेकमिति । तत्र हि "वृद्धिरादैज्"इत्यत्र संज्ञासूत्रत्वस्थापनोत्तरं कस्य सञ्ज्ञात्वं कस्य संज्ञित्वमित्यपेक्षायामनेकपक्षप्रदर्शनोत्तरं पूर्वोच्चारितः सञ्ज्ञी परोच्चारिता सञ्ज्ञेति पूर्वोच्चारितस्य सञ्ज्ञित्वम् "अदेङ् गुणः"इत्यादौ समन्वितमुक्त्वा प्रकृतसूत्रे तन्न्यायाद्वृद्धिशब्दस्य संज्ञित्वे प्राप्ते उक्तमेतदित्यादि । उक्तनियमविरोधि सञ्ज्ञायाः प्रकृते पूर्वमुच्चारणमाचार्यस्य मृष्यतां सोढव्यम् यतो मङ्गलप्रयोजनायाचार्य उक्तनियमं त्यक्तवान् इत्यादिर्भाष्यार्थः । मङ्गलकरणफलानि स्पष्टमेवोक्तानि भाष्ये मङ्गलादीनीत्यादिना । अनेन च भाष्येण प्रसिद्ध्यादिकामिनाऽवश्यं मङ्गलं कर्तव्यमिति ध्वनितम् ।

ङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं वृद्धिश-ब्दमादितः प्रयुङ्क्ते मङ्गलादीनि मङ्गलमध्यानि मङ्गला-न्तानि च शास्त्राणि प्रथन्ते वीरपुरुषकाणि च भव-न्त्यायुष्मत्पुरुषकाणि चाध्येतारश्च वृद्धियुक्ता यथा स्युः''इति भाष्यप्रामाण्यान्मङ्गलमारचयति—मुनी-ति। नन्वस्यां पाणिन्युक्तायां चतुर्दशसूत्र्यामक्षरस-माम्नाय(१) इति व्यवहारानुपपत्तिराम्नायसमाम्नायश-ब्दयोर्वेदे विदितत्वादित्यत आह माहेश्वराणीति। इमा-नि महेश्वरादागतानीत्यर्थः। शास्त्रं प्रणिनीषुणा पाणि-निना (२)वरिवसितमहेश्वरप्रसादाल्लब्धानीति फलितम्। (३)एवं चैतादृशानुपूर्वीका श्रुतिरेवैषा। एतन्मूलकत्वा-दस्य व्याकरणस्य वेदाङ्गत्वमुच्यते मुखं व्याकरण-मित्यादिना।

नृत्तावसाने नटराजराजो ननाद ढक्कां (४)नव-पञ्चवारम्।

---

(१) येनाक्षरसमाम्नायमधिगम्येति शिक्षावाक्ये चतुर्दश-सूत्रीमुद्दिश्य समाम्नायशब्देन व्यवहाराच्छङ्केति बोध्यम्।

(२) वरिवसितः पूजितः।

(३) भाष्ये अनुबन्धकरणार्थो वर्णानामुपदेश इत्यनुबन्धानां कार्यतोक्तेस्तद्व्यतिरिक्तस्याक्षरसमूहस्य नित्यत्वं ध्वनितम्। नित्य-त्वादेवानादित्वम्। एवञ्चानादिरयं समूहः श्रुतिरित्यर्थो बोध्यः।

(४) चतुर्दशवारमित्यर्थः।

उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे(१) शिव-सूत्रजालम् ।

येनाक्षरसमाम्नायमित्यादिकमप्यत्र मूलम् ।

यद्यपि "सोऽयमक्षरसमाम्नायो वर्णसमाम्नायः पुष्पितः फलितश्चन्द्रतारकवत्प्रतिमण्डितो वेदितव्यो ब्रह्मराशिः सर्ववेदपारायणफलावाप्तिश्चास्य ज्ञाने भवति मातापितरौ चास्य स्वर्गे लोके महीयेते" इति भाष्येण, इदं ब्रह्मतत्त्वमेव शब्दरूपतया प्रतिभाति एतत्पठने सर्ववेदाध्ययनकृतस्य पुण्यस्य यत्फलं तत्प्राप्नोतीति माहात्म्यातिशयः शास्त्रस्यैतत्फलाख्यान-द्वाराऽऽख्यायत इत्यादिकैयटेनात्रास्याश्चतुर्दशसूत्र्याः फलमुक्तम्, तथाऽप्यदृष्टं तत् । "अथ किमर्थो वर्णाना-मुपदेशः, वृत्तिसमवायार्थः, का पुनर्वृत्तिः, शास्त्रप्र-वृत्तिः" इति भाष्येण पाणिनेर्लाघवेन(२) शास्त्रप्रवृत्त्य-

---

(१) विमर्शे विचारे क्रियमाणे सति एतत्सूत्रजालं प्रादुरा-सेति शेषः ।

(२) केचित्तु वृत्तिरादिरन्त्येनेत्यनेन बोधिता शक्तिः प्रत्या-हारनिष्ठा तस्याः समवायः सम्यक् ज्ञानम् अर्थः प्रयोजनं यस्येत्यर्थः । असति वर्णोपदेशे तस्या यथावज्ज्ञानाभावादित्याहुः ।

परे तु प्रत्याहारसिध्युत्तरं तन्निष्ठशक्तिग्राहकत्वेन प्रवर्तमाना-दिरन्त्येनेतिसूत्रबोधितशक्तेर्यथार्थज्ञानफलकताऽक्षरसमाम्नायस्य व-क्तुमशक्या । असति समाम्नाये हलन्त्यमित्येतस्याप्रवृत्त्यास्त्व-

र्थः, स चाणादिप्रत्याहारद्वारेति कैयटेन दृष्टं प्रत्याहार एव मुख्यं फलमित्याशयेनाह **अणादिसंज्ञार्थानीति**। अण् आदिर्यासामिति (१) तद्गुणसंविज्ञानो बहुव्रीहिः, ताश्च ताः संज्ञाश्च, ता एवार्थः प्रयोजनं येषां तानि, अणादिसंज्ञाभ्य इमानीति वा । संज्ञार्थत्वनिष्पत्तये तत्प्रकारमनुक्रामति **एषामिति** । चतुर्द-

---

रूपतः प्रत्याहाराणामेवासिद्धेः । अतः प्रत्याहारार्थत्वं वर्णोपदेशस्य वक्तव्यम् । तत्फलचिन्तायान्तु लाघवेन शास्त्रप्रवृत्तिरेव पुरः स्फुरिता भवतीति तस्या एवात्र वृत्तिसमवायशब्देन ग्रहणौचित्यमित्याहुः ।

(१) तस्यान्यपदार्थस्य गुणा विशेषणानि कार्यान्वयितया संविज्ञायन्ते यत्रेति तदर्थः । 'वर्तिपदार्थानां कार्यान्वयित्वे तद्गुणत्वम्' इत्युक्तलक्षणस्य 'भोजय नागयज्ञोपवीतिनम्' इत्यत्र वस्तुतस्तद्गुणसंविज्ञाने बहुव्रीहौ नागादेर्भोजनानन्वयेन व्यभिचरितत्वात् 'संयोगसमवायान्यतरसम्बन्धेनान्यपदार्थान्वयित्वे तद्गुणत्वमन्यत्रातद्गुणत्वम्' इति तत्त्व स्वीकार्यम् । एवं च नागादीनां संयोगेनान्यपदार्थसम्बन्धित्वेन न व्यभिचारः । अतद्गुणसंविज्ञानोदाहरणं तु दृष्टसागरमानयेत्यादि बोध्यम् । वस्तुतस्तु वर्तिपदार्थानां विशेषणतयाऽन्यपदार्थान्वयित्वे तद्गुणत्वं उपलक्षणतयाऽन्वयित्वे अतद्गुणत्वमिति तल्लक्षणं बोध्यम् ।

एवं च दृष्टसागरमित्यत्र सागरपदार्थस्यान्यपदार्थ उपलक्षणत्वेन विवक्षणात्तस्यातद्गुणत्वम्, लम्बकर्णमित्यत्र कर्णपदार्थस्य विशेषणतया विवक्षणात्तस्य तद्गुणत्वम् । अविद्यमानं सदितरव्यावर्तकमुपलक्षणम्, यथा काकवन्तो देवदत्तस्य गृहा इत्यत्र काकोऽविद्यमानोऽपि देवदत्तगृहं गृहान्तरेभ्यो व्यावर्तयतीत्युपलक्षणम् । विद्यमानं सद् व्यावर्तकं विशेषणम् इत्यनयोर्भेदो बोध्यः । एवंच चित्रगुरित्यत्र विवक्षाभेदादुभयविधत्वं भवतीति बोध्यम् ।

शसूत्राणामन्तिमा वर्णा "हलन्त्यम्" इति वक्ष्यमाण-सूत्रेणेत्संज्ञाः स्युरित्यर्थः । एतद्वाक्यार्थेनाप्राप्तेराह अकारश्चेति । (१)रप्रत्याहारार्थमनुनासिकत्वेन प्रतिज्ञातः "उपदेशेऽज्" इत्यनेनेत्संज्ञक इत्यर्थः । ननु हयेत्यादावकारोच्चारणेनाकारविशिष्टस्यैव तत्तत्प्रत्याहारेषु ग्रहणम् 'रागो हिनस्ति स्म रावणम्' इत्यादौ "हशिच" इत्युत्वादिकं न स्यादत आह हकारादिष्विति । "न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणमपि सम्भवति" इति "उच्चैरुदात्तः" इति सूत्रस्थभाष्येण प्राथम्यादकारेणैव हल उच्चारिता न तु तत्राकारो विवक्षित इति भावः ।

---

(१) अत एव "उरण् रपरः" इत्यत्र रशब्देन रलयोर्ग्रहणादणो लपरत्वस्यापि तेन बोधनात्तवल्कार इत्यादावान्तरतम्याल्लपरत्व-सिद्धिः, अन्यथा सूत्रे लपरत्वाबोधनाद्रपरत्वं दुर्वारं भवेदित्यर्थः । अत्र च तुल्यास्यसूत्रस्थस्य "लपरत्वं वक्ष्यामि" इति भाष्यस्य लपरत्वं व्याख्यास्यामीतिव्याख्यानपूर्वकं मूलोक्तविधया रप्रत्याहार-साधकस्तत्रत्यः कैयटो मानम् ।

केचित्तु लणकारस्यानुनासिकत्वे रप्रत्याहारसत्त्वेच तेनैव सिद्धौ "अतो लान्तस्य" इत्यत्र लकारोच्चारणं व्यर्थं स्यात् । तस्माद्रप्रत्याहारस्तदर्थञ्चाकारस्येत्त्वमप्रामाणिकमित्याहुः ।

परे तु लकारोच्चारणं सर्वत्र रपदं रलोभयतात्पर्येण नोच्चरितमित्यर्थस्य ज्ञापकम् । अतएव प्रफुल्तशब्दादाचक्षाणण्यन्तात्क्विपि सुपि लोपेच प्रफुलिति सिध्यति तकारस्य संयोगान्तलोपात् । अन्यथा "रात्सस्य" इत्यत्रापि प्रत्याहारग्रहणे लकारात्परस्य सस्यैव संयोगान्तलोपनियमे तकारलोपाभावेनोक्तरूपासिद्धिः स्यादिति दिगित्याहुः ।

हयेत्यादावकारोच्चारणेन तस्य हल्त्वप्रसङ्ग इत्यवतरणं पुनरारम्भम् । हकारादिवत्सकृदुच्चारयितव्ये पुनः पुनरुच्चारणेन हल्त्वप्रसङ्गभङ्गादित्याहुः । हल्संज्ञायामिति । आभ्यां सूत्राभ्यां हल्मात्रसञ्ज्ञायां सिद्धायामित्यर्थः । सप्तम्यन्तेनेह संज्ञा सूचितेति भावः ।

अयं भावः—"न विभक्तौ"इत्यादीनां सार्थक्योपपत्तये "हलन्त्यम्"इत्यस्य 'उपदेशेऽन्त्यं हलित्संज्ञं स्याद्' इति वाक्यार्थ आवश्यकः(१)।स च वाक्यार्थबुद्धौ पदार्थबुद्धिः कारणमिति हल्पदार्थबोधमन्तरा बाधितः । हल्पदार्थबोधश्च-"आदिरन्त्येन"इत्येतद्वाक्यार्थपरतन्त्रः, 'आदिरन्त्येन'इत्येतद्वाक्यार्थबोधं विना बाधितः ।हल्पदार्थबोधश्च 'हलन्त्यम्'इत्येतद्वाक्यार्थाधीन इति "हलन्त्यमादिरन्त्येन"इत्यनयोः परस्परापेक्षत्वेनान्योन्याश्रयदोष(२)-आपद्यते, "तदितरेतराश्रयं भवतीतरेतराश्रयाणि कार्याणि न प्रकल्पन्ते"इत्युक्तं भाष्ये ।

अत्र समर्थयन्ते—"उपदेशे इदन्त्यम्, अच्, अनुनासिकः" इति सूत्रत्रयमस्तु । उपदेशेऽन्त्यमित्स्या-

(१) निषेधस्य प्राप्तिपूर्वकत्वेन "न विभक्तौ" इत्यस्य सार्थक्याय तत्रेत्त्वमावश्यकम् । तच्च औपदेशिकान्त्यहल इत्त्वं विनाऽनुपपन्नमिति तदर्थः ।

(२) अन्योन्याश्रयत्वं च परस्परं स्वज्ञप्त्यधीनज्ञप्तिकत्वम् ।

दिति प्रथमयोगार्थः । सामर्थ्यादन्त्यमिति न सम्बध्यते, तेन उपदेशेऽजित्संज्ञ इति द्वितीयसूत्रार्थः । अजित्यनुवर्त्तते, पूर्वेण सिद्धे नियमार्थस्तृतीयो योगः, 'अच्चेदिद्भवति तर्ह्यनुनासिक एव' इति तदर्थः, तेन रुप्रभृतौ न दोषः । 'अनुनासिकश्चेदिद्भवति तर्ह्यजेव'इति विपरीतनियमस्तु न भवति 'मिदचोऽन्त्यात्परः'इति ज्ञापकात् । ननु सूत्रभेदे ऽदृष्टफलहानिः पारायणादौ स्यात्तदुक्तं भाष्ये "सिध्यत्येवमपाणिनीयन्तु भवति" इति । नैष दोषः । "सूत्रभेदन्तमुपाचरन्ति यत्र तदेवान्यत्क्रियते भूयो वा, यदि तदेवोपसंहृत्य क्रियते नासौ सूत्रभेदः" इत्युक्तम् "अच उपसर्गात्तः"(१) इत्यत्र सप्तमे भाष्ये । एवं च हल्ग्रहणं न कर्तव्यमेवमन्योन्याश्रयदोषश्चोद्धृत इत्येके ।

तदसत् । योगविभागनियमज्ञापकाश्रयणे प्रतिपत्तिगौरवदोषानुद्धारात् । न हि वर्णाभिव्यक्तिजनककण्ठाद्यभिघातगौरवमेवादर्तव्यम् , न तु ज्ञानजनकम-

---

(१) सूत्रभेदं तं वर्णयन्ति यत्र पूर्वमेव सूत्रमन्यूनानतिरिक्तं प्रकारान्तरेणारच्यते, मात्रादिगौरवविशिष्टं वा क्रियते । यत्र पूर्वसूत्रापेक्षया लघुतरो न्यास उपलक्ष्यते नासौ सूत्रभेद इति भाष्यार्थः । आनुपूर्वीभेदेन सूत्रस्य भिन्नत्वेऽपि सदोषत्वेनोपन्यसनानर्हतेति सन्तात्पर्यम् ।

त्तोव्यापारगौरवमिति राजाज्ञाऽस्ति ।

अपरे तु "आदिरन्त्येन" इति सूत्रेणापेक्षिते-ज्(१) ज्ञानार्थे "हलन्त्यम्" इत्यस्य न वाक्यार्थः कारणम् । किन्तु सह आ समन्ताद् एति गच्छतीति सहेता मध्यमो वर्णः, सोऽन्त्येनादिः संज्ञेति तदर्थेनादोषात् । एवं च नान्योन्याश्रय इति ।

तदप्यकिञ्चित्करम् । अन्योन्याश्रयतत्परिहारादीन् वदता भगवता "इट किट कटी" इत्यत्र प्रश्लिष्टादीङि-ण्भ्यां(२) च सहाङ्युपपदे तृजभावबोधनाद्, योगमर्यादयोक्तार्थालाभाच्च ।

हयवरित्यादेरावृत्त्या शषसरित्यन्तं समुदायमुद्दिश्य हलित्यनेन हल्संज्ञा विधेया, नातोऽन्योन्याश्रय इत्यपि केचित् । तदतीव दोषकरम् । दशसूत्रावृत्तौ गौरवतमत्वात् ।

तस्मादनेकक्लेशकल्पनापेक्षया न्याय्यत्वेनावृत्त्या स दोषः परिह्रियते । पुनरनुक्रमणमावृत्तिरित्यावर्तितस्य "हलन्त्यम्" इत्यस्य "उपदेशेऽज्" इत्यस्मादित-

(१) इत्पदार्थज्ञानार्थमित्यर्थः ।

(२) वस्तुतस्त्विण्ग्रहणमयुक्तम्, ततस्तृचि गुणे सह आ एतेत्यत्र "एत्येधत्यूठ्सु" इत्यस्य प्रवृत्तौ सहैतेति रूपसिद्धेस्तदभावबोधनस्यायुक्तत्वादिति बोध्यम् ।

मनुवर्त्य चतुर्दशसूत्राणामन्तिमस्य हलित्यस्यान्त्यो लकार इत्संज्ञः स्यादित्यर्थः(१)। न ह्यत्र "आदिरन्त्येन"

---

(१) एवञ्च "हलन्त्यम्" इत्यत्र हलोऽन्त्यमिति षष्ठीतत्पुरुष इति भावः। नचात्र हल इति षष्ठ्या अनिर्दिष्टार्थकत्वेन "षष्ठी स्थानेयोगा" इत्यस्य प्रवृत्तौ हल्स्थानिकान्त्यमित्यर्थः स्यादिति वाच्यम्। गुणानां च परार्थत्वादसम्बन्धः समत्वात् स्यादिति न्यायेन तस्यात्राप्रवृत्तेः। यदि तु गुणानामपि परस्परं संबन्धो 'गुणः कृतात्मसंस्कारः प्रधानमनुरुध्यते' इति न्यायादिति विभाव्यते तदा "ऊदुपधाया गोहः"इत्यादाविवाप्रवृत्तिर्बोध्या। साकाङ्क्षार्थबोधकपदसमभिव्याहृतषष्ठ्या आकाङ्क्ष्यमाणसम्बन्धबोधकत्वात्। प्रकृते चान्त्यपदार्थस्य समुदायार्थे नित्यसाकाङ्क्षत्वेन समुदायेन सहान्त्यपदार्थस्याकाङ्क्ष्यमाणनिरूप्यनिरूपकभावसंबन्धबोधकत्वंहल्पदोत्तरषष्ठ्या इति निर्धारितार्थकत्वात्तस्याप्रवृत्तिरिति। अन्त्यत्वं च समुदायविशिष्टत्वरूपम्। वैशिष्ट्यं च स्वघटकत्वस्वघटकवर्णप्रागभावाधिकरणक्षणावृत्त्युत्पत्तिकत्वरूपसम्बन्धद्वितयेन। घटकत्वमपि विषयतासम्बन्धावच्छिन्नस्वव्यापकत्वसम्बन्धेन समुदायविशिष्टत्वरूपम्। यथा राम इति समुदायविशिष्टत्वाद्रेफस्तद्घटकः। तथाहि यत्र ज्ञाने विषयतासम्बन्धेन रामशब्दस्तद्वृत्तिर्विषयतासम्बन्धावच्छिन्नप्रतियोगिताको ऽभावो न रेफस्य किन्तूदासीनस्येति प्रतियोगित्वमुदासीनस्याप्रतियोगित्वं रेफस्येति लक्षणसमन्वयः। एवं रामशब्दे मकारोत्तराकारस्य तद्घटकत्वात्, तद्घटकमकारादिवर्णप्रागभावानामकारोत्पत्तिक्षणे विनष्टत्वात्प्रागभावाधिकरणक्षणावृत्त्युत्पत्तिकत्वात् उभयसम्बन्धेन वैशिष्ट्यादन्त्यत्वमिति ज्ञेयम्।

अन्त्यलक्षणे आद्यसम्बन्ध उदासीने तत्त्ववारणाय। अन्त्यश्चानन्त्ये तत्त्ववारणायेत्यूह्यम्।

केचित्तु हलिति सूत्रेऽन्त्य लकारस्तस्यैव गुणभूतस्य हलिति निर्देशः। तथाचान्योन्याश्रयाभावः। उपदेशइतिलकारस्येत्संज्ञासिद्धौ प्रसिद्धेत्सञ्ज्ञकलकारमाश्रित्यादिरन्त्येनेत्यस्य निरपेक्षवाक्यार्थबो-

धात्। न चोपदेश इत्यस्यापि हलन्त्यम् आदिरन्त्येनेत्येतद्बोधपूर्वम-बोधाच्चक्रकापत्तिरिति वाच्यम्। लकारस्य लृदित इति ज्ञापकेनोपदेशेऽजित्यनपेक्ष्यैवेत्त्वासिद्धेः।

अथ वा णलो लकारस्य लकारेत्संज्ञाज्ञापकत्वेनेत्पदार्थप्रसिद्ध्याऽन्योन्याश्रयाभावः। स हि लित्स्वरार्थः। असतीदानीं तस्येत्त्वे-तत्प्रयोजनानुपपत्त्या तज्ज्ञापनात्। श्रवणार्थत्वं त्वस्य वक्तुमशक्यम्। हल्ङ्यादिसूत्रे णल्व्यावृत्तये कृतस्य द्वितीयहल्ग्रहणस्य वैयर्थ्यापत्तेः। अपृक्तत्वादेव तद्व्यावृत्तिसिद्धेः। नच भवित् आ इत्यत्राहलो डादेशस्य लोपवारणार्थं हल्ग्रहणमिति भ्रमितव्यम्। स्वादिभिः प्रकृतेराक्षेपात्, आदेशप्रकृतित्वस्य भविदित्यत्रासत्त्वेनोक्तस्थलेऽतिव्याप्त्यप्रसक्तेः। नचैवं या सेत्यादौ सुलोपानापत्तिरिति वाच्यम्। एकदेशविकृतन्यायेन तत्सिद्धेः। नचैवं यः स इत्यादावतिव्याप्तिरिति वाच्यम्। या सेत्यत्र पूर्वान्तवद्भावे याद्इत्यस्य आनुमानिकस्थान्यादेशभावेन 'य अ' इत्यस्मिन्प्राप्तहलन्तप्रकृतित्वस्य सत्त्वेनेष्टसिद्धेः। न च हलन्तप्रकृतित्वस्य अशास्त्रीयत्वेन स्थानिवत्सूत्रेणानतिदेशः। किञ्च तस्यान्यनिरूपितत्वेन मातृवद्वर्तितव्यमित्यादौ पितृपत्नीत्ववदतिदेशेनानतिदेशः। अत एव अद्वृत्तितासौनित्यानिट्त्वस्य घसावनतिदेशाज्जघसिथेत्यत्र नित्येट्सिद्धिरिति वाच्यम्। अशास्त्रीयस्यापि तेनातिदेशस्वीकारात्। अत एव लोलुवइत्यादौ लघूपधगुणाप्रवृत्तिः। अन्यथोवङः स्थानिपूर्वत्वेनादृष्टत्वात्तस्येको गुणे पूर्वकार्याभावाद् यङ्लोपस्य स्थानिवत्वाप्रवृत्तौ स दुर्वारः। ममतु लूकारवृत्तिस्थानिपूर्वत्वस्यादेशे उवङि अतिदेशेन तस्यापि स्थानिपूर्वत्वात्तत्कार्ये स्थानिवत्त्वप्रवृत्त्येष्टसिद्धिः। अत एवनान्यनिरूपितधर्मानतिदेशः शास्त्रे। उक्तरूपासिद्धिप्रसङ्गात्। जघसिथेत्यादि तु अनित्यत्वात्साधनीयम् अनभिधानं वा समाश्रयणीयम्। इति वाच्यम्। यस्स इत्यत्रोक्तरीत्या दोषानुद्धारात्। एवं च न णलो लकारस्येत्त्वज्ञापकतेति चेल्लितीति सूत्रस्यैवोक्तज्ञापकत्वात्। नच तस्य लशक्वतीत्संज्ञकलकाराद्यवयवकल्युडादौ चरितार्थत्वेन न ज्ञापकत्वमिति वाच्यम्। तावताऽपि ण्वुलादिसाधारणेत्त्वज्ञानस्य जातत्वेनोक्तज्ञापकस्य सुस्थत्वात् इत्याहुः।

इत्येतद्वाक्यार्थापेक्षाऽस्ति, ततश्चेत्पदार्थज्ञाने "आदिरन्त्येन" इत्येतद्वाक्यार्थसाम्राज्यमित्येवं परिहृतोऽन्योन्याश्रयः ।

उपदेश आद्योच्चारणमिति । 'उपस्याद्यार्थकत्वाद्दिशेरुच्चारणक्रियत्वाद्' इतिभाष्याद्युक्तेरिति भावः । प्रथममुच्चारणं प्रत्यासत्त्यैतच्छास्त्रप्रवर्तकाचार्याणामेव । आद्यत्वं चात्राज्ञातस्वस्वरूपज्ञापकत्वमित्यधिकं नागेशीये(१) । ननु शास्त्रेऽनुनासिकोच्चारणाभावात्तत्त्वज्ञानं दुर्लभमत आह प्रतिज्ञेति । प्रतिज्ञायत इति प्रतिज्ञा(२) ।

---

परे तु अन्त्यमित्येवावर्तनीयम् । तेनान्त्यमात्रस्येत्संज्ञायां हलन्त्यमिति नियामकं हल् चेदिद्भवति तर्ह्यन्त्यमेवेति । लशक्वतीत्यादीनां तु नियमान्निवृत्तिप्राप्तौ विधायकत्वान्न दोषः ।

यद्वा हल्संज्ञाया आदिरन्त्येनेत्येतत्प्रवृत्तिव्यतिरेकेण सिद्धौ यत्नः कार्यः । स च हलन्त्यमित्यत्र हल् इति योगं विभज्य उपदेशेऽजनुनासिक इत्यतो विभज्यानु इत्यनुवर्तनीयम् । तत्र आङा सहाकारस्याव्ययीभावेऽमिति रूपम्, अभिविध्यर्थकेनाङा औकारस्याव्ययीभावे च उइति रूपम् । अनयोः समाहारद्वन्द्वे नपुंसकत्वे उइति रूपम् अकारादारभ्यौकारपर्यन्ताक्षरसमाहारार्थकं स्वीकृत्य नञ्समासे अनु इति । अकाराद्यौकारान्तसमाहारभिन्नमुद्दिश्य हलित्यनेन हल्संज्ञाविधानान्नान्योन्याश्रय इत्याहुः ।

(१) प्राथम्यस्योच्चारणे बोधे चासम्भवाद्विषयतावृत्ति तद्ग्राह्यम् । तच्च स्वनिरूपकबोधप्राक्कालिकबोधानिरूपितत्वरूपं बोध्यम् ।

(२) प्रतिज्ञाशब्दः कर्माङन्त इति भावः ।

यत्तु भावाङन्तं तं स्वीकृत्य कर्मणि लक्षणेति मतं तत्तुच्छ-

अनुनासिकस्य भाव आनुनासिक्यम्। प्रतिज्ञाऽऽनुनासिक्यं येषां ते पाणिनीयाः पाणिनिप्रभृतिप्रोक्ताः वर्णास्ते प्रतिज्ञाविषयानुनासिक्यवन्त इत्यर्थः। प्रतिज्ञा चायमेवमिति कथनम्,(१)वर्णानां तत्त्वज्ञापकेदितोनुमित्यादिव्यवहारश्चेत्यतस्ताभ्यामनुनासिकत्वज्ञानं सुलभमिति भावः।

ये तु पाणिनिशास्त्राध्येतारः प्रतिज्ञानुनासिक्यवन्त इत्याहुः, ते मान्याः, आनुनासिक्यधर्मस्य वर्णनिष्ठत्वादिति दिक्।

"उरण् रपरः"इत्यत्र लकारग्रहणाय "लपरश्चेति वक्ष्यामि"इति भाष्यकृत्प्रतिज्ञायां कुत्रचिदपि तद्वचनानुल्लेखाद् व्याख्यास्यामीति भाष्यकर्त्तुराशयमनुरुध्य व्याख्यायां रप्रत्याहारोऽनुक्रान्तस्तुल्यास्यसूत्रे कैयटेन, तत्प्रकारमत्राप्याह लण्सूत्रस्थेति। अत्रानु-

---

म्। लक्षणां विना शक्त्यैव निर्वाहात्। व्याकरणस्मृतिविरोधाच्च। नचानुशासनस्य भावकर्मोभयार्थबोधकत्वेऽपि लाघवाद्भावे शक्तिः, कर्मणि लक्षणा, लाक्षणिकानुशासकत्वमेवानुशासनस्येति वाच्यम्। व्याकरणस्मृतेः शक्तिग्राहकत्वस्याभियुक्तोक्तस्य भङ्गापत्तेः। लाघवानुरोधे च लः कर्मणीत्यस्यापि कृतौ शक्तिः, आश्रये लक्षणापत्तेः। इष्टापत्तिस्तु कर्तुमशक्या। सिद्धान्तभङ्गापत्तेरिति।

(१) "वेरपृक्तस्य"इत्यत्र दर्विरविशब्दावयववेर्लोपमाशङ्क्योक्तमनुनासिकपरस्य वेर्ग्रहणमिति तेन क्विनादिषु इकारोऽनुनासिक इति ज्ञायते। एवमन्यत्र बोध्यम्।

नासिकत्वेन प्रतिज्ञातस्तिष्ठतीति स्थः, स चासावन्त्यवर्णश्च तेनेत्यर्थः । प्रत्याहारस्तु "आदिरन्त्येन" इत्यनेनेति । तद्वाक्यार्थं सूचयति सहेत्यादि । ननु रलयोरिति न्यूनम्, टकारस्य(१) मध्यगत्वेन रटलानामित्युचितमत

(१) आदिरन्त्येन सहेतेत्यत्र बोध्यस्यानिर्देशाद्वाक्यार्थाबोधे प्राप्ते आद्यन्तशब्दजन्यबोधविषययोराद्यन्तावयवयोः समुदायांशे नित्यसाकाङ्क्षत्वेन तं विनाऽनुपपन्नत्वेन च 'येन विना यदनुपपन्नं तत्तेनाक्षिप्यते' इति न्यायेनाक्षिप्तस्य समुदायस्य बोध्यत्वेन स्वीकारः । तथाचान्त्यसहित आदिराद्यन्तघटितसमुदायबोधक इत्यर्थः ।

यत्तु अवयवत्वावच्छिन्नविषयकबोधजनकाद्यन्तशब्दाभ्यामवयविनः समुदायस्याक्षेप इति ।

तदयुक्तम् । शब्दस्य शब्दान्तरानवयवत्वात्, अवयव्यंशे साकांक्षत्वाभावादनुपपत्त्यभावाच्च तेनावयव्याक्षेपासम्भवात् ।

तस्य समुदायस्य लक्ष्ये प्रयोगाभावेन समुदायेऽचरितार्था संज्ञा 'समुदायेऽचरितार्थस्यावयवोपकारिता' इति न्यायेनावयवेष्ववतरन्ती मध्यगेषु विश्राम्यति नत्वाद्यन्तयोः शक्तिग्रहकालेऽप्याद्यन्तयोः संज्ञास्वरूपान्तःपातितया पारार्थ्यनिर्णयात् तयोरसंज्ञित्वात् । तत्रान्त्यस्य असंज्ञित्वस्येष्टत्वेऽपि आदेः सङ्ग्रहाय स्वंरूपमित्यतः स्वमित्यनुवर्त्य वाक्यभेदेन स्वस्यापि बोधस्वीकारः । तत्र स्वशब्देन आदिरेव गृह्यते न त्वन्त्यः । सूत्रेऽन्त्येनेत्यप्रधानतृतीया निर्देशात् । सर्वनाम्नां चोत्सर्गतः प्रधानपरामर्शकत्वात् ।

स्यादेतद् । अत्र सूत्रे हि समुदाय आक्षिप्यते । तथाच कथं तस्य शाब्दे भानम् आक्षिप्तस्य शाब्दे भानानङ्गीकारात् । अत एव घटं पश्येत्यत्र घटशब्दादेकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमितिन्यायेन समवायसम्बन्धेन घटशब्दसम्बन्धिन आकाशस्योपस्थितावपि न शाब्दबोधे भानम् इति नोक्तवाक्यादाकाशकर्मकं दर्शनमिति शाब्दबोधः । इति चेन्न । उत्थिताकाङ्क्षास्थले आक्षिप्तस्यापि शाब्दबोधस्वीकारात् । उत्थिताकाङ्क्षा च यत्रैकसम्ब-

आह प्रत्याहारेष्विति । प्रत्याह्रियन्तेऽनेके वर्णाः सङ्क्षिप्यन्ते यत्रेति बाहुलकादधिकरणे घञ्(१)। ननु प्रकृतिप्रत्ययार्थमात्रबोधकत्वरूपया योगशक्त्याऽकारादिष्वपि दीर्घादीनां सङ्क्षेपात्तेष्वपि तत्संज्ञात्वापत्त्याऽतिव्याप्तिः । मैवम्। प्रकृतिप्रत्ययार्थान्वितसमुदायार्थबोधकत्वरूपयोगरूढशक्तेर्विवक्षितत्वेनाणादिष्वेव तत्प्रसक्तेः । निर्देशादिति । इत्संज्ञाकानां ग्रहणे तत्रानुनासिकादौ यणाद्यापत्तिर्दोष इति भावः(२)। न चेत्त्वविधानसामर्थ्यान्न यणिति वाच्यम् । तस्यापि प्रत्याहारेष्वनुबन्धाग्रहणज्ञापनद्वारैव यणभावकल्पकत्वौचित्यात्।साक्षाच्छास्त्रबाधकत्वकल्पनापेक्षयाऽस्यार्थस्यौचित्यात्। आदिना "पापाणके कुत्सितैः""एकः पूर्वपरयोः"-

---

न्धिज्ञानं सम्बन्ध्यन्तरज्ञानं विना प्रामाणिकं न भवति तत्र स्वीक्रियते । अस्ति च प्रकृते अवयवत्वज्ञानप्रामाण्यार्थावयविज्ञानापेक्षेति आक्षिप्तस्यापि समुदायस्य शाब्दे भानमिति । एवं च प्रत्याहारस्य आद्यन्तघटितसमुदायघटकमध्यगबोधकत्वेन टकारस्यापि मध्यगत्वेन न्यूनत्वमिति शङ्का बोध्या ।

(१) भावघञन्तादर्श आद्यच्तु बाहुलकादविशिष्ट इति नोक्तः।

(२) नन्वत्र नासाक इति स्थिते ककारस्याच्त्वात् यस्येति लोपापत्तिरेव वक्तव्या । नच केऽण इति ह्रस्वेन येन नाप्राप्तन्यायेन लोपबाधः । नैषादकर्षुक इत्यादौ ह्रस्वस्य चारितार्थ्येन येननाप्राप्तिन्यायाप्रवृत्तेः, इति चेन्न । सवर्णदीर्घस्य यण्गुणापवादवदत्रापि ओर्गुण इत्यस्य प्राप्त्याऽन्यतरत्वेन व्यापकत्वमाश्रित्य बाधकत्वमित्याशयादिति दिक् ।

इत्यादिसंग्रहः। ननु "प्रत्याहारेऽनुबन्धाना कथमज्ग्रहणेषु न" इति भाष्योक्तवार्त्तिके प्रत्याहारशब्दस्याक्षरसमाम्नाये प्रसिद्धेः प्रत्याहारेष्वितामित्यनुपपन्नमत आह आदिरन्त्येनेति। न च वार्त्तिकेऽसङ्गतिः तात्स्थ्यात्ताच्छब्द्यमित्यभिप्रायात्(१)। इत्थं च रप्रत्याहारोपपत्तिः।

अन्ये तु सति रप्रत्याहारे "अतो ल्रान्तस्य" इति सूत्रे लकारासङ्गतिः(२)। किञ्च यण्घटितसूत्रेषु बहुष्व-

---

(१) यथा गृहशब्दस्य दारेषु प्रवृत्तिस्तद्वदित्यर्थः।

(२) नचोक्तलकारोच्चारणेन रप्रत्याहारोऽनित्य इति ज्ञाप्यत इति रात्सस्येत्यादौ न लकारग्रहणमिति वाच्यम्। रप्रत्याहारोऽनित्य इत्यस्य रशब्दोऽनित्य इति वा, तन्निष्ठा शक्तिरनित्येति वा, शक्तिज्ञानाधीनौ उपस्थितिशाब्दबोधावनित्याविति वाऽर्थः ?। तत्राद्ये वैयाकरणसिद्धान्तभङ्गः। तैः शब्दस्य नित्यत्वस्वीकारात्। अतएव भाष्ये—

सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः।
एकदेशविकारे हि नित्यत्वं नोपपद्यते॥ इति

आनुमानिकादेशस्वीकारः। अत एव सर्वसूत्राणामिको यणचीत्यादीनां शब्दसाधुत्वार्थकत्वम्। एतेन शब्दनित्यत्वे शास्त्रवैयर्थ्यापत्तिः परास्ता। लक्ष्यसाधुत्वार्थं तस्यावश्यकत्वात्।

नापि द्वितीयः। बोधजनकत्वस्य शब्दार्थतादात्म्यस्य वैयाकरणमते शक्तित्वेन तस्या नित्यत्वात्। नचार्थतादात्म्यस्य शक्तित्वे अनित्यार्थेन कथं शब्दस्य नित्यं तादात्म्यमिति वाच्यम्। बौद्धार्थेन तस्य तत्त्वाङ्गीकारात्। अतएव न वह्निशब्दाद्युच्चारणे मुखदाहाद्यापत्तिः।

न्यायमते ईश्वरेच्छारूपायाः शक्तेर्नित्यत्वात्।

र्द्धमात्रालाघवेन(१) यप्रत्याहारेणैव व्यवहारः स्यात्। तस्माल्लण्सूत्राकारस्यानुनासिकत्वमप्रामाणिकम्। "ऋ-लृवर्णयोः" इतिवल्लग्रहणं कर्त्तव्यमेवोरण्सूत्र इत्याहुः(२)

ननु स्पृष्टप्रयत्नादिभिस्त्रिभिरेव सकलवर्णाना व्याप्तत्वात्संवृतेन कुत्र भाव्यमत आह ह्रस्वस्येति। एवं तर्हि दण्डानयनमित्यादौ ह्रस्वस्य संवृतस्यानेन विवृतेन दीर्घाकारेण प्रयत्नभेदात्सवर्णदीर्घो न स्यादत आह प्रक्रियादशायामिति। साधनावस्थायामित्यर्थः। विवृतमेवेति। तत्र विवृतत्वं प्रतिज्ञेयमित्यर्थः। एवञ्चोक्तप्रयोगे सवर्णदीर्घः सिद्ध इति भावः। ह्रस्वस्य प्रयोगे संवृतत्वे सूत्रं प्रमाणयति अ अ इति'। "सुपां सुलुग्" इति विभक्त्योर्लुक्। आद्यो विवृतः परस्संवृतस्त-

---

नापि तृतीयः। उपस्थितिशाब्दबोधयोः सर्वमतेऽनित्यत्वेन ज्ञापनस्यायुक्तत्वात्।

नच सर्वत्र रपदस्योभयतात्पर्यकत्वाभावबोधनार्थं लकारग्रहणमिति वाच्यम्। क्वोभयतात्पर्यकं क्व नेत्यत्र व्याख्यानस्यैव शरणीकर्तव्यतया उरण् रपर इत्यत्रैवोभयतात्पर्यकत्वे व्याख्यानात्स्वीकृते सति लकारग्रहणव्यर्थताध्रौव्यादित्यर्थः।

(१) नच पर्यायशब्दानां लाघवगौरवचर्चा नाद्रियत इति असङ्गतमिति वाच्यम्। लण्सूत्रे णकारग्रहणं न कर्त्तव्यमिति ग्रन्थतात्पर्येण ययण्पदयोः पर्यायत्वाभावात्।

(२) वस्तुतस्तु लकाराकारस्यानुनासिकत्वेऽपि न क्षतिः। नचातोल्ऌत्यत्र लकारवैयर्थ्यं तस्य सर्वत्र यपदस्योभयतात्पर्यकताभावज्ञापकत्वात्। इत्यादिरप्रत्याहारमण्डनमन्यत्र विस्तृतम्।

दाह विवृतमनूद्येति । विवृतस्थान इत्यर्थः । अनेनेति । अअ इतिसूत्रेणेत्यर्थः । एवञ्चोभयोरकारयोः प्रयत्नभेदात्सवर्णदीर्घो न । विवृतत्वमस्त्येवेति । तर्हि सवर्णदीर्घः स्यादिति चेन्न । पूर्वोक्तार्थज्ञापनार्थं तदभावात् । पर्यवसितार्थमाह एतेषु परेष्विति । उपलक्षणमिदमेतेषु विद्यमानस्यापि । तेन हकारादिषु दीर्घादिर्नेत्यर्थः । एतेन हरतीत्यादिषु चतुर्षु हकारशकारयोः षकारसकारयोश्च सवर्णदीर्घस्य यणादेशस्य चापादयितुं शक्यत्वेन दधीत्यस्येति व्यर्थमित्यपास्तम् । अन्यथेति । "नाज्झलौ" इत्यस्यानारम्भे । अच्त्वं स्यादिति । (१)अच्पदबोध्यत्वं स्यादित्यर्थः । इदं प्रत्याहारघटकेष्वपि वर्णेषु ग्रहणकशास्त्र-

(१) अच्शब्दस्य संज्ञाशब्दत्वेन शब्दरूपस्यैव प्रवृत्तिनिमित्तत्वेन ततो भावप्रत्ययान्तेनानन्वयादाह अच्पदबोध्येति । अयम्भावः अजादिपदार्थानामकारादिचान्तसमुदायघटकानामनेकत्वेन तद्वृत्तीनामत्वादीनां शक्यतावच्छेदकत्वे गौरवेण लाघवाद्यावद्व्यक्त्यन्यतमत्वस्यैकस्य शक्यतावच्छेदकत्वं वाच्यम् । तस्य चान्यतमत्वस्य यावद्व्यक्त्यन्तरभेदविशिष्टव्यक्त्यन्तरभेदवाद्भिन्नत्वरूपत्वेन, सकलजगतः प्रवेशात्, भेदवैशिष्ट्यनियामकस्यासत्त्वेन सम्भवियावद्विधवैशिष्ट्यग्रहणे तद्भेदेनान्यतमत्वस्याप्यनेकत्वेन गौरवं दुष्परिहरमिति लाघवादेतादृशस्थले सङ्केतसम्बन्धेन तत्तत्पदवत्त्वस्यैव शक्यतावच्छेदकत्वस्वीकारः । तच्च मतुबुत्तरभावप्रत्ययस्य मतुप्प्रत्ययप्रकृतिपरिचायकत्वेन तत्तत्पदरूपमिति ।

प्रवृत्तिरितिमते(१) व्यक्तिपक्षे(२) च बोध्यमित्याहुः ।

(१) ननु उच्चारितशब्द एव प्रत्यायको नानुच्चारित इत्यणुदित्सूत्रस्थभाष्येण तदर्थविषयकशाब्दबुद्धिं प्रति उच्चारितपदवृत्तिवृत्तिज्ञानाधीनोपस्थितेः कारणत्वबोधनादिकारस्योच्चारिताच्पदवृत्तिवृत्तिज्ञानाधीनोपस्थितिविषयत्वेन बोधेऽपि तेन शकारग्रहणमयुक्तम् तस्य उच्चारणाभावात । नचोक्तकार्यकारणभावो रहसि पुस्तकेक्षणस्थले व्यभिचरित इति वाच्यम् । तत्रापि पुस्तकद्रष्टुः स्वीयसूक्ष्मोच्चारणसत्त्वात् । ततश्च हकारादीत्यादिपदस्य शकारादिसङ्ग्राहकस्यानुपपत्तिरित्यत आह *इदमित्यादि । अज्झलोः प्रतिषेधे शकारस्य प्रतिषेधोऽज्झल्त्वादिति वार्त्तिकमते इत्यर्थः ।

(२) अय भावः—शब्दानां व्यक्तिरेव वाच्या कार्यान्वयित्वात् । जातेर्वाच्यत्वं तु तस्या आनयनादिकार्यान्वयबाधादसम्भवि । ननु व्यक्तीनामानन्त्येन सर्वासु व्यक्तिषु शक्तिग्रहासम्भवः, नानार्थत्वापातश्च । नच एकस्यां व्यक्तौ शक्तिर्व्यक्त्यन्तरबोधो लक्षणयेति वाच्यम् । कस्यां शक्तिः कस्याश्च च लक्षणया बोध इत्यत्र विनिगमनाविरहात् । लक्षणाऽस्वीकारेतु व्यक्त्यन्तरस्य शक्तिग्रहाविषयतया शाब्दे भानं न स्यादिति चेन्न । जात्यादिरूपस्यानुगतधर्मस्य शक्यतावच्छेदकत्वस्वीकारेण शक्तिग्रहोपस्थित्योश्च समानप्रकारकत्वेन कार्यकारणभावाभ्युपगमादनुपपत्तिपरिहारात् ।

एवं च शक्यतावच्छेदकस्यैक्यान्न शक्त्यानन्त्यम् । समानप्रकारकत्वेन शक्तिग्रहोपस्थित्योः कार्यकारणभावस्वीकारात् न शक्तिग्रहाय यावद्व्यक्तिज्ञानापेक्षा । सर्वत्र चोक्तरीत्या शक्त्यैव बोधस्वीकारेण, व्यक्त्यन्तरबोधस्य लाक्षणिकत्वस्वीकारे तत्र शक्यसम्बन्धस्य स्वसमवेतसमवायित्वरूपस्य गुरुत्वेन लाघवाज्जातौ शक्तिर्व्यक्तिबोधस्त्वाश्रयत्वरूपलघुसम्बन्धेन लक्षणयेति वादिमतं परास्तम् ।

ननु शक्यतावच्छेदके शक्तिः स्वीक्रियते न वा ? । आद्ये विशिष्टशक्तिवादितापत्त्या सिद्धान्तस्य व्यक्तिमात्रे शक्तिरित्यस्य भङ्गापत्तिः । अन्त्येऽशक्यत्वेन शक्यतावच्छेदकतानापत्तिरिति चेन्न । अलक्ष्येऽपि लक्ष्यतावच्छेदकत्ववदकारणेऽपि कारणतावच्छे-

अत्रेति । ग्राहकसूत्र एवेत्यर्थः । "व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्" इति परिभाषणादिति भावः । एतच्चाणिण्प्रत्याहारः परेण पूर्वेण वेति सन्देहोऽज्ञासनाय—लण्सूत्रे वर्णान्तरेणानुबन्धे कर्त्तव्ये णकारो ज्ञापयतीति भाष्ये स्पष्टम् । तदर्थस्तु विशेषस्यान्यतराद्यर्थरूपस्य प्रतिपत्तिर्निश्चयो व्याख्यानाच्छिष्टकृतात्, यतस्सन्देहाच्छास्त्रमलक्षणमननुष्ठापकं न हि भवतीति(१) । एवम् इण् परेणैव "अचि श्नुधातुभ्रुवाम्" इति सूत्रे 'इणः' इत्येव सिद्धे य्वोरितिगुरुनिर्देशाद्व्याख्यानाच्चेति "लण्" इत्यत्र स्पष्टं भाष्य इति दिक् ।

नन्वेकारैकारयोः कण्ठतालुस्थानं विवृतश्च प्रयत्नस्तथौकारौकारयोः कण्ठौष्ठस्थानं प्रयत्नश्च विवृत एवेति तुल्यास्येति सूत्रेण परस्परं सावर्ण्य(२)

---

दकत्ववदशक्येऽपि शक्यतावच्छेदकत्वस्वीकारे बाधकाभावात् ।

(१) अनया परिभाषया व्याख्यानस्य विशेषप्रतिपत्तिहेतुता बोध्यते । सा च लोकत एव प्राप्तेत्यस्या वैयर्थ्यं मा भूदिति विशेषप्रतिपत्तिरस्मिञ्छास्त्रे व्याख्यानादेव कर्तव्येति नियमबोधिकात्वमस्याः कल्प्यते । एवं च यथोत्तरं मुनीनां प्रामाण्यमित्यपि सिध्यतीति दिग् ।

(२) तुल्यास्यसूत्रे हि आस्यशब्दस्य शरीरावयवाद्यदिति यदन्तत्वेनास्यभवत्वबोधनद्वारा कण्ठादिस्थानपरत्वम् । प्रयत्नशब्देन प्रकृष्टो वर्णोत्पत्तिप्राग्भावी यत्न उच्यते । आस्यप्रयत्नशब्दयोश्च

स्यादत आह सामर्थ्यादिति । न च स्वसत्त्व-

द्वन्द्वे आस्यप्रयत्नाविति । तुल्यं च तुल्यश्च तुल्यौ आस्यप्रयत्नौ यस्येत्यर्थः । तुल्याविन्यत्र द्वन्द्वविशेषणत्वान्न नपुंसकशेषोऽद्वन्द्वतत्पुरुषविशेषणानामित्युक्तेः । यस्येत्यत्र जनकत्वं षष्ठ्यर्थः । तथा च यज्जनकास्यप्रयत्नौ तुल्यौ तौ वर्णौ सवर्णसंज्ञावित्यर्थः । ननु तुल्यास्यप्रयत्नस्य सावर्ण्ये वर्णान्तरेणापि सावर्ण्यं स्यात् इति चेन्न । स्वजनकस्थानप्रयत्नजन्यत्वसम्बन्धेन वर्णविशिष्टस्य सावर्ण्यस्वीकारात् । एवमपि इकारजनकतालुस्थानविवृतप्रयत्नजन्यत्वादेकारस्यैकारेण सावर्ण्यापत्तिरिति चेत्स्वजनकस्थानप्रयत्नजन्यत्वस्वाजनकस्थानप्रयत्नाजन्यत्वरूपसम्बन्धद्वितयेन वर्णवैशिष्ट्यस्वीकारणेकाराजनककण्ठस्थानजन्यत्वादेकारस्येकारेण सावर्ण्याभावसिद्धेः । अथोक्तसम्बन्धद्वितयेनेकारस्यैकारसावर्ण्यापत्तिरुद्भाव्येत तर्हि स्वजनकयावत्स्थानप्रयत्नजन्यत्वस्वाजनकयावत्स्थानप्रयत्नाजन्यत्वरूपसम्बन्धद्वयेन वर्णवैशिष्ट्यस्वीकाराददोष इति दिक् ।

नन्वत्र तुल्यास्यं सवर्णमित्येव सूत्रमस्तु यस्य कण्ठादिस्थानं यदीयस्थानेन तुल्यं तौ सवर्णावित्यर्थः । समानस्थानके भिन्नप्रयत्नके सावर्ण्यप्रवृत्त्या वाक्श्चोततीत्यत्र झरोझरीत्यस्य प्रवृत्तिदोषस्तु न । उक्तसूत्रस्थाने झयोझयीतिन्यासेन यथासङ्ख्यसूत्रप्रवृत्त्येष्टसिद्धेः । निले इत्यत्र तु झलो झलीतिलोपसिध्या दोषाभावः । इति चेन्न । रेफणकारयोः सावर्ण्यापत्तौ कुण्डं रथेनेत्यादौ णकारस्य परसवर्णस्यापत्तेः । न च अर्णमिति न्यासेन रेफणकारभिन्नं सवर्णमित्यर्थाददोष इति वाच्यम् । हकारकवर्गयोः शकारचवर्गयोः सावर्ण्यापत्तौ चोः कुरित्यनेन शकारस्थाने हकारोऽपि स्यात । नच कुहोश्चुरित्यत्र हकारोपादानात्कवर्गोपादानाच्च पञ्चवर्गभिन्नग्रहणेन वर्गग्रहाणाभावः वर्गग्रहणेन च तद्भिन्नग्रहणाभाव इति ज्ञापनेनादोषः, अत एव तत्कृतमित्यादौ झयो ह इत्यस्याप्रवृत्तिः । इति चेन्न । यकारशकारयोः सावर्ण्यापत्तौ यकारग्रहणेन शकारग्रहणे लोपो व्योरित्यनेन शकारस्य लोपप्रसङ्गात् । किञ्च काछ्ंयतीत्यत्र यकारोऽनुनासिकः परस्य सवर्णः स्याद् इति दिग् ।

बोधनार्थं तदारम्भोऽन्यथा तयोरसत्त्वं स्यादिति(१) ऋऌक्सूत्रभाष्ये व्यक्तेयं रीतिरिति वाच्यम् । सति तयोः सावर्ण्येऽकारेणानुपदिष्टदीर्घादीनामिवैङाऽपि तदुपदेशसम्भवात् ।

ननु "एचोऽयवायावः" "वृद्धिरादैच्" "न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैज्" इत्यादौ प्रत्याहारार्थेति चेन्न । 'एङोऽयवायावः' इति न्यासे स्थानेऽन्तरतमेनैव निर्वाहात् । "वृद्धिरादैज्" इत्यत्राप्येङित्येव पाठ्यम्, तत्र, गुणसूत्रे च परस्परसवर्णसंज्ञावादिमते चतुर्णां ग्रहणसत्त्वेनादोषात् । "न य्वाभ्याम्" इत्यत्रै औ इति स्वरूपेणैव पठनीयौ । एवं चैतदारम्भवैयर्थ्यात्सवर्णाभावज्ञापनं सुस्थम् ।

यदि तु—

"स्वराणामूष्मणां चैव विवृतं करणं स्मृतम् ।

तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च" ॥ इति—

---

(१) तत्र हि वर्णैकदेशस्य वर्णग्रहणेनाग्रहणे संध्यन्तेत्यत्राप्यणुदिदित्यनेन यकाररूपस्य अणस्तत्सवर्णग्राहकताबोधनेनाक्षरसमाम्नाये यकारग्रहणेन यद्वयस्यापि ग्रहणान्मात्रिकस्य तस्य हल्त्वे तदवयवाग्रहणाद्धल्द्वयसंयोगाभावात्संयोगसंज्ञाऽप्राप्तिमुद्भाव्य भाष्यकृतोक्तं मात्रिकस्य व्यञ्जनस्यासत्त्वान्न दोष इति । तेन च भाष्येणानुपदिष्टत्वमसत्त्वप्रयोजकमुक्तम् । असतश्च प्रतिपत्त्यविषयत्वमिति । असति तत्र ऌकारग्रहणे तस्यासत्त्वशंकया ऽस्य वचनस्य व्यर्थता स्यादिति भावः ।

शिक्षोक्तेन विवृततरविवृततमप्रयत्नद्वयेनैङोरैचोश्च भेदः सिद्ध इति मतम्, तदाऽऽरम्भो व्यर्थ एवेति बोध्यम्।

नापादनीयमिति। तेन ग्लावं ग्लाव इत्यत्र "औतोऽम्शसोः" इति न प्रवर्तत इति भावः। ननु त्रिश्वराभिरित्यादौ तुल्यास्यप्रयत्नमिति अणुदित्सूत्रयोर्वाक्यार्थबोधोत्तरं निषेधसूत्रप्रवृत्तौ दीर्घैरप्यज्भिर्हलां सावर्ण्यवारणाद् ढत्वादेरप्रसक्तिः। किञ्च, जातिपक्षेऽत्वजात्याक्रान्तदीर्घादेरपि निषेधसिद्धिरिति किमुक्ताकारप्रश्लेषेणानर्थकेनेत्याशङ्क्य निषेधविधेः प्राग्ग्राहकविधेरबोधात्,(१) ह्रस्वस्यैव तेन निषेधविषयत्वादित्यभाष्यादिप्रामाण्येनात्र व्यक्तिपक्षस्यैवात्रलम्बनाच्च प्रश्लेषसाफल्यादित्याशयेनाह यद्यपीति। "नाज्झलौ" इतिसूत्र-

---

(१) वस्तुतस्तु वाक्यार्थबोधे क्लृप्तस्य पदपदार्थज्ञानरूपकारणस्य सत्त्वे वाक्यार्थबोधो निराबाधः। नच तत्र निषेधज्ञानस्य कारणता कस्यापि संमता येन पूर्वं तज्ज्ञानाभावाद्वाक्यार्थबोधानुत्पत्तिः स्यात्। निषेधस्याभावरूपस्य प्रतियोगिज्ञानसापेक्षत्वेऽपि प्रतियोगिज्ञानस्याभावज्ञानानपेक्षणात् तज्ज्ञानात्पूर्वं वाक्यार्थबोधे प्रतिबन्धाभावः। नचैवं प्रतियोगिभूतार्थप्रतिपादकतुल्यास्येति शास्त्रस्य निषेधानपेक्षता, किन्तु वाक्यार्थबोधे जाते तद्धर्मिकप्रामाण्यग्रहणार्थन्तदपेक्षणात्। एवं निषेधकशास्त्रस्यापि स्ववाक्यार्थधर्मिकसाफल्यग्रहार्थं प्रतियोगिबोधकशास्त्रापेक्षा नतु तद्वाक्यार्थबोधार्थम् इति बोध्यम्।

भाष्योक्तवाक्यापरिसमाप्तिन्यायादित्यर्थः ।

तत्र हि 'कुमारी शेते' इत्युपक्रम्य प्रयत्नभेदेनाऽझलोः सावर्ण्याभावमभिधाय समाधानान्तरमुक्तम्—"वाक्यापरिसमाप्तेर्वा पुनरसिद्धमेतत् । किमिदं वाक्यापरिसमाप्तेरिति । वर्णानामुपदेशस्तावत्, उपदेशोत्तरकालेत्संज्ञा, तदुत्तरकाल आदिरन्त्येनेति प्रत्याहारः, तदुत्तरकाला सवर्णसंज्ञा, तदुत्तरकालमणुदिदिति सवर्णग्रहणमित्यनेन सर्वेण समुदितेन वाक्येनान्यत्र सवर्णानां ग्रहणं भवति, न चात्रेकारः शकारं गृह्णाति" इति ।

अयं भावः—उपदेशोत्तरमित्संज्ञाविज्ञानात्प्रत्याहारस्तत उपजीवकत्वात्सवर्णसंज्ञा इष्टविषये संज्ञासंज्ञित्वग्रहणम्, ततो ग्रहणे सिद्धे ग्राहकेणाणुदित्सवर्णस्येत्यनेन पूर्वसूत्रेण यावद्वाक्यार्थबुद्धेरकारादिभिः स्वसवर्णत्वेन ज्ञातानां तावतां ग्रहणं बोधनीयम् । अपरिसमाप्तेरित्यस्य सवर्णसंज्ञाजन्यशक्तिग्रहे "नाज्झलौ"-इत्येतद्रूपबाधकसम्भावनया प्रापिताप्रामाण्यग्रहादणुदिदित्येतद्वाक्यार्थासामर्थ्यादिति ।

एवं च "प्रकल्प्य चापवादविषयमुत्सर्गः प्रवर्तते" "पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः",

"भुक्तवन्तं प्रति ब्रूयान्मा भुक्था:" इत्येतैर्बाधकसम्भावनया सवर्णसूत्रवाक्यार्थबोधानुपपत्त्या च विधिनिषेधसूत्रयोरेकवाक्यता कार्या । अज्झल्भिन्नं यत्तुल्यास्यप्रयत्नं तन्मिथः सवर्णमित्युभयविधिबोधितसवर्णसंज्ञोत्तरं ग्राहकसूत्रवाक्यार्थावतारः ।

तथा च निषेधसूत्रेणागृहीतदीर्घादिभिरज्भिर्हलां सावर्ण्यनिषेधनं पर्यवसन्नमित्याशयेनाह आक्षरेति । अक्षराणां समाम्नाय उपदेशसूत्राणि, तत्र भवः । "बह्वचोऽन्तोदात्ताद्" इति ठञ् । अत एव 'कुमारी शेते' इत्यादौ दीर्घशकारयोः सावर्ण्यात्सवर्णदीर्घत्वं प्राप्तमचीत्यनुवृत्त्या निवार्यत इत्युक्तमत्र कैयटे । वक्ष्यति च मूले । तर्हि विश्वपाभिरित्यादौ का गतिस्तत्राह आकारस्यापि प्रश्लिष्टत्वादिति । तत्र "कालसमयवेलासु" इत्यादिनिर्देशा लिङ्गम् । अपिना दीर्घात्परत्र प्लुतस्यापि प्रश्लेषः, (१) तेन हे पिया३सो इत्यादौ "गुरोरनृतः" इति प्लुतादकारात्परस्य सनः सस्य षत्वं नेति भावः । होढ इतीति । हकारेणाकारग्रहणे सति यद्यत् प्राप्नोति तस्य सर्वस्याप्युपलक्षणमिदम् । भाष्ये प्रय-

(१) अत्र प्रयत्नभेदेन नाज्झलावित्यस्य प्रत्याख्यानपरं भाष्यं मानं बोध्यम् ।

त्नभेदोऽज्झलोरुन्नीतः । तद्यथा—"सिद्धमनच्त्वात् । कथमनच्त्वम् । स्पृष्टं करणं स्पर्शानाम् । ईषत्स्पृष्टमन्तःस्थानाम् । विवृतमूष्मणाम्, ईषदेवानुवर्तते । स्वराणां चेत्यत्र विवृतमनुवर्तते ईषदिति निवृत्तम्" इति । एवं चेदं प्रत्याख्यातमिति कैयटीयाः ।

अपरे तु प्रयत्नभेदप्राप्तसावर्ण्याभावानुवादकं सत्तस्यैव बोधकमिदं सूत्रम् । अत एव भाष्ये एतन्न कर्तव्यम् इति नोक्तमित्याहुः ॥

इति संज्ञाप्रकरणम् ॥



ननु "इको यणचि" इत्यादावनिर्धारितषष्ठीविषये "षष्ठी स्थानेयोगा" इतिपरिभाषोपस्थितेरिकः स्थाने इकं विनाश्य यण् स्यादिति सूत्रार्थेन शब्दनित्यताहानिरित्यत आह

**स्थानं च प्रसङ्ग इति ।** स्थीयत इति स्थानम् । भावे ल्युट् । दर्भाणां स्थाने शरैः प्रस्तरितव्यमित्यादौ तथाऽर्थदर्शनात्(१) । प्रसङ्गश्च सति सम्भवेऽर्थवत एव । अर्थप्रत्या-

(१) स्थानशब्दस्य भावव्युत्पत्तिं स्वीकृत्य दर्भाणामित्यादौ तथा दर्शनात्प्रसङ्गार्थकत्वस्वीकारो न युक्तः । दर्भाणामिति शास्त्रेण हि दर्भकार्यकारिता शराणां बोध्यते, एवं प्रकृतेऽपि इक्कार्यकारितया यणस्तु बोधनेऽपि इग्घटितरूपाणामसाधुत्वाबोधनेनाज-

यनार्थं शब्दप्रयोगात् । एवं चाच्परेकारघटितशब्दस्यार्थबोधनाय प्रसङ्गे तत्परयकारघटितशब्दः प्रयोक्तव्य इत्यर्थः पर्यवसन्नः । एरुरित्यस्य तेस्तुरित्यर्थः । एवं रीत्या सर्वत्र शास्त्रे बोध्यम् । अर्थवत्त्वेन स्थान्यादेशभावविश्रान्तेः ।

तदुक्तम्——

सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः ।
एकदेशविकारे हि नित्यत्वं नोपपद्यते ॥ इति ।

ननु सर्वादेशे सुतरां विकार इति चेन्न । अवयविनोऽवयवभङ्गरूपो यो विकारः सर्वादेशे च तदभाव इति तात्पर्य्यात् । उक्तं च वार्तिककृता "कार्यविपरिणामाद्वा" इति । कार्यमिह ज्ञानं योग्यताबलात् ।

---

व्यवहितपूर्वेक्स्थले इक्घटितोऽपि प्रयोगः स्यादतोऽन्यः स्थानपदार्थो निर्वाच्यः । सच सम्भावनारूपः, तत्र च षष्ठीप्रकृत्यर्थस्य स्वजन्यत्वप्रकारकत्वसम्बन्धेनान्वयः । सम्भावनारूपस्थानपदार्थस्य च स्वविषयफलजनकत्वसम्बन्धेन पदार्थान्तरेऽन्वयः । तथाच इको यणचीत्यदौ इग्जन्यत्वप्रकारकसम्भावनाविषयीभूतं यत् फलं तज्जनको यण् भवतीति वाक्यार्थः । सम्भावनास्वीकारेण यणान्तद्बोधनेनार्थादिकां फलजनकता प्रकृतेऽप्राप्तेति न तत्प्रयोगः । एतेनाधिकरणव्युत्पत्त्या स्थानपदार्थस्वीकारे शब्दाधिकरणस्याकाशस्य ग्रहणे सर्वेषामेव वर्णानामाकाशदेशतया यणामिग्देशताकथनमसङ्गतम् । अथ कालग्रहणे पथिमथीत्यादौ व्यञ्जनोच्चारणाधिकरणकाले आकारोच्चारणस्याशक्यत्वमित्यादिविकल्पयन्तः परास्ताः । अन्यविधस्यैव स्थानपदार्थस्य स्वीकारादिति दिग् ।

तथा च ज्ञाननिष्ठमुत्पत्त्यादिकं शब्दे आरोप्यत इत्यर्थ इति कैयटादयः । एवं चेक्कारबुद्धिप्रसङ्गे यकारबुद्धिः कार्येति बुद्धेरेव विपरिणामो न शब्दादीनाम् ।

किञ्च शास्त्रमन्वाख्यायकमेव, तदुक्तं भाष्ये "नित्ये शब्दार्थसम्बन्धे(१) किमर्थं शास्त्रमिति चेन्निवर्तकत्वात्सिद्धम्" इति ।

असाधुशब्देभ्योऽन्वाख्यानद्वारा साधुशब्दबोधकमिति तात्पर्यार्थः । साधुशब्दोच्चारणे च पुण्योदयः, "एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग्भवति" इति भाष्योक्तेः । "नित्याश्च शब्दा नित्येषु शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः" इत्यइउण्सूत्रादिषु भाष्ये उक्त-

---

(१) शब्दश्चार्थश्च सम्बन्धश्चैषां समाहारः । तेषां नित्यत्वाच्छास्त्रं व्यर्थमिति प्रश्नः । सर्वेषां नित्यत्वेऽपि कस्मिंश्चिदर्थ एव कस्यचिच्छब्दस्य साधुत्वमन्यत्रासाधुतेति असाधुशब्दानामपि साधुशब्दतुल्यकक्षतया प्राप्तौ तन्निवर्तकमिदम्—अस्मिन् अर्थे अयमेव शब्दः साधुरिति बोधनेनासाधोर्निवर्तनात् । अर्थस्त्वत्र बौद्धो गृहीतव्यः । तस्य च नित्यता । साच बुद्धिप्रतिभासः शब्दार्थ इति कैयटव्याख्याने विवरणे स्पष्टा । अत एव शशशृङ्गादिपदानामर्थवत्त्वात्प्रातिपदिकत्वसिद्धिः । तादृशस्थले वैकल्पिकार्थसत्त्वस्वीकारात् । बाह्यार्थग्रहणे तु न सिद्ध्येत् । शब्दज्ञानानुपाती वस्तुशून्यो विकल्प इत्यनेन बाह्यवस्त्वभावेऽपि विकल्पाकारबुद्धेः स्वीकार उक्तः पतञ्जलिना । एतेन बाह्यार्थानामनित्यत्वादयुक्तमिदं भाष्यमिति परास्तम् इति दिक् ।

मिति विरम्यते ऽस्माभिः ।

ननु "अष्टाभ्य औश्" इत्यत्र "जश्शसोः" इतिस्थानषष्ठीश्रुत्या ऽलोन्त्यपरिभाषोपस्थितेरन्त्यादेशप्राप्तावष्टाभ्य इति पञ्चमीश्रुत्या "तस्मादित्युत्तरस्य" इति परत्वबोधनाद् "आदेः परस्य" इत्यनेनालोन्त्यादेशबाधकेन जश्शसोरादेरकारस्यौशि जायमाने रूपासिद्धिरत आह परत्वादिति । विप्रतिषेधादिति भावः । "आदेः परस्य" इत्यस्यावकाशः द्वीपम् । "द्व्यन्तरुपसर्गेभ्योऽप ईत्" । "अनेकाल्" इत्यस्य इतः । तसिल् प्रत्ययः । "इदम इश्" । आदिना "अतो भिस ऐस्" इत्यत्र "आदेः परस्य" इति बाध्यतेऽनेकालित्यनेनेत्यर्थः ।

अत एव "तस्मादित्युत्तरस्य" इत्यत्र "तस्मादित्युत्तरस्यादेः" इति लाघवान्न सूत्रितम् । तथा सति तदेव परत्वाद् "अनेकाल्" इत्यस्य बाधकं स्यादित्युक्तरूपासिद्धिः । न चानेकालित्यतः प्राक् पठ्यता "तस्मिन्निति निर्दिष्टे तस्मादित्युत्तरस्यादेः" इति सूत्रद्वयमिति वाच्यम् । आदेरित्यंशे "षष्ठी स्थानेयोगा" इत्यसम्बन्धे "आज्जसेरसुग्" इत्यादावप्यादेरिति प्रवृत्त्यापत्तौ देवास इत्यादिरूपासङ्गतेः । अस्तु "षष्ठी स्थाने" इत्यस्यात्र सम्बन्धः, एवं को दोषः, तर्हि मध्येऽपि त-

स्मिन्निति तस्मादित्यनयोरपि तत्सम्बन्धे तयोरप्या-गमविषये प्रवृत्त्यनापत्तेः ।

न च "अलोऽन्त्यस्य" इति सिद्धे "ङिच्च" इति नियमार्थम् 'ङिदेवानेकालन्त्यस्य स्यान्न त्वङिदपि' इति सुत्यजमनेकाल्ग्रहणमिति शङ्क्यम् । तद्ग्रहणाभावे "अतो भिस ऐस्" इत्यादौ "आदेः परस्य" इत्यस्यैव प्रवृ-त्त्यापत्तेः ।

ननु शिद्ग्रहणं व्यर्थम् । "इदम इश्" इत्यादौ शकारोच्चारणसामर्थ्याद् भूतपूर्वमनेकाल्त्वमादाय सर्वादे-शत्वसिद्धेरिति चेत् । सत्यम् । "नानुबन्धकृतमनेका-ल्त्वम्" इतिपरिभाषाज्ञापनाय तत्सत्त्वात् ।

ननु 'नानेकाल्शिद्' इति सूत्रमस्तु, मास्तु च सर्वस्येति ग्रहणम्, पूर्वसूत्रविषयान्त्याद्योरादेशनिषेधेन सर्वादेशताया एव पर्यवसन्नत्वादिति चेन्न । 'अनन्त-रस्य' इतिन्यायेन "आदेः परस्य" इत्यस्यैव निषेधापत्ते-र्दोषात् । यदि तु बाध्यसामान्यपक्षमाश्रित्य सर्वस्यापि बाधकमित्युच्यते, तदाऽदृष्टार्थमेव तद्ग्रहणमित्याहुः ॥

इति परिभाषाप्रकरणम् ॥

---

ननु सुध्युपास्य इत्यत्रैकमात्राऽवच्छिन्नेकारेण द्विमात्राऽवच्छिन्नेकारोपस्थानाद् (१) यण्सिद्धावपि वध्वीश इत्यादौ ह्रस्वोकारेण दीर्घोकाराबोधनात्तदनापत्तिः। "उच्चरितः शब्दः प्रत्यायको नानुच्चरित" इति "अणुदित् सवर्णस्य" इत्यत्र भगवदुक्तेः। नैष दोषः। प्रत्याहारेषु तद्वाच्यवाच्ये लक्षणाऽभ्युपगम्यते। तेनेक्पदेन वाच्यो ह्रस्वोकारादिस्तेन वाच्यो दीर्घोकारादिः, तत्र च लक्षणा वृत्तिरिति तदर्थः।

नन्वेवं सिद्धे "अणुदित्सवर्णस्य" इति व्यर्थमिति

(१) वस्तुतः सुध्युपास्य इत्यत्रापि यणसिद्धिर्बोध्या। न चेकारस्य उच्चरितत्वेन तेन स्वसवर्णग्रहणाद्दीर्घेकारस्यापि बोधनात्तत्र यण्सिद्धिरिति वाच्यम्। तत्र इपदस्य बोधकत्वाभावात्, इक्पदस्यैव बोधकत्वात्। तस्य चतुर्ष्वेव शक्तेः। न चेक्पदोच्चारणे इपदस्यापि उच्चारितत्वेन तत् स्वसवर्णान् बोधयतु विशिष्टं चतुष्टयम् इति वाच्यम्। समुदायतात्पर्येण प्रयुक्तपदस्थलेऽवयवार्थाबोधदर्शनेन समुदायशक्तिनिरूपकार्थविषयकतात्पर्यज्ञानस्यावयवशक्तिनिरूपकार्थविषयकशाब्दबोधे प्रतिबन्धकत्वस्वीकारेणोक्तस्थले प्रतिबन्धकसत्त्वादिकारेण नाष्टादशेकारबोधः। अत एवोमाधवं नमस्कुर्वित्यत्र न माधवकर्मकनमस्कारबोधः। नचात्रादिरन्त्येनेत्यनेनादेरेव बोधकत्वेन स्वीकारादिकारस्यैकस्यैवाष्टादशचतुष्टयरूपार्थबोधकत्वेनोक्तप्रतिबन्ध्यप्रतिबन्धकभावस्यानवसर इति वाच्यम। एकत्रोच्चारिताद्धर्यादिपदाद्युगपदर्थद्वयबोधादर्शनादेकशक्तिनिरूपकार्थविषयकतात्पर्यज्ञानस्यार्थान्तरविषयके बोधे प्रतिबन्धकत्वस्वीकारात्प्रकृते उभयार्थाबोधात्। ककारसमभिव्याहारेणेपदस्य चतुष्टयतात्पर्यकत्वनिश्चयेनेकाराणामनुपस्थितिरित्याद्यन्यत्र विस्तरः।

वाच्यम् । लक्ष्यतावच्छेदकज्ञानार्थमत्र तच्चारितार्थ्यात् ।

नन्वेवं रीत्या "नाज्झलौ" इत्यादिविषयेऽपि लक्षणाया वाक्यापरिसमाप्तिन्यायादिकं विप्रतिपद्येतेति चेन्न । बोधकाले लक्ष्यतावच्छेदकबोधकाणुदित्सवर्णबोध्यसावर्ण्यस्य प्राङ्निवेदनात् ।

एवं चेक्शब्देन षट्षष्टिर्वर्णा गृह्यन्ते, यण्पदेन चत्वारः । यणपदे तु न लक्षणा, "भाव्यमानः सवर्णान्न गृह्णाति" इतिपरिभाषया यण्वाच्ययकारादिवाच्यानामभावात् । अतो यथासंख्यसूत्रविषयताऽप्यत्र नास्ति ।

ननु तात्पर्यानुपपत्तिर्हि लक्षणाबीजम् । प्रकृते च "य्वादिभ्यः" इत्यादियण्घटितनिर्देशादस्तु लक्षणा । सा च शक्यसम्बन्धरूपा । शक्तेर्विषयाः शक्याश्चत्वार इको यणश्च चत्वार एवेति शक्यार्थमदाय यथासंख्यमप्यस्तीति चेन्न । एवमपि तृतीयचतुर्थाभ्यामृकारऌकाराभ्यां प्रत्येकं त्रिंशदुपस्थितौ ऌवर्णे रादेशस्य ऋवर्णे लादेशस्य च प्रसङ्गात् ।

अत एव भाष्ये "स्थानेऽन्तरतमः" इत्यस्य "किमुदाहरणं दध्यत्र" इत्युक्तम् । कैयटे च स्थान्यादेशानां साम्यं नास्त्यतो नास्ति यथासंख्यमित्युक्तम् ।

तदेतत् सकलमभिसन्धायाह स्थानत आन्तर्यादिति ।

स्थानेऽन्तरतमसूत्रसञ्चारेणेत्यर्थः ।

एतेन स्थानप्रमाणोभयान्तरतमे ह्रस्वेकारे चरितार्थो यण्विधिर्दीर्घे कथं स्यादिति शङ्काऽपि निर्दलिता । स्थानत आन्तर्यस्य सर्वतो बलवत्त्वात् । "यत्रानेकविधमान्तर्यम्" इतिपरिभाषणात् ।

चतुर्विधमान्तर्यं स्थानार्थगुणप्रमाणकृतम् । स्थानतो दध्यत्र । अर्थतस्तृज्वत्क्रोष्टुः । क्रोष्टुशब्दस्य न पक्तृशब्दादेशः । गुणतो वाग्घरिरित्यादौ । इह घोषवतो महाप्राणस्य तादृश एव घः । प्रमाणतस्तु अमुम, अमू इत्यादौ । अत्र "अदसो ऽसेः" इत्यनेन ह्रस्वस्य ह्रस्वो दीर्घस्य दीर्घ उकारः ।

इयं च परिभाषा स्थानेऽन्तरतमसूत्रे "षष्ठी स्थाने"-इत्यतः स्थानेग्रहणे ऽनुवर्तमाने पुनः स्थानेग्रहणं वाक्यभेदमाश्रित्य 'प्रसङ्गे, सति सम्भवे स्थानत एवान्तरतम इत्यर्थकम्' तेन निष्पन्नेति भाष्ये स्पष्टम् । त्रिविधापेक्षया स्थानत आन्तर्यस्य बलवत्त्वादेव चेता स्तोतेत्यादौ प्रमाणत आन्तर्यवानकारो नेति दिक् ।

एवं च स्थानेऽन्तरतमसूत्रेणैवात्र निर्वाह इत्याहुः।

भाष्ये तु दीर्घादीनामिकूपदादिभिरुपस्थितये जातिपक्ष एवाश्रितः, "अणुदित्सवर्णस्य" इतिसूत्रे, "अणूग्रहणमपरि-

भाष्यम्, आकृतिग्रहणात्सिद्धमेतत्, अवर्णाकृतिरुपदिष्टा सर्वमवर्णकुलं ग्रहीष्यति तथेवर्णाकृतिः,तथोवर्णाकृतिः" । अइउण्सूत्रे भाष्ये " "अस्य च्वौ"इत्यत्र सवर्णग्रहणं न प्राप्नोति, किं कारणम्, अनण्त्वात्, न ह्यत्राणो ये ऽनुवृत्तौ, किं तर्हि, ये ऽक्षरसमाम्नाये उपदिश्यन्ते" इत्याशङ्क्य जातिपक्ष एवाश्रितः(१) ।

युक्तश्चायमेव पक्षो, ऽन्यथा शल्झलादिप्रत्याहारेषु सकलशकारादीनां ग्रहणं दुरुपपादं स्यात् । तत्र न लक्षणा लक्ष्यतावच्छेदकग्राहकाभावादिति दिक् ।

तथा चेक्पदप्रतिपाद्येत्वादिजात्यवच्छिन्नानां क्रमेण यण्पदप्रतिपाद्ययत्वादिजात्यवच्छिन्ना यकारादय "इको यणचि"इत्यनेन विधीयन्ते ।

अत्र पक्षे(२) यथासंख्यसूत्रेण निर्वाहः । तदु-

---

(१) अत एव झलादिषु सवतकारादीनां झल्त्वादिसिद्धिः । अन्यथा तेषामण्त्वाभावात्सत्यप्यणुदित्सूत्रे तेन तेषां सवर्णग्रहणस्याबोधनात्सर्वेषां तकारादीनां झल्त्वाद्यभावे अवात्तामित्याद्यसिद्धिः स्यात् । अत एव च भाष्यकृता "आचार्याः कृत्वा न निवर्तन्ते" इत्यादिना अण्ग्रहणं प्रत्याख्यातमित्येषा दिक् ।

(२) जातिपक्षे इत्यर्थः । उपलक्षणमेतद् "रूपसामान्याद्वा सिद्धम्" इत्यनेन बोधितरूपसामान्यपक्षेऽपि अनेकयकारादिवृत्तियत्वादिसामान्यरूपमादाय यथासङ्ख्यप्रवृत्तेः । धर्मसाम्येऽपि यथासङ्ख्यसूत्रप्रवृत्तेः "स्यतासी लृलुटोः" इत्यादावुक्तत्वात् । अन्यथा स्यतासोर्द्वित्ववत्त्वाल्लृलुटोश्च त्रित्ववत्त्वात्तदसङ्गतिरित्याद्यन्यत्र विस्तरः ।

क्तम् "संख्यातानुदेशेनाप्येतत्सिद्धम्" इति स्थानेऽन्तरतमसूत्रे भाष्ये।

न च "अभेदका गुणाः" इतिपक्षे यणः सप्तेति यथासङ्ख्यवैषम्यमिति वाच्यम्। अणुदित्सूत्रेऽण्ग्रहणसामर्थ्येन(१) यणंशे "गुणा भेदकाः" इत्यस्यैव न्याय्यत्वेन, भाव्यमानत्वेन च सवर्णानुनासिकानामग्रहणात्।

अण्प्रत्याख्यानपक्षेऽप्यारम्भप्रत्याख्यानयोः फलाभेदाय भेदकपक्षस्यैवात्राश्रयणात्। अत एव मतुपोऽनुनासिको वकारो धनवानित्यादौ न(२), न च "स्त्रौजस्" इत्यत्रानुनासिकोकारस्थाने सानुनासिकवकारः, न च "पथिमथ्यृभुक्षामाद्" इत्यत्राकारप्रश्लेषक्लेश इति वक्ष्यते।

---

(१) गुणानामभेदकत्वे हि यण्भिरनुनासिकादीनां ग्रहणेन सिद्धौ तत्र सवर्णग्रहणार्थाणित्युत्तरणकारेण प्रत्याहारग्रहणे फलाभावादजुदिदित्येव पाठे कर्तव्येऽण्करणं यण्सु गुणभेदकपक्षज्ञापनपरमित्याशयात्।

(२) अत एव "तद्वानासाम्' इति निर्देश उपपद्यते। नच "तसौ मत्वर्थे" इत्यत्र चर्त्वेन दकारस्यापि प्रश्लेषाद्दान्तस्यापि भत्वेनापदत्वाद्यरोऽनुनासिक इत्यस्याप्राप्त्योक्तनिर्देशसङ्गतिरिति वाच्यम्। तावताऽपि असुग्वत इति भाष्यनिर्देशस्यानुपपत्तेरपरिहारात्। सवर्णाग्रहणे तु वकारेणानुनासिकवकारानुपस्थितौ निरनुनासिकवकारस्यैवादेशत्वेन प्रत्यये भाषायामित्यस्याविषयतया तत्सङ्गतिरिति दिग्।

ननु "भाव्यमानः सवर्णान्न गृह्णाति" इतिपरिभाषासत्त्वे पूर्वोक्तानि सिध्यन्तु नाम, तज्ज्ञापकं त्वप्रत्ययग्रहणम्, तच्चाण्प्रत्याख्यानेनैव दूषितप्रायमिति चेत्। न। प्रत्याख्यानपक्षे तपरसूत्रस्य जातिपक्षप्राप्तसवर्णग्रहणनियमार्थत्ववद् जातिग्रहणप्राप्तसवर्णग्रहणप्रतिषेधायाप्रत्यय इत्यंशः कर्तव्य इत्याशयात्। ध्वनितं चेदं "ज्यादादीयसः" इत्यत्र षष्ठे भाष्ये व्यक्तं नागेशीये। अत एव जातिपक्षेऽपि त्यदादीनाम इत्यादौ न दीर्घादिसङ्ग्रहः। "त्वादिभ्यः" इत्यादिनिर्देशो जातिपक्षाश्रयणे मानम्। तस्माज्जातिपक्ष एव भगवतोऽभिप्रेत इत्याहुः॥

इकारस्य यकार इति। इकारोच्चारणप्रसङ्गे यकार उच्चारणीय इत्याशयः। उपपादितश्चायं प्राक्।

नन्विह सुधीशब्दस्य ध्यायतेः सम्प्रसारणे "सम्प्रसारणाच्च" इति(१) पूर्वरूपापत्त्येर्यण् न स्यात्। मैवम्।

(१) नचात्र सम्प्रसारणस्थानिकपूर्वरूपस्थानिकदीर्घस्यासम्प्रसारणत्वेन सम्प्रसारणाच्चेत्यस्याप्राप्तिः। स्थानिवत्त्वस्य पूर्वसूत्रेणाल्विधित्वाद्, उत्तरसूत्रेण पूर्वकार्याभावात्, स्वोद्देश्यकार्ये च तन्निषेधादप्राप्तिरिति वाच्यम्। वार्त्तिककृता शकह्वत्रेत्यादौ पूर्वरूपवारणायारब्धसमानाङ्गग्रहणमिति वार्त्तिकेन दीर्घस्य तत्त्वबोधनमित्याशयात्। वस्तुनस्तु सम्प्रसारणस्थानिकपूर्वरूपस्य हल इति दीर्घविधिसामर्थ्यात्स्थानिवत्त्वेन तत्त्वेऽपि तत्स्थानिकदीर्घस्य स्थानिवत्त्वाश्रयणे न मानम्। उक्तरीत्यैव भाष्यकृता तस्य प्रत्याख्यानादिति दिक्।

"सम्प्रसारणपूर्वत्वे समानाङ्गग्रहणम्"(१) इतिवार्तिकोक्तेः। न च "न भूसुधियोः" इति निषेधः। अङ्गाधिकारस्थितत्वेन प्रत्यये परत एव तेन निषेधात्, अनन्तरोक्तयोः "अनेकाचः" "ओः सुपि" इत्यनयोः प्रतिषेधाच्च। न च "इकोऽसवर्णे" इति ह्रस्वप्रसङ्गो, "न समासे" इतिवार्तिकेन निषेधात्। न च नित्यसमासस्यैव तेन निषेध इति वाच्यम्। नित्यग्रहणस्य भाष्ये प्रत्याख्यानादिति सङ्क्षेपः॥

---

(१) नन्वत्र समानग्रहणस्यैकार्थकत्वे एकाङ्गघटकेऽचि इत्यर्थेन सुध्युपास्य इत्यत्र उपास्येत्युकारस्यापि सुनिरूपिताङ्गघटकत्वेन पुनरपि पूर्वरूपापत्तिर्दुर्वारेति चेन्न। समानेत्यस्य विभिन्नाङ्गाघटकेत्यर्थे तात्पर्यात्। एवं च उपास्येत्युकारस्य सुनिरूपिताङ्गघटकत्वेऽपि अन्तर्वर्तिविभक्तिनिरूपिताङ्गत्ववदुपास्येत्येतद्घटकत्वाद्विभिन्नाङ्गघटकत्वाभावाभावेन न पूर्वोक्तदोषः। नन्वेवमपि सुध्युप्तमित्यादौ पूर्वरूपं दुर्वारम् उप्तेत्यस्य सम्प्रसारणघटिताङ्गत्वेन विभिन्नाङ्गत्वाभावेन तद्घटकोकारस्य विभिन्नाङ्गाघटकत्वेन दोष इति चेन्न। स्वाघटिताङ्गाघटकत्वस्वाव्यवहितोत्तरत्वस्वघटिताङ्गघटकत्वरूपसंबन्धत्रितयेन सम्प्रसारणविशिष्टेऽचि परतः संप्रसारणस्य पूर्वरूपमित्याश्रयणात्। प्रथमसम्बन्धदानेन सुध्युपास्य इत्यादौ विभिन्नाङ्गघटके उकारे न पूर्वरूपप्रवृत्तिः। द्वितीयसम्बन्धेन सुध्युप्तमित्यादावदोषः। ईकारसम्प्रसारणेन पूर्वसम्बन्धाभावात्, उकारसम्प्रसारणेन द्वितीयसम्बन्धाभावादुक्तवैशिष्ट्याभावात्। सत्यभिधाने सुधीशब्दादुत्पन्नसुपो लुकि तस्मादकैच्छब्दे परे पूर्वरूपाभावाय तृतीयसम्बन्धप्रदानम्। 'एत्' शब्दादकचि निष्पन्नाकैदित्यस्यानाङ्गत्वेनाद्यसम्बन्धद्वयेन सुधीकारवैशिष्ट्यात्पूर्वरूपप्राप्तिः। अनभिधाने तु आद्यसम्बन्धद्वितयेनैव वैशिष्ट्यमिति न दोष इति दिक्।

ननु यद्यपि गव्यमित्यादौ भत्वाद् "लोपः शाकल्यस्य" "हलि सर्वेषाम्" इति वा लोपो न प्राप्नोति, तथाऽपि गव्यूतिरित्यत्र स्यादत आह वान्त इत्यत्रेति । तेन च सूत्रे फलाभावो, गव्यादौ भत्वेन वारणात् । न च गामिच्छतीत्यादौ फलम् । तत्रापि "नः क्ये" इति नियमेन नान्तस्यैव पदत्वप्रतिपादनेनेतरेषा भत्वबोधनादिति वाच्यम् । वान्त इत्यस्य वार्त्तिकेऽनुवृत्त्या श्रूयमाणवान्तादेश इत्यर्थसम्पादनफलकत्वात् ।

ननु विष्णवे इत्यादौ "तस्य लोपः" इति दुर्निवारम्, गव्यूतावुच्चारणस्य चारितार्थ्यादिति चेन्न । "गवि च युक्ते" इत्यादिनिर्देशेन तद्वारणात् ।

ननु "लोपो व्योर्वलि" इति कथं वलोपः, 'नहि कार्यी निमित्ततयाऽऽश्रीयते, न हि निमित्तं कार्यत्वेन' इतिपरिभाषया वस्य कार्यित्वेन निमित्तत्वबाधादिति चेन्न । निमित्तत्वानाश्रितविषये कार्यित्वस्य चरितार्थत्वात् । न च "लोपो व्योः" इत्यत्र वकारो भाष्ये प्रत्याख्यातः, प्रत्याख्यानस्य लौकिकोदाहरणाभावपरतया शास्त्रीयप्रयोगार्थं तत्सत्त्वादित्याशयात् । अत एव "अतो ल्रान्तस्य" इत्यत्र लुप्तनिर्दिष्टो वकार इत्युक्तम् "इको गुण—" इतिसूत्रे भाष्ये ।

ननु वान्तग्रहणमेव भाष्ये प्रत्याख्यातम् । न च चेयं जेयमित्यादौ यान्तादेशापत्तिः, योगविभागात् । 'क्षय्यजय्यौ' इत्येको योगः पूर्वेण प्राप्तेर्नियमार्थः—एचश्चेद् यान्तादेशः, तर्हि क्षिज्योरेव । ततः 'शक्यार्थे', क्षिज्योः शक्यार्थ एव, तेनार्हाद्यर्थे क्षेयं पापमित्यादौ न दोषः । न च क्षिज्योरिति सजातीयापेक्षत्वादेकारांशे नियमेऽप्यैकारांशे नियमाभावाद्रायमिच्छति रैयतीत्यत्र यान्तादेशापत्तिः, "रायिश्छान्दसः" इतिभाष्योक्तेश्छन्दसि दृष्टानुविधित्वेन रूपान्तरानापादनात् । यादौ प्रत्यये रैशब्दश्छन्दसि वर्तत इति कैयटः । एतत्सर्वं स्थानेऽन्तरतमसूत्रे भाष्ये स्पष्टमिति चेद्, एवं तर्हि वार्त्तिक एव प्रश्लेष उचित इत्यभिप्रेत्याह छकारादिति(१) ।

अन्ये तु छान्दसत्वान्न लोपो गव्यूतौ, छन्दसि

(१) वस्तुतस्तु वान्त इत्यत्र वकारप्रश्लेषोऽशक्यो लोपो व्योरिति लोपस्य वकारे माठरपरिवेषणन्यायेन निमित्तत्वस्य बाधात् । स चैकप्रकरणीयविषयताद्वयावच्छेदकधर्मद्वयस्य व्याप्यव्यापकभावे भवति । विद्यते प्रकृते यवकारलोपप्रकरणीयोद्देश्यतानिमित्तताख्यविषयताद्वितयावच्छेदकवत्ववल्त्वयोर्धर्मयोः व्याप्यव्यापकभावापन्नत्वम् । अनेन न्यायेन बाधश्च व्याप्यधर्मावच्छिन्नातिरिक्तत्वेन व्यापकधर्मावच्छिन्ने सङ्कोचरूपः । एवं च प्रकृते व्याप्यवत्वधर्मावच्छिन्नवकारातिरिक्तो यो व्यापकवल्त्वधर्मावच्छिन्नो वल् तस्मिन्निमित्ततावोधनेन वकारे वलोपनिमित्तत्वाभावात् । अत एव छकाराद्वेति स्थलान्तरानुसरणमिति केचित् ।

दृष्टानुविधायित्वेन रूपान्तरानापादनात् । अध्वपरिमाणेऽपि संज्ञाशब्दत्वान्न लोपः, संज्ञात्वभङ्गापत्तेः । अत एव रघुनाथशब्दादौ "पूर्वपदात्संज्ञायाम्" इति नित्यणत्वाभावः । अत एव "भृञो ऽसंज्ञायाम्" इति तृतीये भाष्ये—"असंज्ञायामभिधेयायामिति नार्थः, किं तर्हि तत्कार्यविशिष्टत्वे न चेत्संज्ञा गम्यते" इत्युक्तम् । ननु "सर्वादीनि" इतिसूत्रे सर्वनामानीत्यत्र णत्वं प्राप्नोतीत्याशङ्क्य "निपातनाद् णत्वाभावः" इत्युक्तं भाष्ये, तत्र तव मते पूर्वोत्तरपक्षयोर्निर्दलत्वापत्तिः, संज्ञाशब्दत्वेनैव तदभावादिति चेन्न, । आधुनिकविनियोगस्थले शास्त्रानुगतस्यैव विनियोग उचितो न तु शास्त्रविरुद्धस्येत्याशयात् । सर्वनामानीति त्वाधुनिको विनियोगः । अत एव "महत्याः संज्ञायाः करणे एतत्प्रयोजनम्" इत्यग्रिमं भाष्यं सङ्गच्छते । अनादिविनियुक्तस्थले तु यथाविनियुक्तानामेव साधुत्वं. यथा रघुनाथशब्दादाविति दिक् ।

नन्वेवमपि "मो राजि समः क्वौ" इत्यादिना वैयर्थ्यापत्तिः, सम्राडिति राजविशेषस्य संज्ञात्वेनानुस्वाराभावस्य वक्तुं शक्यत्वादिति चेन्न । तस्य संज्ञात्वस्य प्रामाणिकैरनुक्तेः । संज्ञाया एकनिवेशिनीत्वेन 'वाक्यार्थे साम्राज्यम्' इत्याद्यभियुक्तप्रयोगानापत्तेश्च ।

अत एव तत्र संज्ञापदानुपादानम् । "नखमुखात्संज्ञायाम्" इत्यादेरपि सामर्थ्यादुक्तार्थे तात्पर्य्यग्राहकताया वक्तुं शक्यत्वाच्च । अप्रमितस्य तु वकारप्रश्लेषस्योक्तार्थे तात्पर्य्यग्राहकत्वरूपफलकल्पनस्य निष्फलत्वाच्च ।

एतेन "नखमुखाद्"इत्यादेर्वैयर्थ्यादुक्तकल्पना न युक्तेति मन्दोक्तपास्तम् ।

वस्तुगत्या(१) शास्त्रव्यापारपूर्वकप्रयोगस्यैवाभ्यु-

---

(१) अयं भावः—शास्त्रस्य शब्दनिष्पादनहेतुता न सम्भवति शब्दानां नित्यत्वेन निष्पत्तिसम्बन्धायोगात् । नापि अर्थनिरूपितशक्तेरुत्पादबोधयोः कारणत्वम् । शक्तेः शब्दधर्मत्वेन धर्मिणो नित्यत्वेन धर्मस्यापि नित्यत्वात् । नच तस्या अर्थनिरूपितत्वेन निरूपकस्यानित्यत्वे कथं नित्यतेति वाच्यम् । अर्थबोधजननयोग्यत्वरूपायास्तस्याः असत्यप्यर्थे निराबाधतया नित्यत्वस्य सुस्थितत्वात् । बौद्धार्थबोधकत्वे तु शब्दस्य तस्यार्थस्य नित्यतयोक्तसंशयस्याप्यनवकाशाञ्च । शक्तिबोधस्तु वृद्धव्यवहारादिनैव सेत्स्यतीति न तत्र शास्त्रमुपकारि । अर्थबोधनायप्रयोगस्तु अपशब्दानामिव शब्दानामपि प्राप्त इति न तत्रापि शास्त्रापेक्षा । एवं च शास्त्रस्य वैयर्थ्ये प्राप्ते वार्तिककार आह—"अर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः क्रियते" इति । अर्थेन स्वबोधनाय प्रयुक्ते शब्दप्रयोगे तत्रालब्धप्रयोजनकं शास्त्रं धर्मनियमं बोधयति शास्त्रपूर्वके शब्दप्रयोग एव धर्मो भवति नान्यथेति । तेन लक्ष्यैकचक्षुष्केण शास्त्रानुसन्धानं विना ऽपशब्दपरिहारेण कृतस्यापि शब्दप्रयोगस्य न धर्मजनकता, नापि लक्षणानुसन्धायकेन कृतस्यापशब्दप्रयोगस्यापि । तथाच श्रुतिः "एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः शास्त्रान्वितः स्वर्गे लोके कामधुग् भवति" इति । सम्यक्ज्ञातत्वमपशब्दज्ञानपूर्वकन्ताङ्गन्नत्वेन ज्ञा-

दयहेतुत्वेनात्रापि तद्व्यापारकल्पनं संज्ञाशब्दे ऽप्युचितमेवेति मूलाशय इत्याहुः(१) ।

---

तत्वम् । सुप्रयुक्तत्वमर्थविशेषबोधजनकत्वमवधार्याभिमतेऽर्थेप्रयुक्तत्वम् । शास्त्रान्वितत्वं लक्षणानुसन्धानादित्यादिस्तदर्थः । एतदनुसन्धायैवोक्तरीत्या मूलाशयवर्णनमिति ।

( १ ) अत्र सूत्रे 'वान्तो य्यङ्गस्य' इति न्यासोऽस्तु, अङ्गेन प्रत्ययाक्षेपात्तद्विशेषणत्वे यीत्यस्य तदादिविधौ यादौ प्रत्यये ओदौतोरवावावित्यर्थेन गोयानं नौयानमित्यादिष्वदोषेण गव्यमित्यादीष्टसिद्धेरिति चेन्न । अशब्दात्प्रातिपदिकादपत्येऽर्थे इञि निष्पन्नेशब्दस्य अरिशब्देन समासे निष्पन्नयरिशब्दस्य गोशब्देन समासे गोयरिरित्यत्र यणादेशस्य स्थानिवत्त्वेन यथाश्रुते ऽवादेशो भवति इदानीमङ्गग्रहणेन प्रत्यासत्त्या यादिप्रत्ययनिरूपिताङ्गस्य ग्रहणेन गोशब्दस्य इप्रत्ययनिरूपिताङ्गत्वाभावेन तदनापत्तिः स्यात् । नचात्र वान्तादेशे कर्तव्ये यथाश्रुते परस्थितनिमित्तकत्वेन यणादेशस्यासिद्धतया न यादिप्रत्ययपरतेति नादेशप्रसक्तिरिति वाच्यम् । नाजान्तर्ये इति निषेधात् । नचात्र स्थानिवत्त्वस्यानल्विधाविति नव्यमते निषेधः । "अचः परस्मिन्"इत्यस्य तु "न पदान्त"इति निषेध इति स्थानिवत्त्वाप्राप्तिरिति वाच्यम् । अशब्दादाचारक्विबन्ताद्याति गोशब्देन समासे गोयमित्यत्रेष्टोऽवादेशो न स्यात् । गोशब्दस्य यकारनिरूपिताङ्गत्वाभावात् । स्थानिवत्त्वन्तूक्तरीत्या निषिद्धम् । एकाच्प्रातिपदिकेभ्य आचारक्विपोऽनभिधानन्तु लिट्येव "कास्प्रत्ययादु"इति भाष्यात् । अशब्दाद्याति वान्तादेश इष्टो न स्यात् । किञ्चोक्तवाक्यार्थ एव दुर्घटः । अङ्गेन प्रत्ययाक्षेपेऽपि तस्य शाब्देऽप्रवेशात् । आक्षिप्तस्य शाब्दबोधे भानास्वीकारात् । अत एव न घटशब्दादेकसम्बन्धिविधयोपस्थिताकाशस्य घटं पश्येत्यादौ शाब्दबोधः ।

केचित्तु यिप्रत्यये इति न्यस्य पूर्वसूत्रं सम्पूर्णमनुवर्त्य एचो यादौ प्रत्ययेऽयादय इत्यर्थेन गव्यमित्यादीष्टं साधयन्ति । चेयमित्यादौ शङ्कासमाधानमस्मिन् पक्षे फक्किकाप्रकाशोक्तमेवानुसन्धेयम् ।

तन्निमित्तस्येति किमिति(१)। पूर्वेण सिद्धत्वस्य

(१)'धातोस्तन्निमित्तस्यैव' अत्र केचित्' वान्तोयि प्रत्यये' इत्यनेन सर्वत्र यादिप्रत्यय एचो वान्तादेशः प्रसक्तस्तत्र धातोरेचश्चेद्वान्तादेशो यादि प्रत्ययनिमित्तस्यैवेति नियमेन धातुसम्बन्धियादिप्रत्ययानिमित्तस्य नेत्येतत्सूत्रफलम्। तेनौयते औयत इत्यादौ धातूपसर्गनिमित्तस्याटश्चेति वृद्धिरनिमित्तस्य च नेति तत्रापि प्रथमोदाहरणेऽन्तरङ्गपरिभाषयैव पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वरूपेणोपेद्ध इत्युदाहरणविषयोक्तेनान्तरङ्गवान्तादेशेन बहिरङ्गगुणस्याऽसिद्धतया न दोषः, द्वितीयेऽपि यकि पर एचो वान्तादेशो नेत्यर्थकेन 'न यकि' इति न्यासेन सिद्धम्, मास्तु 'धातोस्तन्निमित्तस्यैव'–इति सूत्रमित्याहुः। न च गोशब्दादाचारक्विबन्तात् कर्तृक्विपि गोषु साधुरिति विग्रहे इति 'तत्र साधुः'–इति यति गोयमित्यत्रापि वान्तादेशप्रसङ्गः, यक्परत्वाभावेन 'न यकि'इति निषेधाप्रवृत्तेः। सूत्रमते तु यादिप्रत्ययनिमित्तकत्वाभावान्न भवतीति वाच्यम्। 'नैव सन्ध्यक्षरमन्त्यमस्ति'इति 'इको गुणवृद्धी' 'वदव्रज'–इति सूत्रस्थभाष्यप्रामाण्यात्। 'ओतः श्यनि' 'आदेच उपदेशेऽशिति'–इति सूत्रस्थभाष्यप्रामाण्याच्चैजन्तेभ्य आचारक्विपोऽनभिधानमेव। अत एव कौमुद्युक्तानां'स्मृतो' 'से' इत्यादीनामनभिधानं शेखरेऽप्युक्तम्,। एवं च गोयमित्यादीनामसाधुत्वेन न्यासः सुवच इति चेत् भूधातोः 'अन्येभ्योऽपि दृश्यन्ते', इति विचि कीलालप आगत इति भाष्यप्रामाण्येन लोकेऽपि क्वचिद् विचो लाभेन विचि तन्निमित्तकगुणे भो इति रूपम्। ततः साध्वर्थे यति वान्तादेशो न भवति उक्तन्यासे स्यात्। एवं जनानवतीति जनौः, तस्मात् साध्वर्थे यति दोषः स्पष्ट एव। "धातोस्तन्निमित्तस्य" इत्यत्र धातोरित्यवयवषष्ठी तर्हि उश्शम्भुस्तमिच्छन् ऊयति आ ऊयति ओयति लङि औयतेत्यादौ यथा न्यासे वान्तदेशो न, एचो यादिप्रत्ययानिमित्तत्वात्, न यकिन्यासे तु स्यादेतदर्थं यादि किति यादौ तद्धिते न वान्तादेश इत्यर्थके 'अकित्तद्धितयोः' इति न्यासे बाभ्रव्यं गव्यतीत्यादि च न सिद्धेत्। न तीति न्यासे औयत इत्यादि, न ताकिति इति

नियमार्थत्वेनैव एवकारार्थे लब्धे तद्ग्रहणस्य स्पष्टतोऽवधारणार्थत्वात्तच्छब्दपरामृष्टयादिप्रत्ययनिमित्तस्यैचश्चेद्वान्तादेशस्तर्हि धातोरेवेति सूत्रार्थत्वारणाद् बाभ्रव्य इत्यस्योपपत्तावपि लव्यमित्यादेः पूर्वेणैव निष्पत्तेः सूत्रमेव किमर्थमिति पर्यनुयोक्तुराशयः । उत्तरमाह ओयत इति । आङ्पूर्वाद्वेञः कर्मणि लटि यकि यजादित्वात् सम्प्रसारणे "अकृत्सार्वधातुकयोः" इति दीर्घे आङा सहाद्गुणे च कृते वान्तादेशापत्तिः । अथ "पूर्वं धातुः साधनेन युज्यते" इतिभाष्यसिद्धान्तपक्षे यद् उपसर्गनिमित्तं कार्यमुपसर्गार्थाश्रितं तद् अन्तरङ्गम्, विशिष्टोपसर्गनिमित्तत्वात् । यच्च न तथाभूतम्, तत्र पूर्वागतसाधननिमित्तकमेवान्तरङ्गम् । अत एव प्रेद्ध इत्यत्र गुणो बहिरङ्ग(१) इति नधातुलोपसूत्रे भाष्यकैय-

---

न्यासे गव्यमित्यादि च न सिद्ध्येत् । तकारेत्संज्ञके यादौ नेति प्रथमस्य, तकारेत्संज्ञके ककारेत्संज्ञके च यादौ नेति द्वितीयस्यार्थात् ।

(१) तत्र सूत्रे धातुलोपपदस्य षष्ठीसमासत्वमाश्रित्य कृत्स्नधातोर्लोपाभावाद् "दुरोणो लोपश्च" इतिसिद्धदूरमित्यत्र सम्भवेऽपि तत्र गुणवृद्ध्यप्राप्त्या निषेधवैयर्थ्यभिया धातुपदस्य धात्वंशपरकत्वं स्वीकृत्य 'धात्वंशलोपे जाते सति आर्द्धधातुकनिमित्ते गुणवृद्धी नेति उक्तार्थे प्रेद्ध इत्यत्र क्तप्रत्ययनिमित्तकोपधानकारलोपे प्रशब्दाकारमाश्रित्य प्राप्तगुणप्रतिषेधमाशङ्क्य पदद्वयसापेक्षस्य गुणस्य बहिरङ्गत्वेन न तत्र निषेधकशास्त्रप्रवृत्तिरित्युत्तरितमिति बोध्यम् ।

टयोरुक्तम् । तथा चात्र धातूपसर्गकार्यस्य गुणस्य बहिरङ्गत्वादन्तरङ्गे वान्तादेशे ऽसिद्धत्वान्नोक्तदोषावकाश इत्यपरितोषादाह **औयतेति** । ननु "नाजानन्तर्ये" इतिनिषेधादस्तु पूर्वोक्तमपि प्रत्युदाहरणमिति चेन्न, यत्र(१) कार्यविधावानन्तर्येणाचोराश्रयणम्, तत्रैव परिभाषोपस्थितेः, यथा—अक्षद्यूः । तत्र हि "इको यणचि" इति वचनादिगचोराश्रयणम्, इह तु न तथेति दिक् ।

एवं चेदमेव प्रत्युदाहरणम् । अत्रापि वेञः कर्मणि लिङि यकि सम्प्रसारणे दीर्घे आटा सह "आटश्च" इति वृद्धौ वान्तादेशापत्तिः । नह्यत्र धातूपसर्गकार्यमस्ति, येनासिद्धत्वं स्यादिति भावः ।

"लोपः शाकल्यस्य" इति लोपस्योत्थानप्रसङ्गाल्लोपान्तरस्योत्थानेन कार्यप्रसङ्गमाह **कानि सन्तीति** ।

अयं भावः—अस्ति तावत्सिद्धान्तग्रन्थेषु तत्र तत्रोपनिबद्धं पक्षद्वयं पदसंस्कारो वाक्यसंस्कारश्चेति ।

---

(१) इदं हरदत्तादिमते । तन्मते "षत्वतुकोरसिद्धः" इति संपूर्णसूत्रस्योक्तपरिभाषाज्ञापकत्वार्थमन्तरङ्गे बहिरङ्गे वाऽच्द्वयानन्तर्याश्रयणं तत्रोक्तपरिभाषाप्रवृत्तिरिति । नवीनैस्तु तुग्ग्रहणमात्रस्य तज्ज्ञापकत्वस्वीकारेण तत्रान्तरङ्गे तत्राच्द्वयानन्तर्यासम्भवादच आनन्तर्यस्याश्रयणे तत्परिभाषाप्रवृत्तिराश्रिता । तन्मते च अज्निष्ठान्यनिरूपितव्यवधानाभावनिमित्तके ऽन्तरङ्गे बहिरङ्गपरिभाषाऽप्रवृत्तिरित्यादिरर्थ इत्यादिरन्यत्र विस्तरः ।

तत्र परस्परनिरपेक्षाणि पदानि संस्क्रियन्ते साधुत्वेनान्वाख्यायन्ते यत्रेति बाहुलकादधिकरणे घञ् । अत एव "युष्मद्युपपदे" इत्यादीनि निर्वहन्ते ।

तदुक्तं "संस्कृत्य संस्कृत्य पदान्युत्सृज्यन्ते तेषां च यथेष्टमभिसम्बन्धो भवत्याहर पात्रं पात्रमाहर" इति "वृद्धिरादैच्" सूत्रे भाष्ये ।

वाक्यसंस्कारस्तु वाक्यात् सुप्तिङन्तचयरूपात् पदानि संस्क्रियन्ते यत्रेति तथोक्तः ।

यद्यपि वाक्यमखण्डं निरवयवम्, तत एवार्थप्रतीतेः, लोके तस्यैव व्यवहाराच्च, तथाऽप्यन्वाख्यानलाघवाय तत्रावयवान् कल्पयित्वा शास्त्रं सफलीक्रियत इत्यन्यत्र विस्तरः ।

तदप्युक्तम् "वाक्यादुद्धृत्य पदान्यन्वाख्यायन्ते" इति भाष्ये । तथा चाद्यपक्षे कानि सन्तीत्यनयोः पार्थक्यनिष्पन्नत्वाद् "अचः परस्मिन्" इत्यस्याप्रवृत्तेर्न चोद्यावसरः, किन्तु वाक्यसंस्कारे । कानि सन्तीति वाक्ये प्रक्रियाक्रमेण किंशब्दोत्तरं जस् तदुत्तरान्सूधातोर्झीति किमः कादेशे नुमि दीर्घे असूधातोः श्नसोरल्लोपे "झोऽन्तः" इत्यन्तादेशे च "अचः परस्मिन्" इत्यनेन परझिनिमित्तकाल्लोपः स्थानिवत्स्थानिभूतादका-

रात्पूर्वत्वेन दृष्टस्य नकारोत्तरेकारस्य यणूरूपे विधौ कर्त्तव्ये इति स्थानिवद्भावादस्ति चोद्यावसरः।

न चात्रापि पक्षे विनिगमनाविरहात्तावत्सन्तीति साधयित्वा कानीति निष्पादने दोषाभाव इति वाच्यम्। "अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलवद्" इतिज्ञापयिष्यमाणपरिभाषयाऽत्र पूर्वोपस्थितनिमित्तत्वरूपमन्तरङ्गत्वमादायान्तरङ्गाणां प्रथमं प्रवृत्तिरिति कानीत्यस्यैव तावत्साधनीयत्वात्।

पदान्तविधाविति। पदस्य चरमावयवे विधावित्यर्थः(१)। तन्निषेधादिति। नपदान्तेतिसूत्रेण स्थानिवत्त्वनिषेधादित्यर्थः।

न च तस्मिन् प्रतिषिद्धेऽपि बहिरङ्गपरिभाषया

---

(१) नपदान्तेत्यत्र विधिशब्दो भावसाधनः पदान्तस्येत्यत्र कर्मणि षष्ठी। तेन पदचरमावयवकर्मके विधाने परनिमित्तोऽजादेशो न स्थानिवदित्यर्थः संपद्यते।

यत्तु विधिशब्दं कर्मसाधनं स्वीकृत्य पदान्तस्येतिसम्बन्धसामान्यषष्ठ्या पदान्तोद्देश्यकविधेयस्थलेऽयन्निषेध इति। तदयुक्तम्। वृक्षं वातीति वृक्षोपपदकाद्वाधातोः क्विपि निष्पन्नवृक्षवाशब्दादाख्यानणिचि विचि निष्पन्नवृक्षव्शब्दात्सौलोपे च वृक्षवित्यत्र वकारस्य पदान्तत्वेन तदुद्देश्यकलोपे एतन्निषेधप्रवृत्त्या वकारलोपप्रसङ्गात्, सिद्धान्तेतु लोपस्य पदानवयवत्वेन निषेधाप्रवृत्त्या णिचः टेर्वा लोपस्य स्थानिवत्त्वेन वकारान्तेऽपदत्वेन वलोपाप्रसक्तिरित्यादिरन्यत्र विस्तरः।

लोपस्यासिद्धत्वेन यणादिकं दुर्वारम् । पदद्वयापेक्षत्वेन यणादेरत्र बहिरङ्गत्वाद्, "नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः" इति निषेधाच्चेति दिक् ।

ननु रपर इत्युक्ते रप्रत्याहारेण लपरश्चेतिवचनेन वा रेफलकारयोर्बोध ऋकारलृकारयोः प्रमाणत आन्तर्यात्साङ्कर्यं स्यादत आह तत्रान्तरतम्यादिति । स्थानत इति भावः । रेफशिरस्कस्थारित्यस्य रेफद्वारा ऋकारेण मूर्द्धादिस्थानत्वात् ।

अयं भावः-(१)उरण्सूत्रे "षष्ठी स्थाने-" "स्थानेऽन्तर-"

---

(१) 'उरण् रपरः' । नन्वत्र 'उरणो रक्' इत्येव सूत्रमस्तु । ऋकारस्थाने योऽण् तस्य प्रसङ्गावस्थायां रगागम इत्यर्थः । एवं चावयववाचिपरशब्दग्रहणाकरणे लाघवमिति चेन्न । कृ.तृ.धातोर्यङ्लुकि चाकर्त्ति तातर्त्तीत्यादावभ्यासस्योरदत्त्वे तस्य रगागमेऽभ्यासस्य कित्त्वेनाकित इतिपर्युदासात्-'दीर्घोऽकितः' इति दीर्घानापत्तेः । वस्तुतोऽकित इत्यस्याभ्याससमानाधिकरणाविशेषणत्वेनाकित इत्यत्राभ्यासत्वावच्छिन्नोद्देश्यताककित एव ग्राह्य यदागमपरिभाषयाऽकारग्रहणेन तुग्विशिष्टस्य ग्रहणेऽपि अभ्यासग्रहणेनाग्रहणादकित इति पर्युदासाप्राप्तेर्दोषाभावात् । अत एव चाच्छायते इति भाष्योदाहरणसङ्गतिः, अन्यथा ऽन्तरङ्गत्वात् 'छे च'-इति तुक्यभ्यासस्य कित्त्वेन दीर्घाभावे तदसङ्गतिः स्पष्टैव । एवं चोक्तयुक्त्या दोषाभावेन उः स्थाने योऽण् तस्य जायमानस्य रमागम इत्यर्थकेन 'उरणो रम्'-इति न्यासान्तरेण वा दोषाभावेन न्यासस्य सुवचत्वे विघ्नलेशोऽपि नेति विभावयन्तु विज्ञा इत्यलम् ।

अत्र केचित्-इदं सूत्रं न कार्यम्, 'अदेङ्गुणो वृद्धिरादैः

इति सूत्राभ्यां स्थानेशब्दद्वयमनुवर्त्तते, तत्रैकस्यानुवादेऽपि स्थानसम्बन्धलाभो, द्वितीयस्य लक्षणया प्रसङ्गावस्थाकालबोधश्च प्रयोजनम्, तेन गुणवृद्ध्योः प्राप्त्यवस्थायामेवाणो रपरास्सम्पन्ना इति प्रमाणतोऽन्तरतमावेङैचौ बाधित्वा स्थानतोऽन्तरतमोऽणेव भवतीति(१)।

---

ङ्'इत्यत्र अरेङ्गुणो वृद्धिरारैजिति न्यासेनारारोर्गुणवृद्धिसंज्ञे गुणवृद्धिविधायकेन तयोर्विधानात् कृष्णर्द्धिः प्रार्च्छतीत्यादिसिद्धेः। विधानसामर्थ्याच्च रेफस्य नेत्संज्ञा। एवं च प्रक्रियालाघवमपि, गुणवृद्धी अरारावेवेति भाष्यतोऽपि न विरोधः। अरारोर्ऋकारेणान्तर्येऽपि सौलभ्यमित्याहुस्तदसत्। यः स या सा इत्यादौ "त्यदादीनामः' इति विहिताकारस्य गुणत्वेन पररूपस्य शालाद्याकारादेर्वृद्धिसंज्ञया 'वृद्धिर्यस्याचामादिः'—इत्यवृद्धत्वे छादेश्चासिद्धत्वस्यैव दोषात्। तपरत्वाभावेन त्रिमात्रिकचतुर्मात्रिकयोरप्येङैचोर्गुणवृद्धिसंज्ञया गङ्गोदकं गङ्गौघ इत्यादौ त्रिमात्रिकचतुर्मात्रिकयोर्गुणवृद्ध्योरतिप्रसङ्गाच्च। यद्येतदर्थम् 'अरदेङ्गुणः, वृद्धिरारादैजिति विन्यस्य अर् अत् एङ् आर् आत् ऐचां गुणवृद्धिसंज्ञया नोक्तदोष इत्युच्यते 'ऋत इद्धातोः' इत्यादिना रेफविशिष्ट इरादिरेव विधातव्यः का क्षतिरिति चेन्न। "ऋत उद्"-इत्यत्रापि रेफविशिष्टोरित्यस्यैव पाठेन तत्रत्यतपरकरणस्य भाव्यमानोऽप्युकारः सवर्णान् गृह्णातीति परिभाषाज्ञापकता न सिद्ध्येत्। तत्र ज्ञापकान्तरानुसरणेऽपि 'भृञामित्' इत्यनेनेरित्यस्यैव विधानेन तस्य चानेकाल्त्वेन सर्वादेशत्वापत्तेः। अत्र यद्यपि यथाश्रुते इरित्यस्य विधानेन्त्यादेशोऽपि न क्षतिस्तथाऽपि 'आव्ज्ञप्यृधामीत्' इत्यनेन ईर्त्सतीत्यत्र रेफविशिष्टविधानस्यावश्यकत्वेन तत्र विधानसामर्थ्याद्रेफस्य नेत्संज्ञा। एवं च ईप्सतीत्यादौ रेफश्रवणापत्तेः सत्त्वेन यथाश्रुतमेव सम्यगिति।

(१) स्थानेऽन्तरतम इत्यस्य स्थानिविशिष्टधर्मवानादेशो भ

तदाह कृष्णर्द्धिरित्यत्रारिति ।

नचैवं कर्त्तेत्यादावनेकाल्त्वात्सर्वादेशप्रसङ्गः । ऋस्थानित्वमुपजीव्य प्रवृत्तस्य रपरत्वस्य सर्वादेशतानापादनादुपजीव्यविरोधात् । तदुक्तं स्थानेऽन्तरतमसूत्रे वार्तिककृता, "सर्वादेशप्रसङ्गस्त्वनेकाल्त्वात् । न वाऽनेकाल्त्वस्य तदाश्रयत्वादादेशेनाविघातः" इति । न च क्रियत इत्यादौ रिङादिष्वण् रपरः कुतो नेति वाच्यम् । अनादेशत्वात् । आदेशत्वं हि समुदाये विश्रान्तम् । नन्वेवं कृष्णर्द्धिरित्यादौ पूर्वपरसमुदायस्य स्थानित्वेन ऋकारस्यैव स्थानित्वाभावाद्रपरत्वं न स्यादिति चेन्न । पूर्वपरयोरिति द्विवचननिर्देशेन सहितयोरवयवयोरेव स्थानित्वात् । तदुक्तं भाष्ये—"यो ह्युभयोः स्थाने भवति लभतेऽसावन्यतरतो व्यपदेशम्" इति । अत एव भिन्नादिष्विव द्वयोः स्थानिनोर्द्वावादेशौ मा भूतामित्येकग्रहणम् । गुण इत्यादेर्विधेयबोधकत्वेन तत्रैकत्वसंख्याया विवक्षणेनोभयोः पूर्वपरयोरेकवाक्यतयैव विधेयान्वये 'अनयोः पूलयोः

वतीत्यर्थः । वैशिष्ट्यंच स्ववृत्तित्वं-स्वस्थानिकादेशवृत्तित्वं-स्वस्थानिकादेशेतरयावदादेशावृत्तित्वमितिसम्बन्धत्रितयेन । एवं चेकोयणित्यनेन इकारस्य स्थाने तालुस्थानजन्यत्वधर्मस्य स्ववृत्तित्वात्स्वस्थानिकादेशयकारवृत्तित्वात्तदितरवकारादिष्ववृत्तित्वेन स्ववैशिष्ट्यात्तद्वतो यकारस्यैव प्रवृत्तेरित्यन्यत्र विस्तरः ।

कटं कुरु'इत्यादावित्रोभयसम्बन्ध्येकविधेयस्य प्रतीतेरेक-ग्रहणं स्पष्टार्थमित्यन्यदेतत् । न च सर्वत्र विधा-घादेशानेव रलपरान्विधायेदं सूत्रं सुत्यजमिति वाच्य-म् । "आवृज्ञप्यृधामीत्" "भृज्ञामिद्"इत्यादौ दोषापत्ते-रिति सङ्क्षेपः ।

परस्मादप्यपवादस्य प्रबलत्वाद्वृद्धिरेव बाधिका, त-त्रापवादविषये बाध्यविशेषचिन्ताश्रयमूलकं न्यायमाह-पु-रस्तादिति । "पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्" इति न्यायः(१) । प्राग्वर्त्तिनोऽपवादा इत्यर्थः । एतत्सर्वमुपपादयिष्यते ।

"एत्येध—" "एङि पर-", "ओमाङोः"इति पाठ-क्रमः । तत्र अव्यवहितोत्तरवर्त्तिन एङि पररूपस्यैव बाधि-का वृद्धिः, न तु तदुत्तरवर्त्तिन"ओमाङोः"इत्यस्य भवति । अपवादस्यावश्यं स्वपरस्मिन् बाधनीये प्रथमोपस्थिता-नन्तरबाधेनाकाङ्क्षानिवृत्तेश्चारितार्थ्ये पश्चादुपस्थिता-न्तरितबाधे मानाभावाद्, आकाङ्क्षाशान्तेः, सकृदुपस्थित-ये विप्रतिषेधशास्त्रबाधनेऽपि पुनरुपस्थितये तद्बाधे बी-जाभावाच्चेति भावः ।

---

(१) पुरस्तात्पूर्वं पठिता अपवादा बाधकशास्त्राणि अनन्तरान् स्वावधिकोत्तरत्वविशिष्टान् विधीन् बाधन्त उत्तरान् स्वबाध्यव्य-वहितान् विधीन् न बाधन्ते इत्यर्थः ।

असाधुरेवेति । वृद्धियुक्तोऽयं प्रयोगो ऽपपाठ इत्यर्थः । आङ्गिणोरेकादेशस्य पूर्वान्तवद्भावेनाङ्त्वे विप्रतिषेधसूत्रप्राबल्याद् "ओमाङोश्च" इत्यनेनोपैतीत्यत्र लब्धावकाशवृद्धेर्बाधादिति भावः । ननु प्रौढ इत्यत्रेव प्रोढवानित्यत्रापि वृद्धिः प्राप्तेत्यत आह अर्थवदिति । विशिष्टरूपोपादाने(१) उपस्थितस्यार्थस्य शब्दं प्रति विशेषणतयाऽन्वयसम्भवे तत्त्यागे मानाभावो ऽस्याः परिभाषाया मूलम्(२) ।

किञ्च "स्वं रूपम्" इतिसूत्रे स्वशब्देनात्मीयवाचिनाऽर्थो गृह्यते रूपशब्देन स्वरूपम्, तेन तदुभयं शब्दस्य संज्ञीति सूत्रार्थः । तत्रार्थो न विशेष्यो, ऽर्थे शास्त्रीयकार्यासम्भवात्, किन्तु शब्दस्य विशेषणम् । एवं चार्थविशिष्टः शब्दः संज्ञीति फलितम् । तेनैषा

---

(१) अयम्भावः—रूपं श्रावणप्रत्यक्षविषयतावच्छेदको धर्मः स चोपस्थितत्वात्तेनैव स्वाश्रयोत्तरवृत्तित्वसम्बन्धेन विशिष्टः । एवं चोक्तसम्बन्धेन विशिष्टरूपमानुपूर्वीति फलति । तस्योपादानं बोधविषयतावच्छेदकत्वेन स्वीकारो यत्र तत्रेत्यर्थः । तथा च आनुपूर्व्यवच्छिन्नविषयताप्रयोजकपदस्थले इत्यर्थः पर्यवस्यतीति दिक् ।

(२) शब्देऽर्थे च पदानां खण्डशक्तिमत्त्वेन तदुपस्थितयोरुभयोर्मध्ये शब्दस्याप्राधान्यम् अर्थस्य विशेष्यता लोके, इह शास्त्रे तु राज्ञ इत्यादौ अर्थे कार्यस्य बाधेन शब्दे प्राधान्यमाश्रीयते तत्र च विशेषणतयाऽर्थस्यान्वयसम्भवादर्थविशिष्टशब्दग्रहणं सिध्यतीति दिक् ।

परिभाषा निष्पन्नेति भाष्ये समाख्यातम् । कुत्रचिदर्थस्य शब्दो विशेषणमित्यादिकं संवादचिन्तामणौ व्यक्तम् । प्रकृते चार्थवत्तायाः समुदाये व्यासक्तत्वादूढवत एकदेशस्योढस्यानर्थकत्वादवयवस्यार्थवाचकत्वाभावान्नात्र वृद्धेः प्राप्तिरिति भावः ।

केचित्तु "प्रादूह"इतिविधेः पदविधित्वेन"समर्थः पदविधिः"इत्यस्यावश्यमुपस्थितौ प्रशब्दद्योत्यार्थान्वितार्थकेषु वृद्धौ निर्व्यूढायामुत्तरपदाक्षेपे सति क्तवत्वन्तैकदेशोढशब्दे परे वृद्धेः प्राप्तिरेव नास्तीति नार्थोऽर्थवत्परिभाषासञ्चारेण । सञ्चारयितव्यश्चावश्यं पुनः समर्थः पदविधिः, उत्तरपदाक्षेपश्चात्र । अन्यथोढश्च घटश्चोढघटौ, प्रकृष्टावूढघटौ प्रोढघटावित्यत्र ऊढशब्दस्य द्वन्द्वेन सह सामर्थ्ये तदवयवेन सह सामर्थ्यस्य निष्प्रत्यूहत्वात् ऊढस्य शक्यार्थवत्त्वाच्च; अथ वा सत्यप्युत्तरपदाक्षेपे यदि कस्यचिन्नाम 'ऊढः'इति क्रियते तदा तस्मिन्नुत्तरपदे प्रोढ इत्यत्रातिप्रसङ्गवारणाय प्रसिद्ध्यप्रसिद्धिनिबन्धनो गौणमुख्यन्यायो ऽनुसरणीयः, स चार्थवत्परिभाषाप्रवृत्त्यधीन इत्यभिप्रायकस्तत्सञ्चारो ऽस्त्वित्याहुः ।

ननु रपरश्रुतेरन्यत्र चरितार्थत्वादुपार्च्छतीत्यादा-

वेकादेशस्थले विसर्गः स्यादत आह अन्तवद्भावेनेति। मानमाह निर्देशादिति। न च "कर्त्तरि चर्षि" इत्यादौ गुणस्य पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेन बहिरङ्गासिद्धत्वाद्रेफाभावान्न विसर्ग इति वाच्यम्। गुणस्येव विसर्गस्यापि रेफषकारात्मकवर्णद्वयाश्रितत्वेन बहिरङ्गत्वात्। परनिमित्तकत्वं तूभयोः समम्। "उरण् रपरः" इत्यत्र भाष्ये तु "रेफस्य पूर्वान्तवत्त्वे विसर्जनीयप्रतिषेधो वक्तव्यो नार्केल्पिनार्कुटाद्यर्थम्" इत्यपूर्ववचनमेवारब्धमिति दिक्।

उपसर्गेणैवेति। यं विना यस्यानुपपत्तिः स तेनाक्षिप्यते यथा "आकृतिः पदार्थः" इति दर्शने 'घटमानय' इत्युक्ते जातेरमूर्तत्वादानयनानुपपत्त्या जातिर्व्यक्तिमाक्षिपति, तथोपसर्गसंज्ञायाः(१) क्रियामन्तराऽनुप-

(१) क्रियायोग एवोपसर्गसञ्ज्ञाविधानात्तेन विनोपसर्गत्वानुपपत्तिरिति भावः। क्रियायोगो हि त्रिविध उपसर्गसञ्ज्ञोपयोगी। तत्र स्वविशेषविषयकतात्पर्यग्राहकत्वरूपः प्रथमः प्रहरतीत्यादौ वर्तमानः, स्वानुयोगिकसम्बन्धबोधकत्वरूपो द्वितीयः, वृक्षं प्रतिसिञ्चतीत्यादौ कर्मप्रवचनीयसञ्ज्ञकस्थले वर्तमानः। अत एव तत्रोपसर्गसञ्ज्ञाप्राप्त्या तदपवादत्वं कर्मप्रवचनीयसञ्ज्ञाया ग्रन्थकृद्भिरुक्तं सङ्गच्छते। तृतीयस्तु अभ्यागच्छतीत्यादौ उक्तद्विविधयोगरहिते उक्तद्विविधयोगाभावविशिष्टस्ववाचकधातुघटितवाक्यघटकत्वरूपस्तत्रत्यकर्मप्रवचनीयसञ्ज्ञाया उपसर्गसञ्ज्ञाऽपवादत्वसिद्धयेऽभ्युपगन्तव्यः। अथवा आगमनक्रिया-

पन्नत्वादुपसर्गः क्रियामाक्षिपति । सा च धात्वर्थः, तस्याश्चाक्षेपासम्भवात्तद्वाचिन आक्षेपः फलतीत्यभिप्रेत्याह धातोरिति । पुनर्वृद्धीति । तत्सामर्थ्याद्वृद्धिरेव, न कदाऽपि तदभाव इति फलितार्थः ।

ननूपसर्गेणाक्षिप्तेऽपि तस्मिन् प्रगत ऋद्धः प्रर्द्ध इत्यादौ प्रस्योपसर्गत्वाद्दृद्धस्य ऋकारादिधातुप्रभवत्वाच्च वृद्धेः प्राप्तौ तन्निवारणायोपसर्गताप्रयोजकधातुप्रभवत्वलाभार्थं धातुग्रहणमस्तु कथमन्यार्थतेति चेन्न । 'यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञे भवतः' इति "उपसर्गात्सुनोति"इत्यत्राष्टमे भाष्योक्त्यैव समाधानात् । ज्ञापितश्चायमर्थ "उपसर्गाः क्रियायोगे" इति सूत्रस्थयोगग्रहणेन(१)। अन्यथा तृतीयान्तेन सप्तम्यन्तेन वा क्रियापदेन तदर्थे सिद्धे तद्वैयर्थ्यमेव । पाक्षिको ऽपीति । "ऋत्यकः" इत्यस्य विकल्पप्राप्तिकत्वात्तदभावे यथाश्रुतेनैव सिद्धेर्योगविभागस्य पाक्षिकानिष्टवृद्ध्यभाववारणफलकत्वादिति भावः ।

---

रूपविशेषस्य आभी द्विर्बद्धमिति न्यायेन द्योतकौ स्वीकृत्य प्रथमेनैव तत्त्वासिद्ध्या न तृतीय आश्रयणीयः । एतेन अवदत्तमित्यादावुपसर्गप्रतिरूपकाव्ययस्थलेऽतिव्याप्तिं वदन्त परास्ताः इति दिक् ।

(१) अयम्भावः-स्तोश्चुनेत्यादाविव विनाऽपि योगशब्देन क्रियया इति तृतीयान्तमात्रेणैव योगार्थे लब्धे कृतं योगग्रहणमुक्तार्थज्ञापकमिति ।

ननु " न माङ्योगे" इत्यत्र भाष्ये "अटश्च" इति सूत्रयित्वा 'अस्वपो ह्सन्' इत्यत्र वृद्धिमाशङ्क्य धाता-वित्यपकृष्य समाहितत्वेन धातावित्यस्य चारितार्थ्या-द्योगविभागे मानाभाव(१) इति चेन्न । पूर्वत्र कर्तव्ये

---

(१) अयं भावः-"लुङ्लङ् लृङ्क्षु" इत्यादिनाऽजादिधातुसा-धारणेन अड्विधानेनैव सिद्धौ वार्तिककृता 'आडजादीनाम्' इति प्र-त्याख्यातम् । नन्वटि सति वृद्धिरेचि इत्यनेनैधतेत्यादिसि-द्धावपि ऐन्दिददित्यादि न सिद्ध्येत्, तत्र वृद्धेरप्राप्तेः । किञ्च "अ-तो गुणे" इति पररूपप्रवृत्त्यैधतेत्याद्यपि न सिद्ध्येत् ।

यदि तु 'आटश्च' इत्यस्य स्थाने 'अटश्च' इति क्रियते तथा सत्यैधतेत्यादौ पररूपापवादवृद्ध्येष्टसिद्धावपि अस्वपोऽहसन्नित्यत्र वृद्धिः स्यात् । 'रुदश्च पञ्चभ्यः', 'अड्गार्ग्यगालवयोः' इति विहिता-डागमस्य सत्त्वात् "अतो रोरप्लुतात्" इति रोरुत्वेऽच्परत्वादिति चेत् । 'उपसर्गादृति धातौ' इत्यतो धातावित्यस्यापकर्षादजादौ धातोवित्यस्य धात्ववयवेऽचीति वा व्याख्यानात् ।

"आण् नद्याः" इत्यत्र तु अड् वक्तुमशक्यः, बहुश्रेयस्यै इत्यत्र "वृद्धिरेचि" इति वृद्धिं बाधित्वा "अतो गुणे", इति पररूपापत्तेः । 'अ-टश्च इत्यस्य तु न प्रवृत्तिस्तत्र धातावित्यस्यापकर्षाद् धात्ववयवाच्-परत्वाभावात । अटो विधानसामर्थ्यमपि न बहुश्रेयस्यामित्यादौ नुड्बाधनेन चारितार्थ्यात् । न चास्वपोऽस्तीत्यादौ ओकारस्या-न्तवद्भावे नाट्त्वात् परत्राजादिधातुसत्त्वाच्चोक्तदोषस्तदवस्थ इति वाच्यम् । "आद् गुणः" इत्यस्मादादित्यनुवर्त्याकाररूपादटोऽचि परे वृद्धिरिति व्याख्यानेनादोषात् । एतेनाटश्चेत्युक्तावटगतावित्यस्मा-ल्ल्युट्यटनमित्यत्रातिप्रसङ्गः स्यादित्येतदपि निरस्तम् ।

यत् तु शेखरकृता 'आटश्च' इत्यस्य प्रत्याख्यानेऽजादीनाम-प्यडागमे "अतो गुणे" इत्यस्यानन्तरम् 'अटो न' इति विन्यस्य अटः पररूपं नेत्यर्थ इति व्याख्यायातीदित्यादौ पररूपं नेत्युक्तम् । एवं च 'अटो न' इति न्यासेनैव बहुश्रेयस्यै इत्यादावपि पररूपनिषेधे

सिद्धे अत्राट् वक्तुमशक्य इति ग्रन्थो विरुद्ध इत्याहुस्तन्न । 'अटो न' इत्यस्य 'अटश्च' इति वृद्धि बाधकपररूपबाधकत्वस्यैव सप्रमाणत्वात् । प्रमाणं तु 'अटश्च' इति चकारेण पुनर्वृद्धिविधानं बाधकबाधनार्थम्, तेन 'अटो न' 'उस्योमाङ्क्षु' इत्यादि नारम्भणीयमिति वाच्यम् । अन्यथा "वृद्धिरेचि" इति वृद्धिबाधकपररूपबाधनाय तस्यावश्यकतयोक्तिर्व्याहतैव स्यात्, बहुश्रेयस्यै इत्यत्र 'आण्नद्याः' इत्यत्र 'अण्नद्याः' इत्युक्तौ पररूपं स्यादेवेति केचित् ।

अत्रापि 'अण्नद्याः' इत्येव सुवचनम् । ह्रस्वविधानसामर्थ्यात् 'अतो गुणे' इत्यस्याप्रवृत्तौ यथायथं वृद्धिसवर्णदीर्घाभ्यां बहुश्रेयस्यै बहुश्रेयस्या इत्यादिरूपासिद्धेः । ननु 'परत्वादाटा नुड् बाध्यते' इत्युत्तरग्रन्थपर्यालोचनया ङेरामि कृते तस्य नुडागमनिवारणार्थमाड्विधानावश्यकत्वात् सामर्थ्यमुपक्षीणमिति चेद्, एवं तर्हि 'ह्रस्वनद्यापः' इत्यस्यानन्तरं 'ङेर्ने' इत्येव सूत्र्यतामामीत्यस्यानुवृत्त्या ङेरामो नुड् नेत्यर्थलाभात् । तस्मात् 'अण्नद्याः' इति विधानसामर्थ्यात् 'अतो गुणे' इति न प्रवर्त्तत इत्यन्ये ।

न चैवमपि आततत् आतीदित्यादि न सिध्यति 'अटश्च' इत्यस्य ऐन्दिददित्यादौ सावकाशतया परत्वादिह "अतो गुणे" इत्यस्यैव प्रवृत्तेरिति वाच्यम् । 'अटो न' 'उस्योमाङ्क्ष्वाटः' इति सूत्रवार्त्तिकादिप्रत्याख्यानाय 'अटश्च' इत्यत्र 'च' इति-योगविभागेन पुनर्वृद्धिविधानं बाधकबाधनार्थमित्यभ्युपगमादाततत् आतीद् बहुश्रेयस्यै इत्यादौ सर्वत्राटश्चेत्यस्यैव प्रवृत्तेः । अस्वपोऽहसन्नित्याद्यर्थं धातावित्यस्यापकर्षणमपि न कार्यम् । तत्रान्तरङ्गपरिभाषया वृद्धिवारणात् । तद्यथा अटि कृतेऽस्वपस् अहसन्निति स्थिते सकारस्य रुत्वे 'अतो रोः' इत्युत्वेऽस्वप-उ-अहसन्निति स्थिते पकारोत्तराकारस्योकारेण वृद्धिः प्राप्ता तत्र एकपदसम्बन्धिवर्णापेक्षस्वरूपेण 'न धातुलोप'-इति सूत्रस्थभाष्यस्वरससिद्धनान्तरङ्गत्ववता वृद्ध्यादेशेन पदद्वयसम्बन्धिवर्णद्वयापेक्षस्वरूपबहिरङ्गत्ववतो 'अतो रोः' इति विहितस्योत्वस्यासिद्धत्वेन वृद्धेरप्राप्तेर्न दोषलेशोऽपि ।

अत्र करणात्(१)। अत एव "धातावित्युभयोः शेषः" इत्युक्तं भाष्यकृता।

केचित्त्वाक्षिप्तेनैव सिद्धे ऽतिरिच्यमानधातुपदेनोपसर्गावयवाकाराद्धात्ववयव ऋकारे परे तयोः पूर्वपरयोर्वृद्धिरेवेत्युचितार्थः सम्पद्यते। तथा चैवंरीत्या पाक्षिकप्रकृतिभाववारणे सिद्धे नार्थो गौरवग्रस्तेन योगविभागेनेत्याहुः।

---

यत् तु 'नाजानन्तर्यें'—इति परिभाषया निषेधेन अन्तरङ्गपरिभाषाया अप्रवृत्त्या दोषस्तदवस्थ इति वाच्यम्। तस्या अनित्यत्वात्, अनित्यत्वस्येष्टानुरोधिप्रवृत्तेरत्राप्रवृत्त्यैवेष्टसिद्धेः। किञ्च "षत्वतुकोरसिद्धः" इत्यत्रत्यतुग्ग्रहणज्ञापितान्तरङ्गपरिभाषानित्यत्वस्वरूपैवैषा, तथा सति पूर्वोक्तयुक्त्याऽत्र प्रवृत्तेरिष्टत्वादिष्टसिद्धिरिति परे।

न च "आडजादीनाम्" इति सूत्राभावे आस्ताम् आसन्निति कथमटा सिद्ध्यति "श्नसोः" इत्यल्लोपेऽटश्चेति तत्र वृद्ध्यप्रवृत्तेरिति चेन्नैवम्। अन्तरङ्गत्वात् प्रागेवाडागमे कृते वृद्धौ च कृतायां पश्चात् 'श्नसोः' अल्लोपस्याप्रसक्तेः। न च "वार्णादाङ्गम्" इति परिभाषया वृद्धेः प्रागल्लोप एव स्यादिति शङ्क्यम्। व्याश्रयत्वात्। वार्णपरिभाषाया अनित्यत्वाद्वा। तत्र हि "श्नसोरल्लोपः" इत्यत्रत्यतपरकरणमेव लिङ्गम्। यदि वृद्धेः प्रागेवाल्लोपः स्यात् तपरकरणमनर्थकमेव।

यद्यपि वैदिकप्रक्रियायामानट् आव इत्यादौ "छन्दस्यपि दृश्यते" इत्याडागमस्य वक्ष्यमाणत्वात् तदर्थमाड्विधानं कर्त्तव्यम्, तथाऽप्याटं विनैवाड्व्यत्ययेनाड्पूर्वकत्वेन वा व्याख्ययेमित्यलं विस्तरेण।

(१) 'इह किञ्चित् त्रपो' इति न्यायेनेति भावः।

ननु सूत्रे उपसर्गपदं विसृज्य गतेरिति कुतो नोक्तं लाघवात् । मैवम् । अच्छर्च्छतीत्यादौ वृद्ध्यापत्तेः, "अच्छ गत्यर्थवदेषु" इति गतिसंज्ञत्वात् ।

वाक्यभेदेनेति । एकवाक्यत्वे हि प्रेजत इत्याद्यसङ्गत्यापत्तेरिति भावः । सुब्धाताविति । सुबन्तप्रकृतिके धाताविङादौ पररूपं वा स्यात्, तदभावे उत्सर्गसूत्रेण वृद्धिरिति द्वितीयवाक्यार्थः ।

अत्र वदन्ति—"एङ्येङ्" इति सूत्रयितव्ये परग्रहणमुत्तरार्थम् । रूपग्रहणं तु स्पष्टार्थम् । "अमि पूर्वः" इतिवद् 'एङि परः' इत्येव सिद्धेरिति ।(१)

---

(१) "एङः पदान्तादति" इत्यत्रेङोऽति–इत्येवास्तु । 'अयमभिप्रायः—अपदान्तेऽपि हरय इत्यादौ चेत् "ङसि ङसोश्च" इति व्यर्थं तेन 'असति बाधके प्रमाणाभावात्'–इति न्यायेन 'भवतेरः' इति निर्देशेन चापदान्तस्य चेदेङोऽति परे ङसि ङसोरेवातीति नियमेन हरय इत्यादावदोषात् । एवं च भवतीत्यादावपि नियमेनैव 'अपरिहारे पदान्तस्य किं भवति' इति शेखरोक्तमप्यसङ्गतमिति । न चानुबन्धादौ चेद् ङसि ङसोरेवेति सजातीयनियमेन भवतीत्यादिव्यावृत्तावपि औपगवः, अचिनवम्, चय इत्यादिषूक्तदोषस्य तादवस्थ्यमित्यपि न, 'वर्णका तान्तवे' 'अनुगवमायामे,' इत्यादिनिर्देशेनैतन्नियमासम्भवादुक्तदोषाभावात् ।

यत् तु ङसि ङसोश्चेत्यस्य विभक्तिविषयत्वेन विभक्तावपदान्तस्य चेद् ङसि ङसोरत्वेति विशेषनियमेन हरय इत्यादौ न दोषः । न च यदि जस्येव प्रयोजनं तर्हि "ङसि ङसोश्च" इत्यत्र 'न जसि' इत्येव ब्रूयात्, शसि सय इत्यादाविदानीं पूर्वरूपापत्तिः, नियमे तु तेनैव वारणान्न दोष इत्यपि न 'न हि पदान्तादङो

अचि किमिति । अज्झलोः सावर्ण्यनिषेधात् सवर्णोऽगेव भविष्यतीति प्रश्नः । अनिष्पत्तेरिति । "नाज्झलौ" इतिसूत्रविषयनिर्णये ऽपवादविषयपरिहारेण तत्तद्वर्णीयसवर्णपदवाच्यत्वनिर्णयोत्तरं तावतां ग्रहणस्य ग्रहणकशास्त्रेण बोध्यतया निषेधबोधकाले ग्रहणकशास्त्रस्य तावद्ग्रहणबोधनासिद्धिरित्यर्थः । अत्र वक्तव्यमुक्तं प्राङ् न विस्मरणीयम् । अकोऽकि

---

करस्ति' इति भाष्यात् से-प्रभृतीनामनभिधानात् । अभिधानेऽपि 'न जश्शस्सु' इत्येव ब्रूयात् । तथाऽप्यचिनवमित्यादौ दोषसद्भाव इति वाच्यम् । नामूजश्शस्स्वित्युक्तावप्यदोषात् । अमित्यस्य तिङ्त्वेन विभक्तित्वात् । पशब्दादाचारक्विबन्ताल्लटि झेरन्तादेशेऽयन्ति धूधातोर्भवन्तीत्यादौ अन्तिघटकाकारस्य शपोऽकारेणैकादेशे विभक्तिपरत्वेन नियमे व्यावृत्तिसम्भवेऽपि न्यासे दोषस्य दुरुद्धरत्वात् । पशब्दस्यैतादृशस्यानभिधानेऽपि भवन्तीत्यस्य सत्त्वात् तस्माद्विभक्तिविषयकनियमस्यैव न्यासापेक्षया युक्तत्वात् ।

केचित् तु ङसिङसोः सुप्त्वेन सुपि चेद् ङसिङसोरेवेति विशेषनियमे जसि व्यावृत्तिः फलिता, तत्तात्पर्येण 'न जसि' इति न्यासः । शसि सय इत्यत्र तु न दोषस्तस्यानभिधानत्वस्योक्तत्वात् । तथा चापरनियमद्वये भवतीत्यत्र शपा व्यवधानाद्विभक्तिपरत्वाभावेन चय इत्यादावचा व्यवधाने विभक्तिसुप्परत्वाभावेन चाव्यावृत्त्या शेखरकृता भवतीत्युक्तम् । तस्मादेतन्नियमद्वयमेव नागेशाभिमतमिति प्रतिभाति ।

वस्तुतस्तु 'सर्वत्र विभाषा गोः' 'अवङ् स्फोटायनस्य' इत्याद्यर्थमुत्तरार्थमावश्यकत्वेन स्पष्टार्थमिहैव कृतमिति सर्वः प्रपञ्चो निरर्थक इति दिक् ।

दीर्घ इत्येव सुवचमिति । दध्यत्रेत्यादौ यथासंख्यवि-ज्ञानेनातिप्रसङ्गभङ्गाद्, होतृऌकार इत्यत्रापि ऋकार-ऌकारयोः सावर्ण्यादुपपत्तेः, ईकारशकारयोः सति साव-र्ण्ये ऽचीत्यनुवृत्तिमन्तरा ऽपीष्टसिद्धेर्लाघवाच्चेत्याशयः ।

ननु यथान्यासे सूत्रान्तःकोटिनिविष्टसवर्णपदम-ग्रिमवार्त्तिकद्वयेऽनुवर्त्यम्, एवं सति तत्रैव तत्करणे विपरीतगौरवापत्तिरिति चेन्न । वचनद्वयविधेयम् "अकः सवर्णे" इत्यनेनैव निष्पाद्य तस्य तुल्यास्यसूत्रे भाष्य-कृता प्रत्याख्यानात् ।

तथा हि—"अकः" इति सूत्रेणैव ऋकारद्वयस्य स्थाने रेफद्वयवत्तारूपगुणकृतान्तर्येण कदाचिद्रेफद्वय-गर्भस्य, विवृतत्वान्तर्येण कदाचिद्विवृतस्य; ऌकारे ल-कारवत्ताऽऽन्तर्येण कदाचिद् द्विलकारकस्य, कदाचिद्वि-वृतत्वसाम्येन रेफवत्तासाम्येन च तादृशस्य ऋकारस्य सिद्ध्या विकल्पफलसिद्धेः । कैयटे च स्पष्टतरमिदम् ।

ननु गोअग्रमित्यादाविव पक्षे प्रकृतिभावो दुर्वा-रोऽत आह व्यवस्थितविभाषयेति । विगताऽवस्था विकल्परूपा जाताऽस्याः, सा चासौ विभाषा च, तया नैमित्तिकप्रवृत्त्येत्यर्थः । विभाषारूपे विकल्पे विधिनिषे-धरूपांशद्वयं सामान्येनोपस्थितम्, अत्र विशेषविधिरू-

पा व्यवस्थिता। तथा च मूले वक्ष्यति "क्वचिन्न पापे ऽभिनिवेश" इत्यादि।

गवाक्ष इति। 'गवां किरणानामक्षीव' "अक्ष्णो ऽदर्शनाद्"इत्यच्। पुंस्त्वं लोकात्। वातायनेऽयं रूढः।

नन्वेवं रीत्या गवेन्द्र इति सिद्धे "इन्द्रे च" इति व्यर्थम्। मैवम्। भाष्योक्तातिरिक्तव्यवस्थितविभाषाणामप्रामाणिकत्वज्ञापनार्थं तत्सत्त्वात्। "अग्नीत्प्रेषणे परस्य च"इतिसूत्रेण 'अग्नीदग्नीन् विहर'इत्यत्र प्राप्तप्लुतत्वव्यावृत्त्यर्थं तत्र बहुलग्रहणस्य वार्त्तिककृता कृतस्य प्रत्याख्यानाय "विभाषा पृष्टप्रतिवचने हेः" इति सूत्रे विभाषेति योगविभागं कुर्वता भाष्यकृतैतस्या विभाषाया व्यवस्थितविभाषात्वध्वननात्।

देवत्रातो गलो ग्राह इतियोगे च सद्विधिः।

मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः॥ इति—

"शाच्छोः"इतिसूत्रे भाष्ये स्पष्टम्। कृते ऽवङि सन्निपातपरिभाषाया अनित्यत्वात्सवर्णदीर्घ इति केचित्।

विभाषानुवृत्तेः स्फोटायनपदमदृष्टार्थम्। अगिति सूत्रयितव्ये अवङ्ग्रहणमदृष्टार्थमेवेत्याहुः।

नित्यग्रहणं किमिति। यद्यपि "प्लुतप्रगृह्याः"इति सूत्रान्तःकोटिनिविष्टप्लुतादिज्ञानाय तत्संज्ञाबोधकसूत्रपा-

ठानन्तरं प्लुतेतिसूत्रे पठितव्ये तदुल्लेखनेन प्राचीनपठिते- "इन्द्रे च नित्यम्" इतिन्यासे नित्यमित्यस्य प्रामादिकत्व- कथनान्नित्यमित्यस्यानुवृत्त्यभावः, तथाऽपि विकल्पनि- वृत्त्यैव नित्यत्वलाभो भविष्यतीति प्रष्टुर्भावः । मा भूदिति । हरी ईशावित्यत्र "प्लुतप्रगृह्या" इति सावकाशम् । चक्रि अत्रेत्यादौ "इको ऽसवर्णे" इति लब्धा- वसरम् । हरी एतावित्यादौ विप्रतिषेधेन परत्वाद्ध्रस्वस- मुचित एव प्रकृतिभावः स्यादिति विकल्पो दोषः । नित्यग्रहणेन तु सामर्थ्यात्परमपि बाध्यते इति भावः ।

न च प्रकृतिभावे कर्तव्ये प्लुतस्यासिद्धत्वं शङ्- क्यम् । प्लुतमनूद्य प्रकृतिभावविधानसामर्थ्यात् ।

नन्वचीत्यनुवृत्ते ऽज्ग्रहणं सूत्रे सुत्यजम् । सामर्थ्यात् प्रत्यासत्त्या यस्मिन्नचि प्रकृतिभावस्तदज्निमित्तकार्य- स्यैव तेनाभाव इत्यर्थसम्पादनेन जानु उ अस्य रुज- तीत्युक्तः प्रगृह्यत्वे ऽपि जानू अस्येति सवर्णदीर्घरूपस- न्धिफलकत्वान्न दोषः ।

ह्रस्वविधानसामर्थ्यादेवेति । "चकारेण प्रकृत्येत्य- नुकृष्यते" इति भाष्यम् । चकारखण्डनपरभाष्यस्यायं भावः—तेन प्रकृतिभावानुकर्षणेऽपि "चानुकृष्टं नोत्तरत्र" इतिपरिभाषया चकारेणानुकृष्टत्वेन प्रकृतिभावस्य "ऋत्य-

कः"इत्यत्र सम्बन्धाभावेन तद्वाक्यार्थासामञ्जस्येन तदर्थं ह्रस्वविधानसामर्थ्यस्यावश्यकत्वाच्चकारो व्यर्थ इति ।

उक्तपरिभाषायां ज्ञापकं तु "स्वादुमि णमुल्" इत्यतो णमुल्यनुवर्तमाने "अव्यये यथाभिप्रेताख्याने कृञः क्त्वाणमुलौ" इतिसूत्रे णमुलग्रहणम् । अन्यथा "क्त्वा च" इति वदेत् । तद्धि उत्तरत्र "तिर्यच्यपवर्गे" इत्यादिसूत्रेषु उभयोः सम्बन्धार्थम् ।

अत एव "वदः सुपि क्यप् च" इति सूत्रे चानुकृष्टस्य "अचो यद्" इत्यतो यतो "भुवो भावे" इत्यत्र नानुवृत्तिः ।

"लुटि च क्लृपः" इत्यत्र "सर्वे चकाराः प्रत्याख्यायन्ते" इतिभाष्येण विरुद्धेयम् । व्याख्यानादेवानुवृत्तिनिवृत्तिभ्यां निर्वाह इति तदाशय इति दिक् ।

भाष्ये स्थितमिति । प्रकृतसूत्रे पूर्वोक्तो भावः स्थित इत्यर्थः ।

ननु ह्रस्वाभावे प्रकृतिभावार्थं चकारोऽस्तु, तेन चक्री अत्र, चक्रि अत्र, चक्र्यत्रेति रूपत्रयसिद्धिरिति चेन्न । समुच्चयार्थकत्व उक्तभाष्यविरोधात् । त्वदुदितरूपस्य संहिताया अविवक्षयैव सिद्धेश्चेत्यलं भाष्यविरुद्धकल्पनया ।

चक्र्यत्रेत्यत्र "स्कोः"इति कलोपो न,स्थानिवद्भा-

वात् । "पूर्वत्रासिद्धे न स्थानिवद्" इत्यपि न वाच्यम् । "तस्य दोषः संयोगादिलोपलत्वणत्वेषु" इतिनिषेधस्य वक्ष्यमाणत्वात् ।

नन्वको ऽसवर्ण इति सूत्रमस्तु, माऽस्तु "ऋत्यकः" इति पृथक् सूत्रमिति चेन्न । सवर्णार्थमनिगर्थं च तस्य पृथक् करणात् । होतृऋकारो ब्रह्मऋषिरित्यादावित्याहुः ।(१)

---

(१) 'इकोऽसवर्णे शाकल्यस्य', अत्र पदस्य शाकल्यस्य ह्रस्वश्च इति विन्यस्येको यणचीत्यस्यानन्तरमस्य पाठेनेकोऽचीत्यस्यानुवृत्त्येगन्तस्य पदस्याचि परे ह्रस्वविशिष्टः प्रकृतिभाव इत्यर्थेन सामञ्जस्ये गुरुन्यासो विफल इति तत्त्वविदः । चिनुहि इतीत्यादौ प्लुतविषये 'अप्लुतवदुपस्थिते' इत्यादीनामेतद्बाधकत्वेन 'ई ३ चाक्रवर्मणस्य' इत्यनेनात्रानार्षेतिशब्दावयवाजातिरिक्तत्वेनाजंशे सङ्कोचात् तत्रैतदप्रवृत्तेर्विकल्पेन रूपद्वयसिद्धौ बाधकाभावात् । यथान्यासे 'अप्लुतवद्' इत्यत्र इकोऽसवर्ण इत्यतो ऽसवर्णपदानुवृत्त्येतिशब्दावयवासवर्णाचीत्यर्थेनान्यसवर्णाच्यस्य चारितार्थ्यात् सवर्णे 'ई ३ चाक्रवर्मणस्य' इत्यस्य प्रवृत्तौ बाधकाभावात् न कथंचिद् दोषलेशोऽपि । न चैतादृशन्यासे सूत्रेऽसवर्णग्रहणाभावेन चक्रीहेत्यत्रापि प्रकृतिभावः स्यादिति चेत् । इदानीमकः सवर्ण इत्यस्यैतदपेक्षया परत्वेनाकारांशे चारितार्थ्येन वा सवर्णाचि चरितार्थस्यास्य परत्वनात्तेन बाधादिति ।

केचित्तु 'न समासे' 'सितिच' इत्युभयत्र 'वृत्तौ न' इति न्यासेन वाप्यश्वः पार्श्वमित्यत्र च समासतद्धितयोः सत्त्वेन प्रकृतिभाववारणेन वार्त्तिकद्वयाकरणरूपलाघवं दर्शयन्ति । तन्न दध्युपदेशं दध्युपपीडमित्यादौ 'सप्तम्यां चोपपीड'—इत्यादिना णमुल्युपपदसंज्ञायां 'तृतीयाप्रभृति-' इत्यादिना समासे इष्टनिषेधसिद्धावपि

वक्तिमिति । अप्लुत इत्युक्तेऽपि प्लुत इत्यस्याध्याहारे विधायकमेवास्तु सूत्रम्, लाघवमप्यस्तीति प्रश्नः । सत्यमित्याह प्लुत एव निषिध्येतेति । प्लुतस्य स्थानेऽप्लुतविधानेन विजातीयत्वविरोधेन प्लुतो निवर्तेतेति भावः । एवञ्च सत्यन्यत्र दोषः स्यादित्याह प्रगृह्याश्रयेति । एतमग्नी ३ इति वाक्यैकदेशमग्नी इत्यनुकृष्य "दूराद्धूते" इति प्लुत एकसंज्ञाधिकाराभावाद् "ईदूदेद् द्विवचनम्" इति प्रगृह्यत्वे "प्लुतप्रगृह्याः" इति प्रकृतिभावे सति प्लुतस्यासिद्धत्वाद्दीर्घत्वबुद्धिवत्तद्गतं "प्रकृतिवदनुकरणम्" इति वक्ष्यमाणातिदेशादनुकरणे सुलभमनुकार्ये त्वन्यथैवेतिसिद्धान्ते प्लुतोऽपि श्रूयेत ।

---

समासविकल्पपक्षेऽपि कृद्वृत्तेः सत्त्वादनेन निषेधेऽभिमतोऽपि यण् न स्यात् । यदपि पार्श्वमित्यत्र णस्विधायकेन 'सिति च' इत्यनेन ड्वणं विधाय डित्वाट्टिलोपे इगभावेन प्रकृतिभावाप्राप्त्या तन्निषेधकसितिचेतिवार्त्तिकस्याकर्त्तव्यत्वेन लाघवं वदन्ति । तदपि पर्शुशब्दादचक्षादाचक्षाणण्यन्तात् क्विपि विचि वा टिलोपणिलोपयोः सतोस्ततो ड्वणि णसि च रूपे विशेषस्योपलब्धेर्हेयमेव । टिलोपस्य स्थानिवत्त्वेऽपि पार्शं पार्श्वमिति रूपभेदवैषम्यस्य सत्त्वात् । न च 'रका सिद्धे आकारोच्चारणमन्यतो विधानार्थम्' इति 'गोधाया ढ्रक्' इतिसूत्रभाष्यात् प्रातिपदिकप्रकृतिकण्यन्तप्रकृतिकक्विबन्ताद्विजन्ताद्वा तद्धितस्यानभिधानमन्यथा गोधाशब्दादप्युक्तरीत्या क्विपि विचि वा रक्यारकि च रूपे विशेषस्य सत्त्वात् तदुक्तमसङ्गतं स्यादिति वाच्यम् । ज्ञापकस्य सजातीयापेक्षत्वेन तस्यावन्तविषयकत्वकल्पनयाऽपि सङ्गतत्वात् ।

अयं भावः—वतिप्रत्ययः सादृश्यार्थकः, सादृश्यं च तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम्। यथा 'चन्द्रवन्मुखम्' इत्यादौ मुखचन्द्रयोर्भिन्नत्वे चन्द्रगताह्लादकत्वं मुखे। तथा "प्लुतोऽप्लुतवद्" इत्युक्ते तयोर्भिन्नत्वेऽप्लुतगतं सन्ध्यादिरूपकार्यं प्लुतेऽतिदिश्यते, न तु प्लुतनिवृत्तिः क्रियतेऽतिदेशानां स्वभावात्। अत एवोक्तम् 'अप्लुतकार्यं यणादिकं करोति' इति मूले। आतिदेशाभावे विधायकत्वे स्वीकृते तु प्लुतस्य निवृत्तिः स्यादिति।

अत्र भेदघटितसादृश्यं प्राचामनुरोधेन व्याख्यातम्, अभेदेऽपि सादृश्यं भवतीति चिन्तामणौ नागेशीये च निरूपितम्।

न च 'अग्नी इति' इत्यादौ प्रगृह्याश्रयप्रकृतिभावं बाधित्वा परत्वादप्लुतवद्भावे यणादिकं स्यादिति वाच्यम्। इतिशब्दसापेक्षाप्लुतवद्भावापेक्षया वर्णमात्रापेक्षप्रकृतिभावस्यान्तरङ्गत्वात्।

मात्रिकमिति। एवं सति गौरवमिति प्रश्नः। अमुकेऽत्रेति। अदस्शब्दात् कृताकचो जसि त्यदाद्यत्वे मुत्वे जसः श्यादेशे आद्गुणः। असतीति।

अयं भावः—"ईदूदेद्" इतिसूत्रादीदूतावेवानुवर्त्तेते, एकदेशे स्वरितत्वप्रतिज्ञानात्। तत्रोकारानुवृत्तिः

क्लीबस्त्रीलिङ्गयोरमू आसाते इत्यत्र "नपुंसकाच्च" "औङ आपः" इतिसूत्राभ्यामौकारस्य श्यादेशे आद्गुणे एकारान्तत्वात्पूर्वसूत्रेण सिद्धेर्व्यर्था, तथाऽपि पुंसि म-कारात्परौकारान्तस्य सम्भवात्पूर्वेणाप्राप्ते सति सफ-ला। अत एव मूले रामकृष्णावित्युक्तम् । "अदसो माद्"इतिसूत्रं प्रति मूत्वं मीत्वं नासिद्धम्, आरम्भसा-मर्थ्यात् । एवञ्चादसो मात्परस्यैकारासम्भवादेकारो नानुवर्त्तते । तस्मादेकाराननुवृत्तितात्पर्यग्राहफलकमेव माद्ग्रहणम् ।

अर्थग्रहणं किमिति । तदभावे "ईदूदेद् द्विवच-नम्"इतिवदीदूदन्ता या सप्तमीत्यर्थापत्तावेकादेशस्य प-रादिवद्भावेन सप्तमीत्वाद्यथी आस्त इत्यादावेव स्या-न्न तु गौरी अधिश्रित इत्यादौ, सप्तम्या लुकाऽपहा-रात्। अत्रापि सवर्णदीर्घ एकादेश इत्युक्तौ तु परत्वा-दाङ्गत्वादेकादेशं बाधित्वा ङेराम् "आण् नद्या" इत्याट् च स्यादिति तु न वाच्यम् । "ईदूतौ सप्तमी प्रगृह्यम्" "अदसः" "एच्च द्विवचनम्"इत्येवं सूत्रयितव्ये गौ-रवग्रस्तन्यासकरणेन तत्तत्प्रकरणापेक्षया ऽस्य वैजा-त्यबोधनादूकारांशे त्वदुक्तार्थासम्भवाद्, यय्यादेरनभिधा-नाच्च । सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ती-

तिज्ञापयिष्यमाणपरिभाषाया इहाप्रवृत्तिः, तदन्तग्रहणे सतीदूदन्तं सप्तम्यन्तं प्रगृह्यसंज्ञमित्यर्थसम्पत्तौ सकललक्ष्यनिर्वाहे नार्थोऽर्थग्रहणेनेति पर्यनुयोक्तुराशयः।

अत्र समाधत्ते—वृत्ताविति। कृत्तद्धितसमाससनाद्यन्तधातुरूपायामित्यर्थः। अर्थान्तरेति। अवयवार्थान्वितसमुदायार्थोपसर्जने इत्यर्थः। उपसङ्क्रमश्च तदालिङ्गितस्यैव स्वार्थस्योपस्थितिः। तत्र समासवृत्तिमुदाहरति—वाप्यश्व इति। "संज्ञायाम्" इति समासः, "सुप्सुपा" इति वा।

अयं भावः—वृत्तौ तावदेकार्थीभावः, "समर्थः पदविधिः" इतिसूत्रात्। स च विशिष्टविषयकशक्त्यैकोपस्थितिजनकत्वम्। "राजपुरुष इतिवाक्ये पृथगर्थानि पदानि, राजपुरुष इतिवृत्तावेकार्थानि" इति समर्थसूत्रभाष्यात्, अन्य एवावयवार्थान्वितः समुदायार्थः प्रादुर्भवति तदपेक्षैकार्थीभाव इतिकैयटाच्च "संसृष्टं समर्थम्" इति भाष्याच्च लभ्यते। एवं च वाप्यश्व इत्यादावनवयवार्थान्वितसमुदायेन वाप्यधिकरणकद्रव्यरूपोऽर्थ उचित इति अतिरिच्यमानेनार्थग्रहणेन तु सामर्थ्यादाधेयासंसृष्टाधारबोधकत्वरूपं समभिव्याहृतपदान्तरार्थानन्वयित्वेनोपस्थितिविषयत्वरूपं वा सप्तम्यर्थपर्यवसन्नत्वं

बोध्यते। वाप्यश्व इत्यत्राधेयमश्वरूपं द्रव्यम्, तत्र संसृष्ट एवाधारः सप्तम्यर्थः, एकार्थीभावस्योक्तत्वादिति न भवति प्रगृह्यसंज्ञा। 'सोमो गौरी अधिश्रितः' इत्यादौ सोमादिराधेयस्तत्रासंसृष्ट एवाधिकरणरूपः सप्तम्यर्थ इति सञ्ज्ञा भवति।

ननु गौरीपदबोध्याधिकरणत्वस्याधिश्रयणक्रियायां विशेषणतयाऽन्वयः, कारकाणां क्रियायामन्वयसिद्धान्तात्, तत्कुतो नाधेयसंसृष्ट आधार इति चेन्न। यस्यावयवार्थस्य समुदायार्थमन्तरा नोपस्थितिस्तस्यैवात्रोक्तलक्षणकोटिप्रविष्टैकार्थीभावविषयत्वात्। इह तु अवयवार्थस्य पार्थक्येनाप्युपस्थितिरिति दोषाभावात्।

तदुक्तमत्रैव भाष्ये—"अर्थग्रहणे क्रियमाणे कस्मादेवात्र न भवति वाप्यश्व इति, जहत्स्वार्था वृत्तिरिति। अथाजहत्स्वार्थायां दोष एव, अजहत्स्वार्थायामपि न दोषः समुदायार्थोऽभिधीयते" इति।

अत्र कैयटः—अस्त्येवात्र सप्तम्यर्थ इति प्रश्नाभिप्रायः। जहत्स्वार्थेति। समासस्यैवार्थवत्त्वात्पूर्वोत्तरपदयोर्वर्णवदानर्थक्यात्सप्तम्यर्थोऽत्र नास्तीत्यर्थः। समुदायार्थ इति। वृत्तौ हि पूर्वपदं स्वार्थमभिधत्ते प्रधानार्थमपीति स्वार्थसंसृष्टस्य प्रधानार्थस्या-

स्याभिधानात्पांसूदकवत् स्वार्थस्य विवेकानवगमा-त्समुदायार्थो वृत्तौ संसृष्टरूप एवाभिधीयते सप्तम्य-र्थग्रहणेन यावत् स्वार्थं यावानेवार्थो वाक्ये सप्तम्य-न्तेनाभिधीयते केवलो ऽसंसृष्ट उद्भूतस्तस्यैव ग्रहण-मिति समासे न भवति प्रगृह्यसंज्ञेतिव्याख्यातवान् ।

तत्र वर्णवदानर्थक्यादितिकैयटस्य संज्ञायामिति समासे पूर्वोत्तरपदयोरानर्थक्ये ऽवयवार्थान्वितेत्याद्यु-क्तकैयटेन पूर्वापरविरोधः स्यात् ।

अत्राहुः—जहत्स्वार्थापदेनैकार्थीभावः पदे वर्ण-वद्वृत्तिपदानामानर्थक्यमिति तदर्थः । अजहत्स्वार्थप-देन व्यपेक्षेतिभूषणकृत्प्रभृतयः । तन्न । एकार्थीभाव-मुपक्रम्य जहत्स्वार्था अजहत्स्वार्था वेति समर्थ-सूत्रभाष्योक्तेरेकार्थीभाव एव पक्षद्वयलाभात् । तत्रो-पसर्जनपदस्यार्थत्यागो न वेति भाष्याशयः । 'जहत्स्वा-र्था तु तत्रैव यत्र रूढिर्विरोधिनी'इति वृद्धोक्तेश्च, सर्व-थाऽर्थत्यागे पूर्वोक्तकैयटविरोधाच्च, महाबाहुरित्यादौ महतो ऽनर्थकत्वाद "आन्महतः" इत्यात्वानापत्तेश्च । तस्माद्वृ-त्तावयवार्थान्वितः समुदायार्थ इति सिद्धम् । अधिकं संवादचिन्तामणाववसेयम् ॥

इति स्वरसन्धिः ॥

टोः किमिति । अस्ति तावत्परिभाषा "एकयोग-निर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः" इति । तत्र वाशब्द एवकारार्थे । परस्परान्वितार्थकपदानां सहैव प्रवृत्तिनिवृत्ती इति तदर्थः । एवं चैतत्प्राग्वर्तिष्टुनाष्टु-रित्यस्मात् ष्टुनेत्यनुवर्त्य पदान्ताद्विति सामानाधिकर-ण्येन पञ्चमी कल्प्यते, ततश्च पदान्तात्षकारटवर्गात् स्तोः ष्टुर्न स्यादित्यर्थसम्पत्तेः सर्पिष्टममित्यादौ ष्टुत्वप्र-तिषेधप्राप्तावपि "ह्रस्वात्तादौ तद्धिते" इत्यनेन जातस्य षस्य "झलाञ्जशोऽन्ते" इति जश्त्वस्यैव विधानान्न का-ऽप्यनुपपत्तिरिति प्रश्नः ।

उत्तरयति सर्पिष्टममिति । जश्त्वं प्रति षत्वस्यासिद्ध-त्वात् जश्त्वाप्रवृत्तेरुक्तरीत्या ष्टुत्वनिषेधापत्तौ रूपासिद्धेः ।

यदि तु "एकयोगनिर्दिष्टानामेकदेशोऽप्यनु-वर्तते" इति परिभाषान्तरम् । एकदेशे स्वरितत्वप्रतिज्ञा बललब्धमिदम् । एकत्रार्थे योगः सम्बन्धस्तेन निर्दिष्टयोः समुदायाभिधायिद्वन्द्वनिर्दिष्टयोरिति तदर्थ इति "पक्षा-त्तिः" इतिसूत्रे पञ्चमे कैयटः । अत एव "अलुगुत्तरपदे" इत्येकयोगनिर्दिष्टत्वेऽपि "अलुगधिकारः प्रागानङः, उत्तरपदाधिकारस्तु प्रागङ्गाधिकाराद्" इति सङ्गच्छते । किञ्च "दामहायनान्ताच्च" इत्यत्र संख्यादेरित्यनुवर्त्तते,

अव्ययादेरिति निवृत्तमित्युपपद्यते। स्पष्टं चेदं "दामहायन"-इतिसूत्रे चतुर्थे भाष्ये। एवं च ष्टुनेत्येकदेशस्य टोरेवानुवृत्तिः। किं च ष्टुनेत्यसमस्तमेव ततोऽपि टोरेवानुवृत्तिः। तस्मात्पदान्ताट्टवर्गादित्येवार्थसम्पत्तेः सर्पिष्टममित्यादौ दोषाभाव इत्युच्यते।. तदा टोर्ग्रहणमदृष्टफलकमेवेत्याहुः।

स्थानप्रयत्नाभ्यामिति।

अयं भावः—"स्थानेऽन्तरतम उण्रपरः" इति संहिते सूत्रकृताऽनुक्रान्ते पाठेऽन्तरतम इति सप्तम्यन्तः प्रथमान्तो वेति विचारः।

तत्राद्यपक्षे षष्ठीत्यनुवर्तते। अन्तरतमो य आदेशस्य स्थानी तत्रैव षष्ठी उपसंहर्तव्या यत्रैव षष्ठी तत्रादेश इति सूत्रार्थेन प्रकृतिर्नियम्यते। तथा च "वान्तो यि"इत्यत्रैच इत्यनुवृत्तावपि आदेशस्य वान्तस्यान्तरतमे स्थानिनि ओऔरूपे षष्ठी उपसंहृतेति तत्रैवादेशो न तु सम्पूर्णस्यैचः।

अन्त्यपक्षे तु आदेशोऽन्तरतमो भवतीति सूत्रार्थेनादेशो नियम्यत इत्यादेशानियमपक्षे सम्पूर्णस्यैचो वान्तापत्तिदोषात्सप्तम्यन्तपाठ एव युक्तः। प्रकृतेऽप्यनुनासिकस्यादेशस्यान्तरतमे स्थानिनि सति षष्ठ्या

उपसंहाराद्रेफस्यानुनासिकणकारप्राप्तिरिति तां मत्वा वारयति रेफे न प्रवर्तते इति ।

जातिपक्षे लक्ष्यत्वजातेरैक्याच्चारितार्थ्याद्विधेरिति भावः । व्यक्तिपक्षे तु लक्ष्यभेदे लक्षणभेदादस्यां व्यक्तौ लक्षणस्याचारितार्थ्याद्रेफेऽपि प्रवृत्तिर्दुर्वारैवेति लक्ष्यानुरोधाज्जातिपक्ष एवाश्रितः । व्यक्तिपक्षेऽपि तादृशव्यक्तौ चरितार्थस्य एतद्व्यक्तिविषयतयोपप्लव एव नेति दोषाभाव इत्याहुः ।

इत्थं च सप्तम्यन्तच्छेदपक्षे प्राप्तौ समाधानम्, परन्तु स पक्षो भाष्ये दूषित एव ।

तद्यथा "इको यणचि" इति यण् ह्रस्वानामेव स्यादत्र पक्षे, न तु दीर्घाणाम् । आदेशस्यार्द्धमात्रिकस्य यणोऽन्तरतमः स्थानी (१)सन्निकृष्टत्वान्मात्रिको ह्रस्व एवेति तत्रैव षष्ठ्या उपसंहारात् । "वान्तो यि" इत्यत्रोक्तो दोषो वान्तग्रहणदूषणेनैवोद्धृतः । दूषणप्रकारश्चोक्तः प्राङ् न विस्मर्तव्यः । तस्माद् "अनुस्वारस्य" इतिसूत्रात्सवर्णग्रहणमपकृष्य परः सवर्णो ऽनुनासिको भवतीति सूत्रार्थो रचनीयः,

(१) अयं भावः—सप्तम्यन्तपाठपक्षे आदेशान्तर्थं स्थानिनि ग्राह्यं तत्रैको यणित्यादौ यणोऽन्तरतमो द्विमात्रान्यूनकालिकत्वेन ह्रस्व एव स्यान्न तु दीर्घादय इति तेषां स्थाने तदप्राप्त्यापत्तिरिति ।

एवञ्च यरन्तर्गतरेफस्य सवर्णाभावान्न प्रकृतानुपपत्तिः। तदुक्तम्—"रेफेऽनुनासिकपरसवर्णत्वयोः प्रतिषेधो वक्तव्यः, न वक्तव्यः, रेफोष्मणां सवर्णा न सन्ति" इति हयवरट्सूत्रे भाष्ये। ननु सवर्णाभावेऽपि रेफ एवानुनासिकोऽस्तु। मैवम्। उक्तसूत्रार्थादिति दिक्।

दकारनिपातनादिति। तत्र प्रकृतिप्रत्ययसमुदायस्य पाठादिति मतेनेति भावः।

केचित्तु "यचि भन्तसौ मत्वर्थे" इतिसंहितापाठे तकारात्पूर्वत्र दकारप्रश्लेषेणाभत्वान्नानुनासिकः। द्विवचनं तु दूतयोः समाहारद्वन्द्वोत्तरं सकारेण सहेतरेतरयोगादिति न युक्तम्, (१) अल्पाच्तरत्वात्सस्य पूर्वनिपातापत्तेः। किन्तु तसयोर्द्वन्द्वोत्तरं दकारेणेतरेतरयोगादिति। न चानुनासिकप्रवृत्तौ झयन्तत्वाभावेन झय इति वकाराभावाद्गणे पाठानर्थक्यादेव समाधेयम्। अनुनासिकविधेरसिद्धत्वेन झयुत्वानपायादित्याहुः।

थस्यासिद्धत्वादिति। त्रिपाद्यां परत्वादित्याशयः। एतच्च पाणिन्यनुक्रान्तपाठरीत्या। भाष्यकृत्संमते "अनुस्वारस्य ययि, वा पदान्तस्य, तोर्लि, उदः स्था, झयो हो, शश्छो-

(१) अत्राच्ग्रहणात्तकारसकारयोः समाच्त्वेन सकारस्य पूर्वनिपातापत्तिः कथमिति विभाव्या।

टि''इतिषट्सूत्र्युत्तरम्—''झलां जश्, अभ्यासे चर्च, खरि च, वाऽवसाने, अणोऽप्रगृह्यस्य''इतिपाठे थस्यासिद्धत्वाभावेन चर्त्वं भवत्येव। अत एव प्रकृतसूत्रे भाष्ये ''उदः पूर्वत्वे स्कन्देश्छन्दस्युपसंख्यानम्। उत्कन्दो रोगः''इत्युक्तम्।

ननूत्थानमित्यादौ ''झलो झलि''इति सलोपे चर्त्वे चोपपत्तिरितीदं सूत्रमेव निष्प्रयोजनमिति चेन्न। सामर्थ्यादनेन झलादौ प्रत्यये लोप इति तदर्थस्य ज्ञापनात्। 'उदस्थाद्'इत्यत्र तु निर्दिश्यमानादेरेव स्थानित्वान्न दोष इत्याहुः।

संस्कर्तेति। ''सम्परिभ्याम्''इति करोतेः सुट्। ननु लोपपक्ष एव द्वित्वेन द्विसकारस्य सिद्धत्वात् ''समस्सुटि'' इति व्यर्थमत आह त्रिसकारकमपीति। ''स्कोः''इति लोपस्तु न, अस्यासिद्धत्वात्। ननु पुनर्द्वित्वे त्रिसकारसिद्धिः। मैवम्। लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तेः(१)। तेन ''समः सुटि''इतिसूत्रे वेतिपाठेनैव पक्षे मोऽनुस्वारेण सिद्धेः ''अनुनासिकात्परः'' इति सूत्रं व्यर्थमित्युक्तिर्निरस्ता।

नन्वनुस्वारस्यानच्त्वात्कथं द्वित्वमत आह अनु-

(१) प्रथमप्रवृत्तावुपयोगित्वेनाश्रीयमाणशब्दसमुदायो यस्तद्घटकस्तद्घटकमात्रोद्देश्यकविकारागमातिरिक्तस्तद्घटितत्वरूपः तल्लक्ष्ये लक्षणं सकृदेव प्रवर्तत इति तदर्थादिति भावः।

स्वारस्येति । "अयोगवाहानामट्सूपसंख्यानं शर्षु च" इति हयवरट्सूत्रे भाष्योक्तेरिति भावः ।

अकारोपरीति । इकाराद्युपरि पाठे तु पयःसु इत्यादौ "इणः षः" इत्यादिषत्वादेशापत्तिरिति भाष्याशयः । न चाच्त्वे हरिं स्मरेत्, रामः पातु, हरिः करोतीत्यादौ यणादिप्रसङ्गः । त्रिपादीस्थत्वेन विसर्गादीनामसिद्धत्वात् । लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तेराह वचनान्तरेणेति । "अचो रहाभ्याम्" इति "यणो मयः" इत्यनेन चेति भावः ।

अथ "उणादयोऽव्युत्पन्नानि व्युत्पन्नानि च प्रातिपदिकानि" इति तत्र तत्र भाष्योक्तेराह व्युत्पत्तिपक्ष इति । "पूञो डुम्सुन्" इति व्युत्पादितस्य पुंसः संयोगान्तलोपेऽवशिष्टभागस्येदमनुकरणं पुम इति । पर्युदासादिति । "इदुदुपधस्य" इतिसूत्रे ऽप्रत्ययस्येत्यस्य प्रत्ययादन्यत्रभिन्नस्येत्यर्थादिति भावः । अव्युत्पत्तीति । तत्पक्षे प्रकृतिप्रत्ययविभागाभावादिति भावः । 'अयं च "अतः कृकमि—" इतिसिद्धे कंसग्रहणेन ज्ञाप्यते' इति कैयटः ।

ननु कथमेतत्पक्षोपपत्तिः, शास्त्रव्युत्पादनाभावात्तत्प्रयोगाणामधर्मजनकत्वेन हेयत्वात् । तदुक्तम्, "शास्त्रपूर्वके प्रयोगे धर्मो ऽन्यथा त्वधर्मः" इति भाष्ये । मैवम् ।

'अबुधबोधनाय व्युत्पाद्यमाना अपि उणादयो व्युत्पत्ति-निमित्तं कार्यं न लभन्ते' इति "आदेशप्रत्यययोः" इत्यत्राष्ट-मे कैयटोक्तरीत्याशयेन तथाव्यवहारात् ।

रूढिशब्द इव तत्राप्यवयवसाजात्येन व्युत्पादनाद् अन्याचार्याभिप्रायेणैतत्पक्षस्य भाष्योक्तावपि पाणिने-र्व्युत्पत्ति—( रव्युत्पत्ति ) पक्षस्यैवायनेति सूत्रादौ भाष्ये सिद्धान्तितत्वाच्चेत्यप्यन्ये ।

षत्वप्राप्ताविति । एतच्चानुनासिकपक्षे ज्ञेयम् । अ-नुस्वाराविधाने त्विदुदुपधत्वाभात् ≍क≍पयोरेव प्राप्तिः । "कुप्वोः" इत्यस्यापवादकत्वं तत्फलं चाह ये-न नेति । "येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति" इति हि न्यायः । येनेति कर्तरि तृतीया, प्राप्तेति भावे क्तः, नञ्द्वयं प्रकृत्यर्थदार्ढ्यबोधकम्, तेन यत्कर्तृकावश्यप्राप्तावित्यर्थः । तदुक्तं "शर्पूर्वाः" इत्येत-द्धलादिः शेषस्य बाधकम् । कथं विषयभेदे बाधकत्व-म् । इदं तावदयं प्रष्टव्यः, यदि तन्नोच्येत किमिह स्यात्, हलादिःशेषश्चेन्नाप्राप्ते तस्मिन्नारम्भादिदं तावद् बाधकं भविष्यति" इति । "अजादेर्द्वितीयस्य" इति सूत्र-भाष्येऽपि स्फुटमेतत् । अपवादे वृत्रहन्शब्दे निरूपयिष्य-माणौ बाध्यसामान्यचिन्ताबाध्यविशेषचिन्तापक्षौ । तौ

च लक्ष्यानुरोधाद्व्यवस्थितौ। तत्र बाध्यविशेषाचिन्तापक्ष-प्रवृत्त्याऽऽह न तु शर्परे इत्यस्येति ।

ननु 'विसर्जनीयस्य सो ऽशर्परे' इत्येव सूत्र्यताम् । अशर्परे इति बहुव्रीहिणा पर्युदासेन च व्यवहितादपि "खरवसानयोः" इतिसूत्रात् खरीत्यनुवृत्तिः सुकरा । "वा शरि" इति सत्वविकल्पात् पक्षे विसर्गश्रुत्या विसर्गसहितरूपासिद्धिः। कुप्वोरित्यत्र शर्परे इत्यनुवृत्त्याऽपि दोषाभावः । एवञ्च वासः क्षौममित्यादौ कुप्वोरित्यस्यैवाप्रवृत्तिरिति चेन्न। एवं सति सूत्रे विसर्गाभावे कुप्वोरित्येतद्विषये चकाराद्विसर्गलाभानापत्तेः ।

ननु "वा शरि कुप्वोः" इत्यस्यैवाप्रवृत्तिरिति ≍क≍पौ विसर्जनीय इत्यपि न्यासो ऽस्तु । मैवम् । विषयविभागस्य दुर्विज्ञेयत्वापत्तेः, बहुलाघवाभावात् प्रतिपत्तिगौरवाच्च ।

ननु शर्परे इत्येतद्विहितविसर्गस्य ≍क≍पौ दुर्निवारौ । किञ्च एतद्विसर्गस्यैव तौ स्याताम् । "खरवसानयोः" इतिजातस्य त्वेतयोरासिद्धत्वात् सत्त्वमेव स्यात् एवं च वासः क्षौममित्यादावसङ्गतिरिति चेन्न । "शर्परे विसर्जनीयः" इति सूत्रं "कुप्वोः" इत्यत्रानुवर्त्य शर्परयोः ≍क≍पयोरपवादो विसर्गस्य विसर्गो भ-

वतीति पृथग् वाक्यार्थेन व्याख्याने दोषाभावादिति भाष्ये स्पष्टम् ।

जश्त्वेन द् इति । स्वशब्दे उपपदे "छो च्छेदने" इत्यस्मात्कप्रत्यये ऽन्तर्वर्तिविभक्त्या स्वशब्दस्य पदत्वाद् "आद्यन्तौ टकितौ" इति तुकोऽपि तदवयवत्वेन पदान्तत्वाज् "झलाञ्जश" इति प्रवृत्तेरिति भावः ।

ननु दीर्घादितिपञ्चमीश्रवणाच्छे इति सप्तमीश्रुत्या पञ्चम्या षष्ठीप्रकल्पनेन छस्य तुकि छकारोपरि प्रकृतचकारश्रवणापत्तिरित्याशयेनाह दीर्घस्यायामिति । ज्ञापकाद्व्याख्यानाद्वा दीर्घादिति षष्ठ्यर्थे पञ्चमीति भावः । इदमेओङ्सूत्रे भाष्येऽपि ध्वनितम् । चेच्छिद्यत इति । "छे च" इतिसूत्रे ऽकार उच्चारणार्थो न तु विवक्षित इत्याशयः । नन्वत्र तुको हलादिःशेषोऽस्तु । मैवम् । अभ्याससंज्ञाप्रवृत्तिकाले स्थानिद्वारा साक्षाद्वा सन्निहितानां हलामेव तेन निवृत्तिकरणात् । अत एव "नुगतोऽनुनासिकान्तस्य" इत्यादि चरितार्थम् ॥

इति हल्सन्धिः ॥

---

"इदुदुपधस्य चाप्रत्ययस्य" इतिसूत्रे इदुतावुपधे यस्य समुदायस्य तस्यावयवो यो विसर्ग इति नार्थः। सम्भव-

ति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात्। अप्रत्ययो यो विसर्ग इत्यपि न। प्रत्ययाविसर्गालाभात्। अग्निः करोतीत्यादौ न स्थानिवद्भावेन लाभः, विसर्गस्य स्थान्यल्रूपरेफवृत्तिप्रत्ययत्वस्य स्थान्यल्धर्मत्वेन "अनल्विधौ" इति निषेधात्(१)। तस्मात् सूत्रे प्रत्ययपदं प्रत्ययसम्बन्धिपरम्। तेनेदुदुपधस्य प्रत्ययसम्बन्धिभिन्नविसर्गान्तस्य षत्वं स्यादिति वर्तुले सूत्रार्थे अलोऽन्त्यपरिभाषयाऽन्त्यस्य षत्वे निष्कृतं दुष्कृतमित्यादिसिद्धिः। कविभिः कृतमित्यादौ तु न दोषः, भिसः प्रत्ययत्वेन तद्भिन्नविसर्गाभावात्। एवंरीत्या मातुः कार्यमित्यादावपि दोषाभावाद्भाष्ये मूले च ज्ञापनं तत्फलं चासङ्गतमिति तु न वाच्यम्। अत्र प्रत्ययत्वाभावात्।

तद्यथा मातृशब्दान्ङस "ऋत उद्" इत्युत्वे रपरत्वे "रात्सस्य" इति लोपे रेफस्य विसर्गः। तत्र सकारसन्निधावकारे नास्ति प्रत्ययत्वम्, प्रत्ययसंज्ञायाः समुदायनिवेशिनीत्वादिति तदादेशस्योरः प्रत्ययत्वाभावेन विसर्गस्य प्रत्ययसम्बन्धित्वाभावः। यस्तु

---

(१) अल्त्वव्याप्यधर्मावच्छिन्नस्थानितासमानाधिकरणधर्मावच्छिन्नविषयके कार्ये स्थानिवत्त्वनिषेध इति अनल्विधावित्यस्य नागेशमते ऽर्थसत्त्वादिति भावः।

उत्वे कृते ऽवशिष्टः सकारः प्रत्ययसंज्ञकः स लुप्त एवे-ति कैयटः।

न च "अन्तादिवच्च" इत्यस्य पूर्वस्य परस्य वा समुदाय-स्यान्तादिभ्यां वर्णाभ्यां पृथगवस्थिताभ्यां ये व्यवहाराः प्रत्ययत्वादयस्ते एकादेशविशिष्टस्यापीत्यर्थादुर्सित्यत्र प्र-त्ययत्वस्य सुलभत्वाद् "एकदेशविकृतमनन्यवद्" इतिन्या-येनोर इत्यस्य प्रत्ययतया न दोष इति वाच्यम्। त्रि-पाद्या असिद्धत्वेन तत्र "अन्तादिवच्च" इत्यस्याप्रवृत्तेः। स्थानिवद्भावेनापि न प्रत्ययत्वम्। उपात्तस्थानिनो ऽका-रस्य प्रत्ययत्वाभावात्। प्रत्ययसम्बन्धित्वमपि न स्था-निवद्भावलभ्यम् अशास्त्रीयत्वादिति दिक्।

एतदुक्तम्—"मातुःकरोति। अप्रत्ययस्येति षत्वं प्रसज्येत, अप्रत्ययविसर्जनीयस्येत्युच्यते प्रत्ययविस-र्जनीयश्चायम्, लुप्यते ऽत्र प्रत्ययो रात्सस्येति" प्रकृतो-रणुरपरसूत्रयोर्भाष्ये।

एवं चात्र प्रत्ययभिन्नविसर्जनीयत्वात् षत्वं स्या-दिति सकलमभिसन्धायाह—एकादेशेति।

तदुक्तम्—"एवं तर्हि भ्रातुष्पुत्रग्रहणं ज्ञापकमे-कादेशनिमित्तात् षत्वप्रतिषेधस्य, कथं कृत्वा ज्ञा-पकम्, यदयं कस्कादिषु भ्रातुष्पुत्रशब्दं पठति त-

ज्ज्ञापयत्याचार्य एकादेशनिमित्तात् षत्वं न भवति' इति तत्रैव भाष्ये ।

"ऋत उद्"इत्येकादशविधायकं शास्त्रं तद् निमित्तं प्रयोजकं यस्य विसर्गस्येत्यर्थः ।

विसर्गस्यैकादेशशास्त्रनिमित्तकत्वं तु एकादेश-शास्त्रसम्पन्नरेफस्थानिकत्वाद् बोद्धव्यम् ।

पाठादिति । न च "षत्वतुकोरसिद्धः" इति सूत्रेणैकादेशशास्त्रस्यासिद्धत्वात् षत्वाप्राप्तौ तत्र पाठो विध्यर्थ एवास्तु, कथं ज्ञापनायेति वाच्यम् । षत्वे तुकि च कर्त्तव्ये पदान्तपदाद्योरेवैकादेशो ऽसिद्ध इति-भाष्यसम्मतार्थेन 'कोऽसिचद्'इत्यादावेकादेशस्यासिद्ध-त्वादिति कैयटादयः ।

ननूक्तज्ञापकाद् 'मातुः कृपा'इत्यादाविव 'शकान् ह्वयन्ति'इत्यत्र"आदेच उपदेशे"इत्यात्वे क्विपि सम्प्रसारणे "सम्प्रसारणाच्च"इत्येकादेशे "हलः" इति दीर्घे 'शकहूषु' इत्यत्रापि षत्वं न स्यादिति चेन्मैवम् । तुल्यजातीय-कत्वात् नियमस्य कश्च तुल्यजातीयः, कुप्वोरिति दिक् ।

हयवरट्सूत्रे भाष्ये तु "उपधाग्रहणं न करिष्यते इदुद्भ्यां तु परं विसर्जनीयं विशेषयिष्यामः" इति प्रत्याख्यातं सूत्रस्थमुपधाग्रहणमित्यन्यदेतत् ।

यद्यपि द्वित्रिभ्यां सुजन्ताभ्यां चतुश्शब्दस्यापि सुजन्तत्वे लब्धे कृत्वोर्थग्रहणं 'साहचर्यं न व्यवस्थापकं सर्वत्र' इत्यर्थज्ञापनार्थम्। तेन "दीधीवेवीटाम्" इत्यत्रागमस्येटो ग्रहणं न तु धातोरिति ज्ञापनफलं दर्शितम्, तथापि 'प्रकृते किम्' इति पृच्छति कृत्वोऽर्थे किमिति।

नन्वस्त्वेवं कृत्वोऽर्थ इत्यनेनैव कृत्वोर्थे वर्त्तमानस्येदुदुपधस्य पदस्य यो विसर्गस्तस्य षत्वं वेति सूत्रार्थे 'दशकृत्वः करोति' इत्यादौ नातिव्याप्तिर्न वा चतुष्करोतीत्यादावव्याप्तिरिति "द्विस्त्रिश्चतुः" इति न कर्तव्यमिति चेन्न। कृत्वोर्थ इत्यस्य "इदुदुपधस्य" इतिसूत्रं प्रत्यसिद्धेश्चतुश्शब्दे नित्यषत्वापत्तेः।

ननु "प्रकरणे प्रकरणमसिद्धं न तु योगे योगः"। तदुक्तम् "उपसर्गादसमासेऽपि णोपदेशस्य" इत्यत्राष्टमे भाष्ये "समासे पूर्वपदादिति नियमान्न प्राप्नोति, असिद्धमुपसर्गाण्णत्वं तस्यासिद्धत्वान्नियमो न भविष्यति, एवं तर्हि सिद्धे सति यदसमासग्रहणं करोति तज्ज्ञापयत्याचार्यः—'न योगे योगोऽसिद्धः किं तर्हि प्रकरणे प्रकरणमसिद्धम्' इति"। एवं च तद्ग्रहणं व्यर्थमेवेति चेन्न। "रषाभ्याम्" इत्यत्र समानपदं समानमेव यन्नित्यं पद तदाश्रीयत इति समासे नास्य प्रवृत्तिरिति "पूर्वपदात्संज्ञायामगः"-

इत्यस्य विध्यर्थत्वेन समासग्रहणस्य ज्ञापकत्वानुपपत्तिरिति कैयटेन तत्पक्षस्य दूषितत्वात्, "पूर्वत्रासिद्धम्"इत्यत्र पूर्वपदेन प्रकरणग्रहणे व्यवहितप्रकरण एव त्रिपाद्या असिद्धत्वं स्यादिति दोषादस्याधिकारत्वे प्रतियोगमुपस्थित्या प्रतिसूत्रमसिद्धत्वस्य दुर्वारत्वाच्च ।

ननु "सुचः"इत्येवास्तु सूत्रम्। "पदस्य"इत्यधिकारात् सुजन्तपदावयवविसर्गस्येत्यर्थसम्भवेन द्विष्करोतीत्यादेर्निष्प्रत्यूहत्वात् । न च परमद्विष्करोतीत्यादौ षत्वानापत्तिः, प्रत्ययग्रहणपरिभाषया ज्ञापयिष्यमाणयाऽवयवस्य सुजन्तत्वेऽपि 'उत्तरपदत्वे चापदादिविधौ'इतिनिषेधेनापदत्वादिति वाच्यम् । "अनुत्तरपदस्थस्य"इतिनिषेधेन क्वचिदुपात्तविशेष्यासत्त्वेऽपि शब्दरूपविशेष्यमादाय तदन्तविधिरितिज्ञापनेन शब्दरूपविशेष्यमादाय प्रत्ययग्रहणपरिभाषया लब्धस्य तदन्तार्थकस्य पदविशेषणतया सुजन्तान्तस्येत्यर्थेनादोषात्। एवमेव "वनो र च"इत्यादेरर्थ इति दिक्। तस्मात् "सुच"इत्येव सूत्रयितुमुचितमिति प्राहुः ।

चतुष्कपाल इति । चतुर्षु कपालेषु संस्कृत इत्यर्थे "संस्कृतं भक्षाः"इत्यनेन जातस्याणो "द्विगोर्लुगनपत्ये"इति लुक् । चतुःशब्दस्याव्युत्पन्न-

त्वाद् "इदुदुपधस्य" इति नित्यं षः । अत एव "चतुष्पाद्भ्यो ढञ्" इत्यादिनिर्देशसङ्गतिः । न च हयवरट्सूत्रभाष्ये "इदुदुपधस्य सस्य यो विसर्गः" इतिसूत्रार्थकथनेन कथमत्र प्रवृत्तिः, विसर्गस्य पाठाभावेनोपधात्वासम्भवात्तत्स्थानिनिमित्तमुपधात्वं ग्राह्यमिति भाष्यकर्तुराशयात् । अत एवाष्टमे "समः सुटि" इतिसूत्रे "संपुंकानाम्" इतिवार्त्तिकेन रुविधानमेवास्त्विन्त्याशङ्क्य "नैवं शङ्क्यं पुंस्कामेत्यत्रेदुदुपधस्येति षत्वं प्राप्नोति" इत्युक्तं सङ्गच्छते ।

नन्विह सामर्थ्यपदस्यैकार्थीभावे प्रचुरत्वात्तदेव युक्तम्, तथा च सर्पिष्करोतीत्यादौ प्रवृत्तेरभावात्, सूत्राप्रवृत्तौ "इदुदुपधस्य" इति नित्यषत्वप्राप्तिरत आह इह व्यपेक्षेति । इहैवेत्यर्थः । अत एवोत्तरसूत्रे भाष्ये "पूर्वयोगे व्यपेक्षा सामर्थ्यम्, न चात्र व्यपेक्षासामर्थ्यम्" इत्युक्तम् ।

अयं भावः—इहैकार्थीभावसामर्थ्यग्रहणे परमसर्पिःकुण्डिकेत्यादावेकार्थीभावरूपसमासे ऽप्येतत्प्रवृत्त्या विकल्पापत्तिः । उत्तरसूत्रान्तःकोट्याऽनुत्तरपदस्थेत्यनया "नित्यं समासे" इति कोटेर्व्युदासादिति ।

सामर्थ्यं किमिति । नन्वेतदभावे प्रतियोगित्वे-

नैकार्थीभावपर्यवसाने तत्र चोक्तदोषसद्भावात्प्रश्नानुपपत्तिः। न च परस्पराकाङ्क्षारूपा व्यपेक्षा किमर्थमाश्रीयत इत्याशय इति वाच्यम्। एतदर्थाभावे प्रतियोगित्वेनैकार्थीभावार्थपर्यवसाने निरुक्तदोषात्तृतीयकोटेश्चाभावात्। न चोत्तरसूत्रे एकार्थीभाववृत्तिरूपसमासग्रहणेनैतत्सूत्रविषयता स्वातिरिक्तविषयिणी ज्ञाप्यत इति व्यपेक्षालक्षणे सामर्थ्ये लब्धे किमर्थं तदित्याशय इति वाच्यम्। एतत्सूत्रेण सिद्धिमाशङ्क्योत्तरसूत्रवैयर्थ्यं तत्सामर्थ्यादनयोर्भाष्यकैयटयोर्निर्दलत्वापत्तेः। इदं च समनन्तरमेव दर्शयिष्यते चेत्। सत्यम्। नायं किंशब्दोऽत्र पृच्छायाम्, क्व तर्हि जिज्ञासायाम्। व्यपेक्षादेन कीदृशोऽर्थो विवक्षित इति तात्पर्यम्।

प्रत्युदाहरणमुखेन ज्ञापयति तिष्ठतु सर्पिरिति। तत्र परस्पराकाङ्क्षारूपोऽर्थ इति नात्र प्रवृत्तिरिति भावः। विभक्तेः क्रियान्तरानुत्पादादेकक्रियान्वये ऽन्यत्रापेक्षाभावादित्यर्थः। वैपरीत्येनान्वये त्विष्टमेवेति बोध्यमिति दिक्।

अनुत्तरपदस्थस्येति किमिति। इतिशब्दोऽप्यर्थे समाप्त्यर्थे वा। इतिशब्दापाठे तु अन्वयवद्वारा

समुदायस्य सङ्ग्रहः । उभयत्रापि सूत्रे किमर्थमिति प्रश्नः ।

भाष्ये त्ववशिष्टसूत्रवैयर्थ्यादेराशङ्कनात् । तद्यथा—"किमर्थं तर्हीदमुच्यते । प्रतिषेधार्थस्तु यत्नोऽयमनुत्तरपदस्थेति" इति ।

इदं व्याचष्टे कैयटः—"इसुसोस्सामर्थ्ये" इत्यत्र व्यपेक्षालक्षणसामर्थ्यग्रहणात् समासे "इदुदुपधस्य" इति नित्यं षत्वं सिद्धम्, तत्किमर्थमिदं सूत्रमिति प्रश्नाशयः । उत्तरपदस्थस्य समासे षत्वनिवृत्त्यर्थं सूत्रमित्यर्थ इति ।

तदेव समाधत्ते परमसर्पिरिति । नित्यग्रहणं तु न कर्त्तव्यम्, समासे "इदुदुपधस्य" इति नित्यं षत्वसिद्धेरिति कैयटः । "नित्यं समासे" इत्यनेन निषेधापत्तेर्वैयर्थ्यमाशङ्क्याह कस्कादिष्विति ।

ननु तत्र पाठसामर्थ्यादुत्तरपदस्थस्यापि षत्वमस्तु, कथमन्यार्थतेति चेन्न । अनुत्तरपदस्थस्येतिग्रहणस्य तज्ज्ञापकभाष्यस्य चासङ्गत्यापत्तेः । असमासे व्यपेक्षाविरहेऽपीति । तिष्ठतु सर्पिः कुण्डिकामानयेत्यादौ "नित्यं समासे" "इसुसोः" इत्यनयोरप्रवृत्तेः षत्वं न स्यादिति भावः । व्यपेक्षायामिति । सुन्दरं सर्पिः कु

ण्डकाया इत्यादौ "इसुसोः" इतिविकल्पापत्तिरिति भावः॥

इति विसर्गसन्धिः ॥

—:०:—

ननु यत्वस्यासिद्धत्वादुत्वे कृतेऽपि तस्य स्थानिवद्भावेन रुत्वाद्यत्वं स्यादित्यत आह यत्वस्यापवाद इति । ननु पूर्वत्रासिद्धत्वेनोत्वे कर्तव्ये रुत्वमसिद्धमत आह न भवतीति ।
ननु "रोः सुपि" इत्यस्यानन्तरम् 'अत उरति' इत्येवास्तु सूत्रम् । मैवम् । उत्वस्यासिद्धत्वेनाद्गुणप्रवृत्त्यनापत्तेरित्याहुः ।

अशि किमिति । अशतिरिक्ते यादेशेऽपि भोभगो—खरवसानयोरुभयोस्त्रिपादीस्थत्वेऽपि पूर्वं प्रति परस्यासिद्धत्वाद्विसर्गविधिं प्रति यत्वविधेरसिद्धत्वाद्विसर्गस्यैव लाभान्न कुत्राप्यनिष्टमापद्येतेति नार्थोऽशग्रहणेनेति पर्यनुयोक्तुराशयः । सत्यमिति तदाशयमनूद्य समाधत्ते यद्यपीत्यादिना । स्थानिवद्भावेनेति । न चातिदेशं प्रति विसर्गविधेरासिद्धत्वं शङ्क्यम् । "न मु ने" इत्यत्र नेतियोगविभागेन "प्रत्ययः" "परश्च" इतिनिर्देशैश्च क्वचित्त्रिपादी पूर्वं प्रति नासिद्धेति ज्ञापनात् ।

अत एव भगवद्भिरुदासीनैरुत्तरार्थं तर्हीत्युक्तम् । तस्मादश्ग्रहणमदृष्टार्थम् मूलं तु यथाश्रुतमेव । पदे किमिति । गौरवात्प्रश्नः । तन्त्रयुतमिति । तन्त्रउतम् । एकारस्यायादेशः । उत्तरार्थमिति । तदुक्तमत्र भाष्ये "पद इति शक्यमवक्तुम्, कस्मान्न भवति तन्त्रयुतम् । लक्षणप्रतिपदोक्तयोरिति । उत्तरार्थं तर्हि "ङमो ह्रस्वादचि ङमुण्नित्यम्" इत्यादेर्मा भूद्दण्डिनेति" ।

"भुवश्च महाव्याहृतेः" इतिसूत्रे महाव्याहृतिग्रहणेनोक्तपरिभाषा ऽनित्या ।

'यदि तु' इति वदतो मूलकृतो ऽप्ययमेव स्वरसः । तेन पदग्रहणमिहार्थमपीति कश्चित् ।

अजादेः पदस्य ङमुण् नेति भाष्याक्षरार्थः । ह्रस्वात्परो यो ङम् तदन्तं यत्पदमित्यादिके तत्सूत्रार्थे तु परमदण्डिनावित्यादावन्तर्वर्तिविभक्त्या पदत्वान्नुट् स्यात् ।

ननु "उत्तरपदत्वे च" इतिनिषेध इति चेन्न । "अपदादौ" इतिपर्युदासेन पदान्तत्वनिमित्तके विधौ प्रत्ययलक्षणं नेति "न लुमता" इत्यत्र भाष्यसम्मतार्थेनेहाप्रवृत्तेः । किं च यत्रोत्तरपदस्य कार्यित्वं तत्रैव तत्प्रवृत्तिः । अत एव माषकुम्भवापेनेत्यादौ "पदव्यवायेऽपि" इतिप्रति-

षेधसिद्धिरित्यधिकं नागेशीये । दर्शयिष्यते चेदं हल-न्तनपुंसके । तस्मान्मण्डूकप्लुत्योत्तरार्थं पदग्रहणमिति स्थितम् ।

अणः किमिति । दीर्घश्रुत्या "अचश्च" इति परिभाषयाऽच एव दीर्घो भविष्यतीति प्रष्टुर्भावः । वृढो वृढ-इति । ऊदित्त्वेन वेट्कत्वाद् "यस्य विभाषा" इति नेट् । ढत्वधत्वष्टुत्वढलोपाः । ऋकारो नाणन्तर्गत इति दीर्घो नेति भावः ।

अण्ग्रहणसामर्थ्यादेवात्राण् पूर्वेणान्यथोक्तरीत्यैव सिद्धेः । अत्राण् पूर्वेणैव व्याख्यानादिति तु न युक्तम् । व्याख्यानस्यागतिकगतित्वादित्याहुः ।

ननु पूर्वस्येति न कार्यं सप्तमीश्रुत्यैव "तस्मिन्" इति परिभाषोपस्थानादत आह पूर्वग्रहणमिति । अस्य सूत्रस्योत्तरपदाधिकारस्थत्वादुत्तरपदस्थयोरेव ढरेफयोः परतो दीर्घविधानं स्यादिति भावः । एवं चेदिहापीत्याह अजर्घा इति । गृधेर्यङ्लुकि द्वित्वेऽभ्यासस्य रुगागमे लङः सिपि शब्लुकि लघूपधगुणे रपरत्वे "इतश्च" इतीकारलोपे हल्ङ्यादिलोपे भष्भावे जश्त्वे "दश्च" इति रुत्वे अजर्घर्र् इतिस्थिते "रोरि" इति रेफलोपेऽनेन दीर्घ इति दिक् ।

मनस् रथ इत्यादि । "हशि च" इति देवो हसतीत्यादौ सावकाशम् । "रोरि" इति पुनारमत इत्यादौ लब्धावसरम् । उत्वमेवेति । सिद्धासिद्धयोरतुल्यबलत्वेन विप्रतिषेधसूत्राप्रवृत्तौ निष्प्रतिपक्षत्वादुत्वमेव भवतीत्यर्थः । तदुक्तम् "पूर्वत्रासिद्धे नास्ति विप्रतिषेधो ऽभावादुत्तरस्य" इति । अकोः किमिति । अककचसहितयोः शब्दान्तरत्वादेव तत्र नातिप्रसङ्ग इति प्रश्नः । एषक इति । अकोरितिनिषेध एव "तन्मध्यपतितस्तद्ग्रहणेन गृह्यते" इति परिभाषां ज्ञापयतीति समाधानम् । अनञ्समास इति किमिति । नञो ऽभावार्थकत्वेनाभावे प्रतियोगिनो विशेषणत्वात् पूर्वपदार्थप्रधानेनोपसर्जनत्वात् "त्यदादीनामः" इत्यस्याप्रवृत्तौ हल्ङ्यादिलोप एव भविष्यतीति शङ्कितुराशयः । तत्र पूर्वपदार्थप्रधानत्वेऽतौ स्त इत्यत्र द्विवचनादि, अत्वं भवसीत्यादौ पुरुषव्यवस्थादि च न सिध्येदित्याशयेन समाधत्ते अस इति । एतद्ग्रहणमुत्तरपदार्थप्रधानतां नञ्समासे ज्ञापयतीति भावः । अत एवोत्तरपदार्थप्रधानस्तत्पुरुष इति प्रवादो ऽपि सम्पद्यत इति दिक् । इति स्वादिसन्धिः ॥

इति सन्धिप्रकरणम् ॥

अथ पाचक औपगव इत्यादौ प्रत्ययान्तत्वेन प्रातिपदिकसंज्ञापर्युदासात्कृत्तद्धितयोर्ग्रहणमावश्यकम्, समासे तु स्वरसन्ध्युक्तरीत्या समुदायस्यार्थवत्त्वादर्थवत्सूत्रेणैव सिद्धे व्यर्थं तद्ग्रहणमत आह नियमार्थमिति ।

ननु राजपुरुष इत्यादावपि प्रत्ययान्तत्वेन निषेधाद्विध्यर्थमेवास्तु, कथमेतदिति चेन्न । "प्रत्ययग्रहणे यस्माद्"इतिपरिभाषया स्त्रीप्रत्यये ज्ञापयिष्यमाणया वारणात् । तद्यथा—कृते समासे "सुपो धातुप्रातिपदिकयोः"इति सुपो लुगर्थमपेक्षिता प्रातिपदिकसंज्ञा, तत्र च पुरुषशब्दस्य प्रत्ययान्तत्वेऽपि राजपुरुष इति समुदायस्योक्तपरिभाषया प्रत्ययान्तत्वाभावात् । ननु राजकुमारीत्यादौ"स्त्रीप्रत्यये चानुपसर्जने न"इतिवाचनिक्याः "ष्यङः संप्रसारणम्"इतिसूत्रे भाष्योक्तपरिभाषाया अप्राप्तेर्दोष इति चेन्न ।

"अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते"इति हलन्तपुंलिङ्गे ज्ञापयिष्यमाणया परिभाषयाऽन्तरङ्गहल्ङ्याब्भ्यादिलोपस्याप्रवृत्तेः श्रूयमाण एव सुपि समासेन तत्र चाप्रत्ययान्तत्वेन प्रवृत्तायाः प्रातिपदिकसंज्ञाया "एकदेशविकृतमनन्यवद्"इति परिभाषया निर्जरशब्दे वक्तव्यतया विभक्तिलुक्यपि सुलभत्वात् ।

ननु चार्थवत्त्वं शक्तिलक्षणाव्यञ्जनान्यतमसम्बन्धेनार्थबोधकत्वमिति स्वीकाराच्छशशृङ्गमित्यादौ तदभावात् समासग्रहणं विध्यर्थमिति चेत् । मैवम् । तत्रापि बौद्धार्थे शक्तिस्वीकारस्यान्यत्र प्रपञ्चितत्वात् ।

ननु 'वृत्तिमत्प्रातिपदिकम्' इत्येवास्तु सूत्रमिति चेन्न । भाषाशब्दानामप्यवश्यं शक्तिस्वीकारेण तत्रापि संज्ञया साधुतापत्तेः, तिङादावपि दोषापत्तेश्च । न च कृदादिवृत्त्यभिप्रायेण तादृशसूत्रमास्तामिति चेन्न । अव्युत्पन्ने डित्थादावव्याप्तेः सनाद्यन्तेष्वतिव्याप्तेश्चेति दिक् ।

ननु भाष्यकृदभिहितप्रत्याहाराद् 'अतिप्प्रातिपदिकम्' इति न्यासस्वीकारेण सुप्तिङन्तभिन्नं प्रातिपदिकसंज्ञं स्यादित्यर्थात् समासस्यापि स्यात्, माऽऽस्तां च नियमसूत्रमिति चेन्न । प्रत्येकं वनमित्यादौ च, दश दाडिमानि षडपूपा इति समुदायेषु च सञ्ज्ञानिरासाय बहुपटव इत्याद्यर्थं चार्थवत्सूत्रस्यावश्यकरणीयत्वे नियमसूत्रस्यापि करणीयत्वात् ।

एतेनाहान्नित्यत्र हन्तेर्लङि नलोपवारणायाधातुग्रहणस्यावश्यकत्वात्, काण्डे कुण्डे इत्यादावतिव्याप्तेश्चोक्तन्यासो न कार्य इति मन्दोक्तमपास्तम् । प्रत्यय-

लक्षणेन लुप्ततिङन्तसुबन्तत्वाश्रयणेनैवेष्टसिद्धेः । "सप्तम्यधिकरणे च" इत्यादिनिर्देशैर्विभक्त्यादेशस्यान्तवद्भावानभ्युपगमात् काण्ड इत्यादौ दोषाभाव इति यथान्यास इवात्रापि वक्तुं शक्यत्वादिति दिक् ।

नियमस्वरूपमाह यत्रेति । सङ्घाते ऽर्थवति पदसमुदाये इत्यर्थः । समासस्य सजातीय एव नियम इत्याह पूर्वो भागः पदमिति । चतुर्विधेऽपि समासे पूर्वभागस्य पदत्वाव्यभिचारित्वादिति भावः ।

ननु जन्मवानित्यादौ "स्वादिष्वसर्वनाम—" इत्यनेन पूर्वभागस्य पदत्वात् सञ्ज्ञानापत्तिः । न च तद्धितान्तत्वात् सिद्धिः । तस्यौपगवमित्यादौ "यचि भम्" इतिपूर्वभागस्य भत्वेन नियमाप्राप्त्या चरितार्थत्वादिति चेन्न । पूर्वनियमे 'उत्तरस्तु प्रत्ययो न' इत्यंशपूरणात् । एवमपि राजेयानित्यत्र पूर्वभागस्य पदत्वेऽप्युत्तरस्य प्रत्ययत्वाद् नियमाप्राप्तेः समुदायस्य प्रातिपदिकत्वं स्यादिति चेत् । मैवम् । पूर्वभागप्रकृतिकप्रत्ययो नेतिव्याख्ययाऽत्रातथात्वात् ।

न चोक्तरीत्या पूर्वो भागः पदमिति नियमांशं विनाऽपि समीहितसिद्धेस्तदंशो व्यर्थ इति वाच्यम् । बहुपटव इत्याद्यर्थमावश्यकत्वात्तद्यथा-

बहुच्विशिष्टस्य प्रातिपदिकत्वेन जसो लुकि सति 'चितः सप्रकृतेर्बह्वकजर्थम्'इत्यनेन प्रत्यये सति प्रकृतिप्रत्ययसमुदायस्यान्त उदात्तो वाच्य इत्यर्थकेन पटुपदोत्तरोकारस्योदात्तत्वसिद्धिः । अन्यथा जस एवोदात्तत्वे अनिष्टापत्तेः । न च तद्धितग्रहणस्य तद्धितविशिष्टपरत्वान्न दोष इति शङ्क्यम् । पचतकीत्यादावतिव्याप्तेः ।

ननु वृषण्वसुरित्यत्र "वृषण्वस्वश्वयोः" इतिसूत्रेण पूर्वभागस्य भत्वान्नियमाप्राप्त्या संज्ञानापत्तिरिति चेन्न । तस्य च्छान्दसत्वात्, वृषण् सु वसु सु इत्यवस्थायामेव प्रातिपदिकसंज्ञाप्राप्तेः, तदानीं च वसुशब्दपरत्वाभावेनैव भसंज्ञाया अप्रवृत्तेश्चेति दिक् ।

नियमफलमाह वाक्यस्य नेति । गामानय शुक्लां दण्डेनेत्यादौ सति प्रातिपादिकत्वे सुपो ऽश्रवणापत्तिरिति भावः ।

ननु "कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्"इति परिभाषया समासे कथयिष्यमाणया मूलकेनोपदंशं भुङ्क्ते इत्यादिवाक्यस्य स्यादेव संज्ञा । न च भुजिक्रियायां मूलकेनेत्यस्य करणत्वेनान्वयादुपदंशं कृदन्तं प्रति कारकत्वमेव नास्तीति भ्रमितव्यम् । उपदंशमित्यत्र कर्मत्वेनाप्यन्वयस्य वक्तुं शक्यत्वात्, तत्र

च प्रधानभुजिक्रियानिरूपितकरणत्वसंज्ञाप्रयुक्ततृतीयैव पश्य मृगो धावतीत्यादाविवेति स्पष्टमन्यत्रेति चेन्न, समासकृतनियमेन परत्वात्कृदन्तप्रयुक्तकार्यबाधनस्याङ्गीकारादिति सङ्क्षेपः।

अधिकारसूत्रे ङ्याप्गोर्ग्रहणं माऽस्त्वित्याक्षिपति लिङ्गविशिष्टस्यापीति। लिङ्गबोधकप्रत्ययविशिष्टस्यापीति तदर्थः। इयं च परिभाषा "युवा खलति" इत्यादिसूत्रे युवग्रहणादिभिर्ज्ञापितेति स्पष्टमाकरे। तद्धितोत्पत्तिरिति। अन्यथोभयत्रापि प्रत्ययत्वेनोत्पत्तावनियमः स्यादिति भावः।

ङ्याबन्तात्तद्धितोत्पत्तौ तु आर्यका आर्यिकेतिरूपद्वयसिद्धिस्तद्यथा प्रथममार्यपदादापि ततः स्वार्थिके कनि "के ऽणः" इति ह्रस्वत्वे "उदीचामातः स्थाने यकपूर्वायाः" इत्याकारस्थानिकाकारस्येत्वविकल्पात्। अन्यथा तु "प्रत्ययस्थात्" इत्यनेनोत्सर्गविधिना नित्यमेवेत्वे आर्यिकेत्येकमेव रूपं सिध्येत्। ङ्याब्ग्रहणं स्त्रीप्रत्ययमात्रोपलक्षणम्। तेन युवतितरेत्यादौ वयोवाचके वैकल्पिकजातित्वस्य स्वीकाराज् "जातेश्च" इति पुंवत्त्वनिषेधसिद्धिः। किं च तद्धितग्रहणं समासान्तप्रत्ययाद्यतिरिक्तपरम्। तेनयूनीतिरिति बहुगोमतीकेति प्रयोगो-

नेति बोध्यम् ।

वस्तुगत्या ङ्याब्ग्रहणं न कर्तव्यम् । तथा हि "घकालतनेषु कालनाम्नः" इत्यादिज्ञापनात्सुबन्तात्तद्धितोत्पत्तिरिति परमार्थः । तत्र स्वार्थद्रव्यलिङ्गसङ्ख्याकारकेतिपञ्चविधप्रातिपदिकार्थप्रयुक्तकार्याणा क्रमनियमः, प्रथमं शब्दप्रवृत्तिनिमित्तत्वेन जातिबोधः । ततो धर्मित्वेन प्रधानत्वाल्लिङ्गादिभिरपेक्षितत्वाच्च व्यक्तिबोधः । ततः स्वमात्रापेक्षत्वाल्लिङ्गबोधः । ततो विजातीयक्रियापेक्षया कारकापेक्षया सजातीयपदार्थापेक्षसंख्यायाः प्रथममुपस्थितत्वात् सङ्ख्याबोधः । ततः कारकरूपविभक्त्यर्थापेक्षया कारकबोधः । तथा च लिङ्गकार्यानन्तरमेव तद्धितोत्पत्तेः पूर्वोक्तप्रयोगाणां नानुपपत्तिरिति वदन्ति ।

ननु रामा इत्यादौ दीर्घो न स्यात् सवर्णबाधकत्वाद् अतो गुणस्य इत्याशङ्क्यापवादविषयबाध्यविशेषचिन्तापक्षमूलन्यायेन समाधत्ते पुरस्तादिति ।

अयं च न्यायो "नादिचि" इतीज्ग्रहणेन ज्ञाप्यते । तद्धि रामा रामानित्यादौ निषेधाभावार्थं क्रियते, पररूपेणैव पूर्वसवर्णदीर्घबाधने हि तद्ग्रहणं व्यर्थमिति ।

एवं हि पाठक्रमः—"अतो गुणे, अकः सवर्णे

दीर्घः, प्रथमयोः पूर्वं सवर्णः" इति । अत्र वक्तव्यमुक्तं स्वरसन्धौ, वक्ष्यते च ।

हे रामेत्यादौ विप्रतिपत्तिं निरस्यति सम्बुद्ध्याक्षिप्तस्येति ।

प्रत्ययविधावङ्गस्यापेक्षितत्वेनाङ्गाक्षेपस्योचितत्वादिति भाव इत्येके ।

सम्बुद्धेः प्रत्ययत्वेन "यस्मात् स विहितस्तदादि" इत्यंशरूपस्याङ्गस्याक्षेपो, न त्वङ्गेतिसूत्रस्येति स्पष्टं भाष्य इत्यन्ये ।

एवञ्च मौलिकार्थस्य हे राम इत्यादिर्विषयो न त्वन्य इत्याह हे कतरदिति । इह प्रकृत्यकारस्य टिलोपेनापहाराद् ह्रस्वान्ताङ्गात् परहलो ऽभावादित्याशयः । ननु "येन यद् आक्षिप्यते तत्तस्यैव विशेषणम्" इति न्यायस्य जात्याक्षिप्तव्यक्तौ व्यक्तत्वात् प्रकृतेऽपि सम्बुद्ध्याक्षिप्तस्याङ्गस्य सम्बुद्धावेवान्वयस्योचितत्वेन 'अङ्गात् परस्याः सम्बुद्धेरवयवस्य हलो लोपः' इति सूत्रार्थ उचितः, ततश्च हे कतरदित्यादिसिद्धेर्मूलोक्तार्थो न युक्त उक्तन्यायविरोधादिति चेत् । मैवमित्याह कुलेति । तथा सतीदं न सिध्यतीत्यभिप्रायः । अत्र "स्वमोर्नपुंसकाद्" इतिलोपात् परत्वाद "अतो ऽमि"

कृते ऽमि पूर्वरूपत्वे च हलन्ताङ्गात् परसम्बुद्धेरभावाद् मलोपो न स्यात् ।

नन्वेकादेशस्य पूर्वान्तवद्भावेन ह्रस्वान्ताङ्गात् परत्वमिति चेत्, हन्त भोः परादिवद्भावं विना अमि सम्बुद्धित्वस्यैवाभावात् । न च द्वयोराश्रयणम्, "उभयत आश्रयणे नान्तादिवद्"इति निषेधात्, सत्यप्येवं ह्रस्वसम्बुद्ध्योः पौर्वापर्यव्यवहारासम्भवापत्तेश्च । एवं च लक्ष्यानुरोधादन्याक्षिप्तस्याप्यन्यत्रान्वय इति स्वीकारेण कुत्रचिन्न्यायास्वीकार इति भावः ।

नन्वेवमपि कथमत्र मकारलोपः सम्बुद्धित्वस्य सकारमात्रनिष्ठत्वेन स्थानिभूताल्धर्मत्वाद् "अनल्विधौ" इति निषेधेन स्थानिवद्भावाभावेनामः सम्बुद्धित्वविरहान्मस्य सम्बुद्ध्यवयवत्वाभावादिति चेन्न । सुप्सञ्ज्ञाया उकारविशिष्टे सत्त्वेन सुबुपस्थाप्ये जायमानैकवचनसंज्ञाया विशिष्टे सत्त्वेन सम्बुद्धिसञ्ज्ञायामित्संज्ञकोकारविशिष्टस्यैवोद्देश्यत्वेन तस्यानल्विधित्वात् स्थानिवद्भावेन सम्बुद्धित्वस्य सुलभत्वादिति न कश्चित् क्षुद्रोपद्रवः ।

एङ्ग्रहणं किमिति । हरे विष्णो इत्यादावङ्गाधिकारस्थात् परनिमित्तापेक्षाच्च गुणात् पूर्वं ह्रस्वान्तत्वा-

देव सिद्धिः। सेप्रभृतीनां त्वनभिधानमेव, सति वाऽभिधाने एग्रहणेनैव सिद्धेः प्रत्याहारो व्यर्थ इति प्रष्टुराशयः। समाधत्ते ह्रस्व इति। तत्सामर्थ्यादेवात्र सन्निपातपरिभाषानिवृत्तिः, 'गुणात्सम्बुद्धेः' इति वक्तव्ये ह्रस्वग्रहणसामर्थ्याच्चेति दिक्। सन्निपातपरिभाषाया अप्रवृत्तेरेव हे लक्ष्मि इत्यादौ सम्बुद्धिलोप इत्याहुः।

सन्निपातेति। "सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य" इति परिभाषाशरीरम्। सन्निपातः संश्लेषः, स लक्षणं निमित्तं यस्य तं सन्निपातं यो विहन्ति निवर्तयति स तद्विघातः, तस्य निमित्तं कारणं न भवतीति तदर्थः। एवं चेयं परिभाषोपजीव्योपजीवकभावविरोधमूलिका। उपजीवकविधिरुपजीव्यविधेर्विघाते करणं न भवतीति वर्त्तुलार्थः।

ननु यञादित्वसापेक्षदीर्घस्य बहिरङ्गतयाऽसिद्धत्वान्नेह सन्निपातविघात इति चेन्न। आरोपितासिद्धत्वेऽपि वास्तविकतद्विघातस्य जायमानत्वेन तत्प्रवृत्तेरिति दिक्।

कष्टायेति। नचात्र "अकृत्सार्वधातुकयोः" इति दीर्घः, अतः कथमस्यानित्यताज्ञापकत्वम्। तस्यापि सन्निपातपरिभाषयैवाप्राप्तेरित्याशयात्। विरोधाभावात्फलविशे-

षाभावाच्च परत्वेऽपि "अक्रुद्" इति सूत्रमत्र नोपन्यस्तम् । नतु "अकृत्सार्व—" इतिपर्युदासेन तिङन्त एवास्य प्रवृत्तिरित्यपि युक्तम् । अङ्गवृत्तपरिभाषां ज्ञापयितुं "ज्यादादीयसः" इतिसूत्रे ह्रस्वमकारं विधाय ज्यायानित्यत्र "अकृत्सार्व—" इति दीर्घं विदधतां भाष्यकृतां विरोधापत्तेः ।

झलि किमिति । रामाणामित्यादिकं सान्निपातपरिभाषया न दोषसहम् । "उतो वृद्धिर्लुकि" इत्यतो हलीत्यनुवर्त्य हलि परत एव एत्वाविधानादिति प्रश्नः । अतिरिच्यमानं झल्ग्रहणमेत्वविधावुक्तपरिभाषाया अनित्यतां ज्ञापयति, तेन सर्वेषामित्यादावेत्वं सिद्धमित्युत्तरम् ।

स्यादेतत् । 'बहुवचने झलीग्' इत्यस्तु लाघवात् सूत्रम् । मैवम् । "आद्यन्तौ टकितौ" इतिकिदागमस्यान्तावयवत्वादिगन्तनपुंसकत्वेन "इकोऽचि" इतिसूत्रेण ज्ञानयोरित्यादौ नुमापत्तेः । न चादुगुणोऽन्तरङ्गत्वात् प्रवर्तेतेति वाच्यम् । 'वार्णादाङ्गम्' इति न्यायेन नुम एव प्रवृत्तेः, न च समाननिमित्तकत्वरूपसमानाश्रयत्व एवायं न्याय इति वाच्यम् । इयाय इयेषेत्याद्यसिद्धेः । द्वित्वे कृते अन्तरङ्गं सवर्णदीर्घं न्यायेनैव बाधित्वा वृद्धिप्रवृत्तौ रूपसिद्धिः, त्वदुक्तसमानाश्रयत्वाभावेन तद-

सङ्गतिः स्याद् । आङ्ग्वार्णयोः समानकार्यित्वे एव त-त्प्रवृत्तिरित्युक्तेर्न दोषः । इहापीकारस्य नुम्स्थानित्वाद् "आद् गुण" इत्यस्यापि "पूर्वपरयोः"इत्यादि-निर्देशेनेकारस्य स्थानित्वेन समानाश्रयत्वात् ।

एतेनेह 'वार्णादाङ्गम्'इत्यस्याप्रवृत्तेरन्तरङ्गत्वान्नु-मः पूर्वमेकादेशस्यैव प्रवृत्तिरिति मन्दोक्तमपास्तम् ।

ननु टकारोऽनुबध्यताम् । एवमपि सुबाद्यवयव-त्वात् निर्जरेभ्य इत्यादौ जरसादेशापत्तिरिति केचित् ।

वस्तुगत्या एभ्य इत्यत नित्यत्वादिटि कृते हलि लोपं बाधित्वाऽनादेशापत्तेः । एतेन प्रतिप-त्तिक्लेशवारणाय तथा न्यासो न कृत इति मन्दोक्त-मपास्तम् ।

ननु "बहुवचने स्भ्येद्" इति न्यासोऽस्तु । मैवम् । "सुट्तिथोः"इत्यादाविकारोच्चारणेन "न पुनरन्तरेणाचम्" इति "उच्चैः"इतिसूत्रस्थभाष्येण च शास्त्राबोधिताजव्य-वहितहल्समुदायस्यासाधुत्वबोधनात् । स्कोरित्यादिस्तु सौत्रप्रयोग इत्याहुः ।(१)

(१) परे तु उक्तन्यासस्य लाघवानुगृहीतत्वेन पाणिनेरेवैतस्य करणं सम्भाव्यते तदा स्कोरित्यादिवदस्यापि सौत्रत्वादुपपत्तिः सुशकेति विचार्यमित्याहुः ।

अत्र केवलं 'झल्येद्'इति न्यासः । सुपीत्यनुवृत्त्या झलादौ

यद्यपि पर इति । ननु इदं न सत्, "नामि"इत्यस्य नित्यत्वात्, कृते ऽपि "सुपि च"इति दीर्घे पर्जन्यवल्लक्षणप्रवृत्त्या "नामि"इत्यस्य प्रवृत्तेरिति चेन्न । 'शब्दान्तरस्य'इतिन्यायेनानित्यत्वात् । न च "एकदेशविकृतम्"इतिन्यायेन शब्दान्तरत्वाभाव इति वाच्यम् । शब्दान्तरस्य"इतिन्यायविषये एकदेशन्यायाप्रवृत्तेः । अन्यथोक्तन्यायस्य सर्वथा वैयर्थ्यापत्तेः । अत एव चिकीर्षतीत्यादौ "अज्झनगमाम्"इतिदीर्घे दीर्घस्य, अन्यथा तु ह्रस्वस्येतिशब्दान्तरप्राप्त्या द्वित्वमनित्यमिति भाष्योक्तं सङ्गच्छते । न च नाम्शब्दमुच्चार्य विहितत्वेन प्रतिपदोक्तत्वात् नामीत्यस्यैव प्रथमं प्रवृत्तिरिति वाच्यम् । प्रतिपदोक्तेऽपि निरवकाशस्य बीजत्वेन "नामि" इत्यस्य निरूपयिष्यमाणावकाशत्वात् । नाम्त्वसुप्त्वाश्रयणेन बहिरङ्गत्वं तूभयोः समम् । तस्मान्मूलोक्तं युक्तमेवेत्याहुः ।

परिभाषाविरोधादिति । अनित्यता सर्वत्राभ्युपे-

---

सुपि पत्वमिति तदर्थः । नचैवं राम इत्यत्रैत्वं शङ्क्यम् । एङ्ह्रस्वादिति सूत्रे ह्रस्वग्रहणेन सौ तदभावज्ञापनात् । अन्यथा एङ्ग्रहणादेव सिद्ध्या तस्य वैयर्थ्यापत्तेः । न च हे गौरि इत्याद्यर्थे तदावश्यकम् । ह्रदेङ्सम्बुद्धेरिति न्यासेनेष्टसिद्धेः । ज्ञानेत्यादौ सम्बुद्धिलोपस्तु उक्तन्यासादूर्ध्वम् 'अम्' इति न्यस्य सम्बोधनस्यामोऽपि लोप इति स्वीकाराद्वा वारणात् इति केचिद् ।

येत्यत्र मानाभाव इत्याशयः । आरम्भसामर्थ्यादिति । "सुपि च" इति तु रामाभ्यामित्यादौ सावकाशमिति भावः । ननु "षट्चतुर्भ्यः" इति नुटि कतीनामित्यत्र परिभाषाप्रवृत्त्यभावात् "नामि" इत्यपि चरितार्थम् । किञ्च "सरूपाणाम्" इत्यादिनिर्देशेनोक्तपरिभाषाया अनित्यताऽभ्युपगमेऽपि रामाणामित्यादौ परत्वात् "सुपि च" इत्यस्यैव प्रवृत्तेरत्र "नामि" इत्यस्योपन्यासो मोघ एव । न च चतुर्ग्रहणेन हलन्तषट्संज्ञकादेव नुट् न तु कतिशब्दादिति वाच्यम् । "द्वित्रिश्चतुः" इति सूत्रे कृत्वोर्थग्रहणेन साहचर्य्यस्यानित्यताश्रयणात् । रेफो यथा हल्सञ्ज्ञकस्तथा ऽम्संज्ञोऽपीत्यमन्तषट्सञ्ज्ञकादेव नुट् न तु षकारान्तादिति षण्णामित्यत्र नुडनापत्तेश्च । तस्मात् कतीनामिह चारितार्थ्यान्नामीत्यस्य कथं वैयर्थ्यमिति चेत् । 'कतेर्नामि' इत्येवास्तु विशेषसूत्रम् । "नैकमुदाहरणं योगारम्भं प्रयोजयति' इति भाष्यकृदुक्तेः । योगारम्भमिति सामान्ययोगारम्भमित्यर्थस्तेनाग्नेयामित्यस्य "अग्नेर्ढग्" इत्यादेः प्रयोजकत्वमव्याहतमिति भावो भाष्यकर्त्तुः ।

---

(१) अन्यूनानतिरिक्तधर्मावच्छिन्नविषयताप्रयोजकपदोपादाने कर्तव्ये व्यापकधर्मावच्छिन्नविषयकपदोपादानं न कर्तव्यमिति परमार्थः ।

सामर्थ्यादित्यस्य सामान्यसूत्रारम्भसामर्थ्यादित्यर्थः ।

ननु "ह्रस्वनद्यापः"इत्यत्र 'नुड्'इति योगं विभज्य सामान्येन नुटं विधाय 'नद्यापः' इति दीर्घान्ताच्चेन्नद्याप एवेतिनियमाद्दीर्घान्तेषु दोषो न, हलन्ताच्चेत् षट्चतुर्भ्य एवेति नियमाद्, "वा द्रुहमुहष्णुहष्णिहाम्"इत्यादिनिर्देशाद्वा हलन्तेषूपपत्तिं प्रतिपाद्य, ह्रस्वग्रहणं प्रत्याख्यायते । ततश्चोक्तपरिभाषाया अप्राप्तेर्नामीति नोपक्षीणमिति चेन्मैवम् । नद्याप इत्यस्य स्त्रीलिङ्गाच्चेन्नद्याप एवेति विपरीतनियमापत्तौ मतीनामित्यादौ नुडनापत्तेरुक्तकल्पनावैफल्यात्(१) ।

एतेन बहुश्रेयस्यादीनां पुंलिङ्गानामनदीत्वदर्शनात् तिसृणामित्यत्र नामि दीर्घनिषेधाद् ज्ञापकाच्च स्त्रीलिङ्गाच्चेन्नद्याप एवेति नियमः कर्तुमशक्यः । दीर्घान्ताच्चेति नद्याप एवेति तु सुकर एव । आ आबितिप्र-

---

(१) यत्तु कैश्चिद् नामीत्यत्र न इत्यस्य लुप्तषष्ठ्यन्तत्वं स्वीकृत्य आमि परे नान्तस्याङ्गस्याचो दीर्घ इत्यर्थः । आमीति सप्तम्या अङ्गाज्विशेषणत्वेन 'येन नाव्यवधानम्'इति न्यायेनैकवर्णव्यवधाने प्रवृत्तिः । ह्रस्वेत्यत्र च नुको विधानं धनानामित्यादौ सन्निपातपरिभाषयाऽल्लोपाभावसाधनम् । एवंच पञ्चानामित्यादावप्यनेनैव दीर्घसिद्धया "नोपधायाः" इति सूत्राकरणलाघवं प्रदर्श्यते तत्तु षण्णां चर्मणामित्यादौ दोषवारणायानेकक्लिष्टकल्पनागौरवेणैव दूषितप्रायम् । इत्याद्यन्यतोऽवसेयमिति दिक् ।

श्लेषेण सिद्धान्ते दीर्घाकारस्य ग्रहणात् । तत्साहचर्येण नदीसञ्ज्ञकानामपि दीर्घाणामेव ग्रहणादिति मन्दोक्तमपास्तम् । यतो नदीत्वस्य नित्यस्त्रीविषयत्वेनार्थान्नित्यमित्यस्य सिद्धत्वान्निवेशाद्वा विशब्दस्य च नियमानन्तर्गतत्वेन "षट्चतुर्भ्यश्च" इत्यत्र त्रेरित्यस्यानुवर्त्तनेन वा नुट्सिद्ध्योक्तज्ञापकासम्भवात् । बहुश्रेयस्यादीनां तु अर्थान्तरसङ्क्रमात् पूर्वं विद्यमानं नित्यस्त्रीत्वमादाय तस्यार्थान्तरसङ्क्रमेऽपि नदीत्वं वक्तव्यमित्यर्थकेन प्रथमेतिवार्त्तिकेनाभीष्टं तत् । वार्त्तिकाभावेऽपि यथोद्देशपक्षे पूर्वप्रवृत्तां सञ्ज्ञां कार्यकालेऽप्यवयवगतामादायातिदिश्यते ।

भाष्येऽप्युक्तम्—"अवयवस्त्रीविषयत्वात्सिद्धम्, अवयवोऽत्र स्त्रीविषयस्तदाश्रया नदीसञ्ज्ञा भविष्यति" इति । तस्मादग्रस्त्राश्रय एवेह नुडितिपरिभाषाप्रवृत्तेर्नामीत्यारम्भसामर्थ्यात्परिभाषां बाधत इत्युक्तम् ।

इणकोः किमिति । "टाङसि" इत्यत्र सकारोच्चारणसामर्थ्यादेव दोषाभाव इति प्रश्नः । तत्र सकारोच्चारणस्येण्कोरित्यनुवृत्तावेव तात्पर्यग्राहकत्वम्, अन्यथा अमुष्येत्यादौ षत्वं न स्यादित्युत्तरम् ।

विशेष्याभावात्सर्वाद्यन्तस्य सञ्ज्ञानुपपत्तिं मत्वा

तां साधयितुं प्रतिजानीते तदन्तस्यापीति । द्वन्द्वे चे-ति प्रथमार्थे सप्तमीयम् । द्वन्द्वः सर्वनामसञ्ज्ञो नेत्य-र्थः । न हि तदन्तविधिं विना समुदायेऽस्ति सञ्-ज्ञाप्राप्तिर्या तेन प्रतिषिध्येतेति भावः । नन्वङ्गाधिका-रोक्तेस्तदन्तविधिं विनैव परमसर्वस्मायित्यादौ सिद्धेस्त-दन्तसञ्ज्ञायाः किं फलमत आह तेनेति । त्र-लादौ "सञ्ज्ञाविधौ" इति निषेधात्तदन्तविध्यभावादित्या-शयः । नन्विहावयवनिष्ठसर्वनामत्वेन सुबुत्पत्तेः प्रा-गेव त्रलादयः सेत्स्यन्तीति चेन्न । 'सुबन्तात्ताद्धितोत्प-त्तिः' इति सिद्धान्तात् । सर्वनामप्रकृतिकसुबन्तात् त्रला-दय इति तत्सूत्रार्थेन 'परमसर्व' इति समुदायस्यैव सुबन्तत्वादिति दिक् ।

किं च प्रथमार्थे सप्तम्यन्तत्वादिदं सूत्रं समुदा-यस्यैव सञ्ज्ञानिषेधकं पर्यवस्यति । अवयवानां निषेधे तु वर्णाश्रमेतराणामित्यादौ सर्वार्थवाचकसर्वाद्यन्तत्वेन समुदायस्य सञ्ज्ञायां सुडापत्तिः । अवयवस्य निषे-धेऽपि सर्वार्थवाचकसर्वादित्वानपायात् । अत एव व-क्ष्यति समुदायस्यायं निषेध इति । न चावयवसर्वना-मत्वेनाकजापत्त्या तन्मध्यपतितन्यायेन शीभावः स्या-दिति वाच्यम् । "विभाषा जसि" इत्यत्र जसाधारे इत्या-

द्यर्थवर्णनयत्नेनैव तद्वारणात् ।

एतेन वर्णाश्रमेतरका इत्यत्राकचि शीभावः स्यादिति मन्दोक्तमपास्तम् ।

अवयवनिषेधे फलाभावोऽपि । त्वच्छब्दस्य तान्तत्वे काकचोर्विशेषस्तु न फलम् । तस्य सर्वनामत्वे दृढतरमानाभावाद्, बहुसम्मतत्वाच्चेत्यधिकं नागेशीये ।

वस्तुगत्या "येन विधिः"इत्यत्र भाष्योक्ततदन्तत्वस्य "प्रयोजनं सर्वनामाव्ययसञ्ज्ञायाम्" इति वार्तिकाद्विशेष्यस्य शब्दस्वरूपस्य सम्भवाच्च विशेष्यविशेषणभावेनैवास्तां तदन्तविधिः । केवलानां तु व्यपदेशिवद्भावेन "सर्वादीनि"इत्यावर्तनेन वा सञ्ज्ञासिद्धिः । गौणे महासञ्ज्ञयैव सञ्ज्ञाभावः । किञ्च "द्वन्द्वे च" इत्यस्य ज्ञापकत्वमेव न युज्यते । द्वन्द्वसमासे हि उद्भूतावयवानुद्भूतावयवभेदरूपः समूहो विशेष्यो घटकपदानि विशेषणानीति बहुव्रीहाविवोपसर्ज्जनत्वं घटकपदानाम् । अत एव कुक्कुटमयूर्यावित्यादावुपसर्ज्जनह्रस्वत्वमाशङ्क्य "द्वन्द्वे प्रतिषेधो वक्तव्यः" इति वचनमत्रस्थापितं भाष्ये, कैयटे च स्पष्टतरमिदम् । एतत् सर्वं दर्शयिष्यते समासे । एवञ्चेदमपि सत्रं "न बहुव्रीहौ"इत्येतत्समानगातिकम् । त-

स्मादयमेव प्रकारश्चतुरचित्ते चमत्कारचातुरीं विधत्ताम् ।

नानुबन्धकृतमिति । इयं च "अनेकाल्"इत्यत्र शिद्ग्रहणेन ज्ञाप्यत इति तत्र सूत्रे उक्तम् । प्रागित्सञ्ज्ञाया इति । दृष्टान्ते तृ इत्यत्रोपदेश एवोपदेशे ऽजित्यनेन ऋकारस्येत्सञ्ज्ञेति भवत्वन्त्यादेशः । इह तु तावत् सर्वादेशस्ततः स्थानिवद्भावेन प्रत्ययत्वम्, ततो "लशकु"इतिप्रत्ययादित्वनिमित्तिकेत्संज्ञा, ततः शित्वं भवतीति क्व दृष्टान्तदार्ष्टान्तिकयोः समतेत्याशयः ।

वस्तुगत्याऽनेकाल्सूत्र इत्सञ्ज्ञायोग्यशकारवत्त्वमेव शित्त्वं स्वीकृतम्, अतो ऽत्र शित्त्वादेव सर्वादेशः । परिभाषया अनेकाल्त्वाभावात् । तत्र हि "अनुबन्धकृतम्"इत्यस्यानुबन्धनयोग्यकृतमित्यर्थः ।

न च डाणलादौ दोषः । 'डा आ,' 'णअल्'इति प्रश्लेषेणानेकाल्त्वात् सर्वादेशसिद्धेः । एतेनेत्संज्ञायोग्यग्रहणे डाणलादीना सर्वादेशताऽनापत्तिरिति मन्दोक्तमपास्तम् । ध्वनितं चेदं "लुटः प्रथमस्य" "अनेकाल्" इतिसूत्रयोर्भाष्ये इत्यधिकं नागेशीये ।

अथ "उभादुदात्तो नित्यम्""उभस्य सर्वनामत्वे कोऽर्थः"इति सूत्रभाष्यप्रयोगयोः प्रतिपित्सितद्वित्वार्थबोधकद्विवचनान्ततयाऽनुपपत्तिं मत्वा स्वरूपाणामनुकरणे"अ

स्मद्युत्तमः" इत्यादाविवानभिव्यक्तपदार्थैकत्वादादेशाभावत्तदर्थपरस्यैव द्विवचनान्ततेति सूचयन्नाह उभशब्द इति । उभश्चासौ शब्दश्चेत्यर्थः । व्याप्यव्यापकयोर्मध्ये व्याप्यस्यैव पूर्वनिपातो भीमभूप इत्यादाविव, तेन शब्दस्य विशेषणत्वात्पूर्वनिपात इति न शङ्कनीयम् । 'पञ्चकं प्रातिपदिकार्थः' इति सिद्धान्तं व्यवस्थापयति द्वित्वेति । संख्याप्रकारकसंख्येयविशेष्यकार्थाभिप्रायक इत्यर्थः । ननु प्रकृत्यैव सकलार्थबोधे विभक्तिरनर्थिका । किं च "द्व्येकयोर्द्विवचनैकवचने" इत्यादिकमसङ्गतमित्याशङ्क्य द्योतकत्वेनैव विभक्तिः सार्थिका, सूत्राणि तु नियमार्थान्येवेत्याह अत एवेति । यतः प्राकृत एवार्थोऽस्मादेव हेतोरित्यर्थः । नित्यमित्यादि । द्विवचनान्त एवेत्यर्थः । (१)अनन्वितार्थकविभक्तेरपेक्षया

---

( १ ) अयं भावः--शब्दप्रयोगस्यार्थबोधनफलकत्वेनोक्तफले शब्दान्तरात्सिद्धे तदर्थं पुनः शब्दाप्रयोगः । एतन्मूलक एवोक्तार्थानामप्रयोग इति प्राचनिप्रवादः । सत्येवम् एकद्व्यादिशब्दैरेकत्वादीनामुक्त्या ततस्तद्बोधकप्रथमाया अप्राप्तौ कर्मत्वादिविशेषाविवक्षया च द्वितीयादिविभक्तीनामप्राप्त्या निर्विभक्तिकशब्दप्रयोगस्याभेदानुकरणातिरिक्तस्थले "न केवला प्रकृतिः प्रयोक्तव्या नापि केवलः प्रत्ययः" इति न्यायेन दूषितत्वात्सर्वथोक्तशब्दानामप्रयोगे प्राप्ते पाणिनिना प्रातिपदिकार्थसूत्रे वचनग्रहणेनोक्तार्थानामिति न्यायानित्यत्वज्ञापनद्वारा एकादिशब्देभ्यो विभक्त्युपत्तिर्बोध्यते ततश्च तेभ्यः स्वार्थसंख्यातिरिक्तसंख्यावाचकानां

अनुवादकविभक्तेर्न्याय्यत्वादिति भावः । एतत्सर्वं कारके दर्शयिष्यते ।

ननु किमर्थः सर्वादिषूभशब्दपाठः । सर्वनामकार्याणां स्मायादीनां द्विवचनेऽभावात् । न च "सर्वनाम्नस्तृतीया च" इतिसूत्रेण षष्ठीतृतीये पाठफलम् । "निमित्तकारणहेतुषु सर्वासां प्रायो दर्शनम्"इति "हेतौ"इतिसूत्रे भाष्योक्तवार्त्तिकेनैव तयोः सिद्धत्वादत आह तस्येहेति । ननु कप्रत्ययेनैव सामान्यतो विहितेन समीहितरूपसिद्धेः कृतमकजर्थपाठेन । न च काकचोः स्वरेऽस्ति विशेषः । प्रत्ययस्वराचित्स्वराभ्यामन्तोदात्तस्यैव सत्त्वात् । न च "सुबन्तात्तद्धितोत्पत्तिः"इतिमते अकचि तत्प्रयुक्तमन्तोदात्तत्वमुभकाभ्यामित्यादौ सुबन्तस्य भवति, कप्रत्यये तु प्रकृतेरित्यस्ति विशेषः । तद्धितविधौ प्रातिपदिकादित्यस्यैवाधिकारात् प्रातिपदिकस्यैव प्रकृतित्वात् । स च जायमानो न्यायात् सुबन्तात्(१) पर इत्यन्यदेतत् । न

---

वचनानां प्रसक्तौ प्रातिपदिकार्थानुवादकवचनसम्भवे तदननुवादकस्योत्पत्तिरयुक्तेति भाष्यकृता अनिष्टनिवारणादिति दिक् ।

(१) 'स्वार्थे सम्पूर्णं पदमर्थान्तरेण संयुज्यते'इति कुत्सितसूत्रोक्तन्यायेनेत्यर्थः । शब्दैः प्रथमं स्वार्थः प्रवृत्तिनिमित्तमुपस्थाप्यते आकृत्यधिकरणेन तास्मिन्नेवाव्यभिचाराल्लाघवाद् शब्दार्थत्वस्य तत्प्रयोगनिमित्तत्वस्य च कल्पनात् । ततस्तस्याश्रयापेक्षत्वाल्लिङ्गसंख्या-

च 'ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकज-न्यत्र तु सुबन्तस्य'इति सुबन्तप्रकृतित्वं तत्र मते विरुद्धम् । वचनप्रामाण्यात् । न चाकचि तन्मध्यपतितन्यायेन तस्योभग्रहणेन ग्रहणे उभकाववयवौ यस्येत्यर्थे उभकशब्दादयचि उभकय इति प्रयोगो भवति, कप्रत्यये तु नेतिविशेषः । ईदृशप्रयोगस्यानभिधानस्य वक्तुं शक्यत्वात् । "कश्चेदानीं काकचोर्विशेषः" इतिसर्वादिसूत्रभाष्यप्रामाण्यात् । तस्मात् कप्रत्ययेनैव सिद्धिरित्यभिप्रेत्य पर्यनुयुङ्क्ते न च केति । उभशब्दस्य द्विवचनपरत्वमकचा न विहन्यते । टेः प्राग्जायमानत्वेन तन्मध्यपतितन्यायेनोभग्रहणे नोभकग्रहणात् । कप्रत्ययेन तु द्विवचनपरत्वं विहन्यते । प्रातिपदिकात्परत्र जायमानत्वेन व्यवधायकत्वादित्याशयेन समाधत्ते द्विवचनेति । अयच्प्रसङ्गादिति ।

---

दीनां व्यक्तिविशेषकत्वाच्च प्रथमम् आश्रयीभूतद्रव्यस्योपस्थितिः । तदनन्तरं व्यक्त्यन्तरसापेक्षसङ्ख्यातः पूर्वमेकव्यक्तिमात्रापेक्षित्वेनान्तरङ्गत्वाल्लिङ्गस्योपस्थितिः । ततो विजातीयक्रियासापेक्षकारकापेक्षया सजातीयव्यक्तिसापेक्षसङ्ख्याया अन्तरङ्गत्वात्पूर्वमुपस्थितिस्ततोऽवश्यंम्भाविक्रियान्वयापेक्षकारकस्योपस्थितिरित्यर्थाभिव्यक्तीनां क्रमिकत्वेन तन्निमित्तकार्यमपि तत्क्रमेणैव प्रवर्तत इति पञ्चविधार्थबोधसमर्थप्रत्ययपर्यन्तोत्पत्त्यनन्तरमर्थान्तरयोग इति सत्यपि प्रातिपदिकस्य प्रकृतित्वेन ग्रहणे उक्तरीत्या सुबुत्पत्त्यनन्तरमेव तद्धितप्रवृत्तिरिति भावः ।

उभशब्दात्त्रतसोः परतः स्वार्थे यथाऽयज्भवति, तथा कप्रत्यये ऽपि स्यादिति भावः ।

तथाहि "उभादुदात्तो नित्यम्" इति सूत्रं विभज्यते—"उभादुदात्तः" इत्येको योगः । "द्वित्रिभ्याम्" इति सूत्राद्द्वेत्यस्य नानुवृत्तिरस्वरितत्वात् । तेनावयववृत्तेः संख्यावाचिन उभशब्दादवयवित्र्यर्थे ऽयच् स्यात्, उभयो मणिः । ततो "नित्यम्" । उभशब्दाद् वृत्तिविषये नित्यमयच् स्यात्स्वार्थे, उभयत उभयत्रेति सिद्धिः ।

नन्वेवमकचि कृतेऽप्ययं दुर्वारो वृत्तिविषये स्वार्थे नित्यमयजिति त्वयैवोक्तत्वात् । मैवम् । योगविभागस्येष्टसिद्ध्यर्थतया "उभौ साभ्यासस्य" इतिनिर्देशेन च यत्र द्विवचनं न श्रूयते तत्रैवायच्, न तु वृत्तिविषये इति व्याख्यानात् । ननु द्विवचने नायजिति किं गज्ञामाज्ञाऽस्तीत्याशङ्क्य वार्त्तिकं प्रमाणयति उभयोऽन्यत्रेति । उभय इति यः स्वार्थिकायजन्तस्सो ऽन्यत्र प्रयुज्यते, न तु द्विवचने, उभशब्दादुत्पन्नं द्विवचनं लुका नापहृतं यत्र ततो ऽन्यत्रायजिति(१) विवक्षितार्थात् । तस्मादुभशब्दपाठो ऽकजर्थः सर्वादिगणे इत्याहुः ।

(१) उत्पन्नं द्विवचनं यत्र श्रूयते इति नोक्तं सत्यभिधाने उभशब्दादाचारक्विपि तदभावप्रसङ्गात् । उक्तरीत्या तु ततो द्विवचनानुत्पत्त्या विशिष्टाभावसत्त्वेन न दोष इति दिक् ।

भाष्ये तूभशब्दपाठः प्रत्याख्यातः। तद्यथा "केऽप्यन्तरेण वचनं द्विवचनपरो भविष्यति, कथम्, स्वार्थिकप्रत्ययाः प्रकृतितो ऽविशिष्टा भवन्ति" इति।

अयं भावः—यथा ऽकच्यज्ञातोपसर्जनेऽप्यवैजात्यार्थात् स्वार्थानुवादकद्विवचनपरत्वमस्ति, तथा कप्रत्ययस्याप्यज्ञाताद्यर्थविशिष्टस्वार्थे विधानेन द्वित्वसंख्याप्रकारकसंख्येयविशेष्यकबोधविषयार्थानुवादकत्वमिति।

ननु "कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययः" इतिन्यायेन कृत्रिमस्यैव द्विवचनस्य वार्त्तिके ग्रहीतुमुचितत्वम्। अन्यथा त्रतसिलादावतिप्रसक्तत्वादिति चेन्न। उभयशब्देनोभशब्दग्रहणवार्त्तिके द्विवचनशब्देनाकृत्रिमस्यापि ग्रहणे दोषाभावात्। अत एवोभयोरुभावुभोभावित्यादौ नायच्। किं च त्रतसिलौ विभक्त्यन्तस्य स्वार्थे विहिताविति तत्तत्कारकशक्तिप्रधानावेवेति न तदुक्तद्विवचनमिति दिक्॥

उभयशब्दस्येति। उभाववयवौ यस्येति "उभादुदात्तो नित्यम्" इति तयपो ऽयच्। "उभयो ऽन्यत्र" इतिवार्त्तिके तयप्समानार्थको ऽप्ययज् गृह्यते, उभयो म-

णिः, उभये देवमनुष्याः" इति भाष्ये उदाहरणात्, स्वार्थिकस्य च ग्रहणं तदुपक्रमेण वार्त्तिकप्रवृत्तेः । एवं चावयवद्वयारब्धमणिद्वयविवक्षयोद्भूतावयवभेदाविवक्षया चोभयशब्दस्य द्विवचनमसाधु । अत एवोभयशब्दस्य द्विवचनानुत्पादादसर्वविभक्तित्वेनाव्ययत्वे प्राप्ते, परिगणनं क्रियते इति "तद्धितश्चासर्व"—इतिसूत्रे कैयट आचष्ट । तदाह—कैयट इति । अनभिधानाद्, भाष्ये उभयो मणिरुभये देवमनुष्या इत्यस्यैव दर्शनाच्चेति भावः । हरदत्त इति । अयं च पक्षो हेयः, उक्तभाष्यविरोधादिति । तत्र तयपो ऽयजादेश इति मतं गृहीत्वाऽऽह—तस्मादिति । उभयशब्दादित्यर्थः । जसीति । द्व्यवयवारब्धसमुदायबहुत्वविवक्षायामित्यर्थः । अन्तरङ्गत्वादिति । "अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलवद्"इति न्यायादित्यर्थः ।

अयं च "ओमाङोश्च"इत्याङ्ग्रहणेन ज्ञाप्यते । तद्धि 'शिव आ इहि'इति स्थिते परमपि सवर्णदीर्घं बाधित्वा 'धातूपसर्गयोः कार्यमन्तरङ्गम्'इत्यन्तरङ्गत्वादाद्गुणे वृद्धिप्राप्तौ सत्या पररूपं यथा स्यादिति क्रियते । यदि दीर्घ एव स्यात्तदा वृद्ध्यप्राप्तौ किं तेनेति "सम्प्रसारणाच्च"इत्यत्र षष्ठे भाष्ये स्पष्टम् ।

ननु सर्वार्थबोधकत्वरूपार्थस्यापेक्षितत्वेन नित्य-संज्ञाया एव बहिरङ्गत्वमिति चेन्न। तस्य "प्रथम-चरम"इत्यस्याप्यपेक्षितत्वात्। अन्यथोपसर्जनादौ प्र-वृत्तिः स्यात्। ननु नोक्तपरिभाषाया इह विषयः, युगपत्प्राप्त्यभावात्। नित्यसञ्ज्ञा प्रातिपदिकसं-ज्ञासमकालमेव प्रवर्त्तते। अत एवोभय इत्यत्र सर्व-नाम्नो विहितत्वेन शीभावसिद्धिः। वैकल्पिके तु जस् निमित्तम्। किं चैवं न्यायेनैव सिद्धे वैकल्पिकीं सञ्ज्ञा माशङ्क्यायच्प्रत्ययान्तरेण साधयता भाष्यकृता सह विरोधापत्तिः।

तद्यथोक्तं स्थानिवत्सूत्रे "तयादेशे उभयप्रतिषेध उभये देवमनुष्याः, तयपो ग्रहणेन ग्रहणाज्जसि वि-भाषा प्राप्नोति, नैष दोषः, अयच् प्रत्ययान्तरम्, यद्येवमुभयीति ङीन्न प्राप्नोति, मा भूदेवम्, कथ-म्, मात्रजिति प्रत्याहारग्रहणम्। मात्रशब्दात्प्रभृति आ अयचश्चकारात्, तर्हि कतीत्यत्रापि प्राप्नोति, अत इति वर्तते, एवमपि तैलमात्रा अत्रापि प्राप्नोति, स-दृशस्याप्यसन्निविष्टस्य न भवति प्रत्याहारग्रहणेन ग्रहणमिति"।

किं च विभाषेति व्यवस्थितविभाषाश्रयणेनापि

सिद्धम् । न च भाष्योक्तातिरिक्तविभाषाया व्यवस्थितत्वम् "इन्द्रे च" इति सूत्रेणाप्रामाणिकमित्युक्तमिति वाच्यम् । तयबादेशायच्प्रत्ययान्तरयोः फलाभेदायास्याः व्यवस्थितत्वस्य भगवता ध्वननादिति चेत् । सत्यम् । नवीनानुरोधेन तथोक्तेरित्याहुः ।

सुप्तिङन्तामिति ज्ञापकादिति । तत्सूत्रे सुप्तिङितीयत्युच्यमाने प्रातिपदिकादिना विशेषणत्वेन "येन विधिः" इत्यनेनैव सिद्धेर्व्यर्थादन्तग्रहणाज् ज्ञापकादित्यर्थः । तेन "प्रयोजनं सर्वनामाव्ययसञ्ज्ञायाम्" इति "येन विधिः" इत्यत्र भाष्योक्तवार्तिकेन डतरान्तं गृह्यत इति भावः । न च परमकतरशब्दे कथमिति चेत्, "प्रत्ययग्रहणे तदन्तग्रहणम्" इतिपारिभाषणात् । डतरान्ते तु व्यपदेशिवद्भावेन बोध्यम्(१) ।

---

(१) अयं भावः—सुप्तिङन्तमित्यन्तग्रहणेन प्रत्ययाविशेषणकतदादिविशेष्यकतदन्तविधौ निषिद्धे गणे प्रत्ययमात्रपाठात्तस्यैव सञ्ज्ञाप्रसक्त्या कतरादीनां सर्वनामत्वाप्राप्तौ प्रयोजनमितिवार्त्तिकात्तदन्तविधिनोक्तदोषवारणेऽपि परमकतरेत्यत्रेष्टस्य सर्वनामत्वस्यासिद्ध्यापत्तौ प्रत्ययग्रहणपरिभाषया तदादिविशेषकतदन्तविध्युत्तरं प्रयोजनमितिवार्तिकेन शब्दस्वरूपमुक्ततदादिरूपेण विशिष्य पुनस्तदन्तविधौ डतरान्तान्तामिति लाभेनोक्तदोषवारणम् । सञ्ज्ञाविधाविति निषेधस्तु मूले एव वारित इति उक्तरीत्या तदन्तविधिद्वये केवलडतरप्रत्ययान्ततदादेः सञ्ज्ञाऽप्राप्तिशङ्कायां व्यपदेशिवद्भाव उक्त इति दिक् ।

तत्रैव मानान्तरमाह **केवलयोरिति** । प्रयोजनाभावात्, फलाभावादित्यर्थः । प्रकृतिप्रत्यययोरन्यतरप्रयोगाभावादिति भावः । 'न केवला प्रकृतिः प्रयोक्तव्या न च केवलः प्रत्ययः' इतिसमयात् ।

अयं च "परश्च" इतिसूत्रेण ज्ञाप्यते । तस्य त्रैयर्थ्यमुक्तं तृतीये प्रकृते भाष्ये—"किमर्थमिदमुच्यते परो यथा स्यात्पूर्वो मा भूदिति । बहुचि पुरस्ताद् ग्रहणेन बहुजेन पूर्वो नान्य इति ज्ञायते, मध्ये तर्हि मा भूदिति, मध्ये ऽपि "अव्ययसर्वनाम्नाम्" इति प्राक्टेर्ग्रहणेन न भविष्यति । य इदानीमतोऽन्यः प्रत्ययः शेषः सोऽन्तरेण वचनं पर एव भविष्यति इति नार्थः परवचनेन" इति ।

प्रत्ययविधौ सर्वविभक्तेः पञ्चमीकल्पनेन परः पूर्वो वेत्यनियमेनाध्याहारे प्रसक्ते पर एवेति नियमार्थमिदं सूत्रम्, तच्च "तस्मादित्युत्तरस्य" इत्यनेन सिद्धमिति व्यर्थं सज् ज्ञापयतीति कैयटे विस्पष्टम् ।

प्रकृतित्वं च प्रत्ययविधावुद्देश्यतावच्छेदकाक्रान्तिमत्त्वम् । ननु लिट् इयानित्यादौ दोष इति चेन्न । शास्त्राबोधितान्यतरप्रयोगविषये एवास्य न्यायस्य प्रवृत्तेरिति दिक् ।

एतन्न्यायमूलकमेव "अपदं न प्रयुञ्जीत" इति पठ्यते। अपरिनिष्ठितमिति तदर्थः। परिनिष्ठतत्वं चाप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वमिति दिक्(१)।

ननु बहुव्रीहावन्यपदार्थस्य प्रधानत्वेन घटकपदार्थाना स्वार्थविशिष्टार्थान्तरबोधकत्वरूपोपसर्जनप्रतिषेधेनैव संज्ञाव्युदासस्य सिद्धत्वाद्व्यर्थं सूत्रमित्याशङ्क्य बहुव्रीहाविति विषयसप्तमीत्वेन समासात् पूर्वं संज्ञानिषेधार्थं तत् सार्थकमित्याशयेनाह त्वकमित्यादि। अज्ञाते कुत्सिते वा "अव्ययसर्वनाम्नाम्" इत्यकच्। प्रक्रियेति । अलौकिकविग्रहवाक्य इत्यर्थः। तत्त्वं च लोके प्रयोगानर्हत्वम्, तच्च युष्मद् सु पितृ सु इत्याद्याकारम्। न चालौकिके समासप्रवृत्त्यैकार्थीभावस्यापि तत्रैव कल्पनादुपसर्जनत्वादेव निषेधसिद्धौ सूत्रस्य वैयर्थ्यमेवेति वाच्यम्। तत्रैकार्थीभावस्यारोपे ऽप्युक्तरूपोपसर्ज्जनत्वाभावेनातिभवकानित्यत्वेव प्राप्तस्याकचो ऽभावार्थं सञ्ज्ञानिषेध इत्यत्र सूत्रतात्पर्य्यात्।

---

(१) हरिर्गच्छतीत्यादौ "तिङ्ङतिङः" इति शास्त्रेण निघाते कृतेऽपि अतिङन्तात्परतिङन्तत्वरूपोद्देश्यतावच्छेदकस्याव्याघातादपरिनिष्ठितत्वं मा भूदिति लक्षणेऽप्रवृत्तेत्युक्तम्। वैकल्पिकस्थलेऽतिव्याप्तिवारणाय नित्येति बोध्यम्।

**लौकिकेति** । तत्त्वं च लोके प्रयोगार्हत्वम् । तदाकारस्तूक्त एव त्वकं पिता यस्य इत्यादिः । ननु तत्रापि निषेधोऽस्तु । मैवम् । लौकिके समासस्य चिकीर्षितत्वाभावात् । नन्वास्तामकच् को दोषस्तत्राह **श्रूयेतेति** । न चाकृतव्यूहपरिभाषयाऽकचः समासे निवृत्तिः, तस्या अनित्यत्वात् । तत्र च ज्ञापकमिदं सूत्रम् । लौकिकवाक्यसमासयोर्दृष्टान्तावाह **अतिक्रान्त इत्यादिना** । एवमकजभावार्थं सूत्रमिति वृत्तिकारमतम् । सिद्धान्तमाह **भाष्यकारस्त्विति** । "अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गम्मुक्तसंशयौ"इति भाष्योक्तिः । (१)द्वकिपुत्रस्त्वकत्पितृक इत्याद्यनकारान्तेष्वकच्, विश्वप्रिय इत्याद्यदन्तेषु "स्वाङ्गशिटामदन्तानाम्"इत्याद्युदात्तः स्वर इति तदर्थः ।

ननु स्मृतिद्वयबलाद्विकल्पः स्यात्, प्रत्याख्यानं कथमत आह **यथोत्तरमिति** । तथा चेदानीं पतञ्जल्युक्तव्यवस्थैव ज्यायसीति भावः । ननु अविशेषात् सर्वनामसञ्ज्ञाया विधानात् सर्वत्र स्यादत आह **न सर्वादय इति** । सर्वनामत्वाभावेन सर्वादिपाठाभाव इत्यर्थः ।

अयं भावः—सर्वनामेतिमहासंज्ञाकरणमन्वर्थस-

---

(१) द्वौ पुत्रौ यस्येति विग्रहः । २ शिट् सर्वनाम ।

ञ्ज्ञाविज्ञानार्थम्—सर्वेषां नामानीति । तद्बलात् सर्वाभिधानसामर्थ्यविशिष्टानामेव संज्ञित्वमनुमीयते । एवं च तथाभूतानां गणे ऽनुकरणावश्यकतया प्रकारान्तरीभूतानामनुकरणे प्रमाणाभावेनैव विशेषे ऽवस्थितानां संज्ञानामुपसर्जनानां च सर्वादिपाठबहिर्भावः । एकद्रव्योपनिवेशिनी हि संज्ञा । इतरविशेषणत्वेनार्थोपस्थापकत्वं चोपसर्जनत्वमित्युभयभूतानामन्वर्थसञ्ज्ञाननुरूपत्वात् सर्वनामत्वं नास्तीति ।

तदाह—महासंज्ञेति । अन्यथा टिघुभादिवल्लघ्वक्षरसंज्ञैव क्रियेत । प्रातिपदिकसंज्ञा तु आथर्वणश्रुत्यनुरोधादिति दिक् । एवं च प्रवृत्तिनिमित्तेन प्रयुक्ता इतरं प्रत्यनुपसर्जनीभूता एवेह संज्ञिनः । ननु कृत्स्नसकलादिशब्दानामतिप्रसङ्गोऽत आह गण इति । पञ्चत्रिंशदात्मक इत्यर्थः । सन्निवेशादिति । तदनुमानादित्यर्थः । अन्वर्थसंज्ञायाः फलमाह अत इत्यादि । संज्ञाप्रयुक्तं स्मायादिकम्, अन्तर्गणकार्यं तु "अद्ड्डतरादिभ्यः" "त्यदादीनामः" "तदोः सस्सौ"-इत्यादिकमित्यर्थः । यच्च स्वरूपाश्रयं कार्यं न तु गणपाठं संज्ञां वाऽपेक्षते तद्भवत्येव प्रकारान्तरजुषाम् । यथा "युष्मदस्मद्भ्यां ङसोऽश्"इत्यादिकम् । "युष्मद्युपपदे

समानाधिकरणे'' इत्यादौ तु न त्वमादिप्रसङ्गः। 'अभिव्यक्तपदार्था ये स्वतन्त्राः'इतिन्यायेन लोकप्रसिद्धार्थपरतायामेव त्वमादिप्रवृत्तेरिति दिक्।

ननु वार्त्तिकरीत्या एकसंज्ञाधिकारे सर्वनामसंज्ञानन्तरम् "एकद्रव्योपनिवेशनी संज्ञा" इति संज्ञासंज्ञया सर्वनामसंज्ञा बाधिष्यते। किञ्च "पूर्वापर''इतिगणसूत्रे "असंज्ञायाम्''इति योगं विभज्य पूर्वोत्तरयोः शेषो व्याख्येयः। पूर्वादयो वक्ष्यमाणाश्चादयश्चासञ्ज्ञायामिति। अपि च संज्ञाव्यावृत्तिर्गौणमुख्यन्यायेनापि सेत्स्यति तथोपसर्जनव्यावृत्तिरप्यन्यथैव, तद्यथा "अनुपसर्जनाद्"इति सूत्रे ऽनुपसर्जनेति लुप्तषष्ठीकं पदम् "अ आद्" इति च्छेदः। अश्च अच्च तयोः समाहार आत्। अकारात् परौ अ अदित्यादेशौ यत्र क्रियेते तत्रानुपसर्जनस्य ग्रहणमिति तदर्थः। तेनादृड् त्यदाद्यत्वं च गौणे न भवतीति सर्वं भाष्ये स्पष्टम्। तथा च महासंज्ञा विफलैवेति चेन्न। अतिसर्वायेत्यादिसाधनफलकत्वात्।

ननु "तदोः सः सौ''इति सूत्रे 'अदस एव दस्य नान्यस्य'इति नियमे "ह्रीयतेरप्रत्यये ह्र इति प्राप्नोति स्व इति चेष्यते''इति अत्वसत्वयोर्गौणे ऽवारणस्य सिद्धान्ति-

तत्त्वादिति चेन्न । तस्यैकदेशयुक्तित्वेनादोषात् । अन्यथा प्रकृतसूत्रस्थानेकभाष्यविरोधः स्यादिति सङ्क्षेपः ।

ननु जराशब्दस्यादेशविधानान्निर्जरशब्दस्य कथमत आह पदाङ्गेति । पदमङ्गं च विशेष्यं विशेषणेन तदन्तविधेर्लाभादिति भावः । इदं च "येन विधिः" इतिसूत्रस्य प्रपञ्चभूतमेव न त्वपूर्वं वचनम् । सोपपदस्यादेशवारणायाह निर्दिश्यमानस्येति । "षष्ठी स्थानेयोगा" इतिसूत्रमावर्तते । तत्र द्वितीयस्यायमर्थः- षष्ठ्यन्तमुच्चार्यमाणमेव स्थानेन स्थाननिरूपितसम्बन्धेन युज्यते न तु प्रतीयमानामिति । तेनेयं परिभाषा निष्पन्ना ।

न च "अस्य च्वौ" इत्यत्राकारस्यैव निर्दिश्यमानत्वान्मालीभवतीत्यादावादेशो न स्यादिति वाच्यम् । तत्र जातिपक्षाश्रयणात् । "न भूसुधियोः" इतिनिषेधसामर्थ्येन(१) ग्रहणकशास्त्रगृहीताना निर्दिश्यमानका-

(१) अयं भावः—सूत्रोपात्तषष्ठीप्रकृतिजन्यप्राथमिकोपस्थितिविषयस्यैव निर्दिश्यमानत्वे "एरनेकाचः" इत्यत्र "ओः सुपी" त्यत्र चैरोःशब्दाभ्यां ह्रस्वस्यैव तादृशस्य निर्दिश्यमानत्वबोधनाद्दीर्घेकारोकारयोर्निर्दिश्यमानत्वाभावाद्यण्प्राप्ते उक्तनिषेधो व्यर्थः सन्नुक्तं ज्ञापयतीति । यदि तु स निषेधो भवति तत्कुलं भु शोभनं भु यस्मिन्ग्रामे इति विग्रहे उक्तनिषेधप्राप्तये आवश्यक इति विभाव्यते तदा वर्षाभ्वश्चेति अत्र ज्ञापकं बोध्यम् । वस्तुतस्तु प्रति-

र्यित्वबोधाच्च ।

नन्वियङुवङोर्ङित्त्वं व्यर्थम्, निर्दिश्यमानत्वेनैवा-न्त्यादेशस्य ङित्त्वं विनाऽप्युपपत्तेरिति चेन्न । धातोरपि निर्दिष्टत्वादन्त्यादेशत्वार्थं तस्यावश्यकत्वात् । रीङ्रिङोर्ङित्त्वं तु स्पष्टार्थमेवेत्यधिकं नागेशीये ।

नन्वयं जरशब्दो न जराशब्दोऽत आह एकदेशेति । "(१)एकदेशविकृतमनन्यवद्" इति न्यायशरीरम् । अनन्यवदित्यस्यान्यवन्नेत्यर्थः । तत्रान्यसादृश्यनिषेधेऽन्यत्वाभावः सुतराम् । अत एव तादृशादर्थबोधः । अन्यथा शक्ततावच्छेदकानुपूर्व्यज्ञानात्ततो बोध एव न स्यादिति शब्दकौस्तुभगुणे विवेचितमस्माभिः ।

इदं च "प्राग्दीव्यतः" इत्यत्र चतुर्थे भाष्ये स्पष्टम् । तद्यथा—"दीव्यत इति कोऽयं शब्दः, दीव्यतिशब्दैकदेशदीव्यच्छब्दानुकरणमिदम्, किमर्थं विकृतनिर्देशः, एतदेव ज्ञापयत्याचार्यो भवत्येषा परिभाषा एकदेशविकृतमनन्यवद्" इति ।

---

कारकेतरपूर्वपदस्य यणोऽनेषणात् तन्निषेधस्याचारितार्थ्याज्ज्ञापकता सुस्थेति बोध्यम् ।

(१) एकदेशविकृतत्वं च विकारविशिष्टत्वरूपम् । वैशिष्ट्यं स्वघटितत्वम् स्वप्रतियोग्यघटितत्वम्, स्वप्रतियोगिसमभिव्याहृतयावद्वर्णघटितत्वम्, स्वप्रतियोग्यसमभिव्याहृतयावद्वर्णाघटितत्वमिति सम्बन्धचतुष्टयेन लक्षणसमन्वयश्चोह्य इति दिक् ।

यत्र त्वर्द्धं तदधिकं वा विकृतम्, तत्र जातिव्यञ्जकभूयोऽवयवदर्शनाभावे तत्त्वाप्रतीतौ कार्यसिद्ध्यर्थं विकृतानल्परूपावयवप्रतीत्यर्थं च स्थानिवत्सूत्रमिति दिक् ।

परत्वाज्जरसिति । "जरायाः" इति सूत्रं निर्जरसावित्यादौ सावकाशम् । "टाङसि"इत्यादिकं तु रामेणेत्यादौ सावकाशम् । इनादिविषये विप्रतिषेधशास्त्रप्राबल्याज्जरसादेश एव । वृत्तिकृतेति । इति केचिदित्युक्तमित्यन्वयः । किमुक्तं तदाह पूर्वविप्रतिषेधेनेत्यादि । विप्रतिषेधसूत्रे परशब्दः क्वचिदिष्टार्थवाची । इष्टश्चेनाद्यादेश एव, स च नादादेशे विधातव्ये इकारदीर्घाकारौ क्वचिदपि स्वरूपश्रवणफलकौ विदधतः सूत्रकृतः समाजग्रस्त इति तदभिमानः । तर्हि सन्निपातपरिभाषया कथं जरसित्यत आह अनित्यत्वमिति । अत्रापीकारदीर्घाकारकरणमेव ज्ञापकमित्यभिमानः । तदनुसारिभिरिति । ये तु निंजरसिनेत्यादि व्याचक्षते, तेषां मतानुयायिभिरित्यर्थः । षष्ठ्येकवचन इति । एकसूत्रोपात्तत्वात् स्यादेशविषयेऽपि पूर्वविप्रतिषेधाश्रयणामिति तद्भावः । एतच्चभाष्येति । इनातेरिकारदीर्घोच्चारणप्रत्याख्यानपरभाष्यत्यर्थः ।

जराया इति सूत्रे सप्तमे स्पष्टमेतत्सङ्गृहीतम् । "निर्जरैरिति भावितव्यं सन्निपातपरिभाषया" इति भाष्येऽपीति चार्थः ॥

इत्थं हि प्रत्याख्यातम्—"टाङसि" इतिसूत्रे नादेशोऽदादेशश्चास्तु । "आङि चापः" इति सूत्रे 'आङि च' इति योगं विभज्य "बहुवचने झलि" इत्यत एत्वमनुवर्त्याङि च परे एत्वं स्यादिति विभक्तेन सूत्रार्थेन समीहितरूपसिद्धेः । न च नादेशे कृते हलिलोपप्रवृत्त्याऽनेनेत्येतन्न सिध्यतीति वाच्यम् । "अनाप्यकः" इत्यत्र अनापीति च्छित्वा नपुंसकात् सोर्लुकि नलोपः, नापोः समाहारे सप्तम्येकवचनम् । नकारे परतो विशिष्यानादेशविधानसामर्थ्येन हलिलोपाप्रवृत्तेः । न च ङसेरदादेशे पररूपापत्तिः । अकारोच्चारणसामर्थ्याद्दीर्घसम्भवादिति ।

अन्ये तु अयं भाष्यविरोधो निर्जरसिनेत्यादिरूपांशे न तु पूर्वविप्रतिषेधांशे इति सूत्रे भाष्ये जरसादेशविभक्त्यादेशानामेव पूर्वविप्रतिषेधेनेष्टत्वात् । तद्यथा—'अजरांसीत्यत्र नुम्जरसोः प्राप्तयोर्विप्रतिषेधेन जरस्' इति । विभक्त्यादेशात् पूर्वं जरसः प्रवृत्तौ तु शिभावात् पूर्वं जरसि कृते तदा सर्वनामस्थानत्वाभावा-

न्नुमा विप्रतिषेधविचारासङ्गतिः ।

किञ्च "टाङसि" इतिसूत्रे कैयटः—भाष्यकारः सन्निपातपरिभाषया जरसादेशमनभ्युपयन्नतिजरेणातिजरादिति भाव्यं न तु अतिजरसिनातिजरसादिति गौरवमुद्भावितवानिति । विभक्त्यादेशात् पूर्वं जरसादेशे तु इनाद्यप्राप्त्या 'सन्निपातपरिभाषया जरसादेशमनभ्युपयन्'इत्यस्यासङ्गतिरिति दिक् ।

तस्माद्भाष्ये इष्टेन पूर्वविप्रतिषेधेन विभक्त्यादेशे कृते ततः सन्निपातपरिभाषया अत्र भाष्ये सञ्चारितया न जरसित्याहुः ।

तदपरे न क्षमन्ते । विभक्तिसंज्ञाद्यनपेक्षत्वेनान्तरङ्गत्वाज्जरसादेशं बाधित्वा शिभावे तस्य विप्रतिषेधविचारसङ्गतिः । अत एवातिजरसं पश्येत्यत्र सन्निपातपरिभाषया लुग्वारणं भाष्ये सङ्गच्छते । व्याख्यातं च कैयटेन—परत्वान्नित्यत्वाच्चामभावात्प्राग्जरसि कृते ऽनदन्तत्वादमो ऽप्राप्त्या लुकः प्राप्तिरिति ।

इदं तु न सत्, संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणादिति दर्शयिष्यते स्त्रीप्रत्यये । शिभावस्यापि क्लीबत्वाद्याश्रयणाच्च ।

नन्वेकस्यैकैव संज्ञेति सूत्रबोधिते विशेषानव-

गतिस्तदाह या परेति । द्वयोः सावकाशयोः परैव, एकस्या निरवकाशत्वे तु निरवकाशैवेत्यर्थः ।

ननु सञ्ज्ञयैव संज्ञा बाध्यतां परत्वादिना कृतं सूत्रेणेति चेन्न । अधिकारातिरिक्तस्थले तव्यादौ कृत्-कृत्यप्रत्ययसंज्ञादीनां समावेशदर्शनेन विरोधाभावाद्वि-प्रतिषेधसूत्राप्रवृत्तेः ।

नन्वेवं विप्रतिषेधसूत्राप्रवृत्तौ कथमत्र प-रत्वादिवर्णनमिति चेन्मैवम् । परत्वादेरन्यत्र प्रबलत्वेन दृष्टतयाऽत्रापि तादृशरीत्यैव व्यवस्थोप-पत्तेः । न च राजन्य इत्यादौ "सुप्तिङन्तम्"इत्यनेन पदत्वं स्यादेव, परया भसंज्ञया तु न बाध्येत, पदसं-ज्ञाया अन्तरङ्गत्वादिति शङ्क्यम् । समानावधिकाया अन्तरङ्गाया अप्यनया बाध्यसामान्यचिन्तया ऽपवा-दत्वेनैव बाधात् । क्वचित् समानावधिकयोरपि सं-ज्ञयोः समावेशस्तु गमकबलादेवेति दिक् ।

तेनेति । अनवकाशत्वेनेत्यर्थः । पदसंज्ञायाः स-र्वनामस्थानवर्जं हलजादिर्विषयः । भसंज्ञायास्त्व-जादिरित्येतद्विषयेऽपि पदसंज्ञाप्रवृत्तौ भसंज्ञा निर-वकाशैवेत्यभिप्रेत्याह शसादावचीति । पूर्वस्मादिति । "अचः परस्मिन्"इत्यत्र पूर्वस्माद्विधिरिति पञ्चमीस-

मासस्याप्याश्रयणादयमर्थो लभ्यत इति भावः(१)। इति पक्षे त्विति । तुनाऽस्य पक्षस्यानित्यताऽवबोध्यते इत्यन्यत्र व्यक्तम् । अड्व्यवाय इत्येवेति । "अट्-कुप्वाङ्"इत्यनेनैवेत्यर्थः । एवकारः साधकान्तराभावं व्यनक्ति । पूर्वत्रासिद्ध इति ।

इयं च परिभाषा न्यायसिद्धार्थानुवादिका । त्रिपाद्या असिद्धत्वेन तत्रत्ये कर्तव्ये "अचः परस्मिन्" इत्यातिदेशस्याप्रवृत्तेः । एतत्फलं त्वतिदेशान्तराणां वत्यर्थघटितानां त्रिपाद्यामपि प्रवृत्तेर्बोधनम् । तेनामी क्षीरपेणेत्यादौ मीत्वणत्वे सिध्यतः । तत्रेकारस्याऽदःसम्बन्धित्वम्, पे इत्यस्यैकाजुत्तरपदत्वं चान्तवद्भावाधीनम्(२)। तस्य दोष इति ।

---

(१) नच पञ्चमीसमासस्य फलाभावेन किमर्थं तत्स्वीकार इति वाच्यम् । अपीपचन्निति सिद्धये तस्यावश्यकत्वात् । अन्यथा जुस् स्यात् । तत्स्वीकारे तु पररूपस्य स्थानिवत्त्वेन तद्व्यवधानान्न जुस् । नच तत्स्वीकारे हे गौरित्यत्र वृद्धेः स्थानिवत्त्वेनैङ्ह्रस्वादिति सुलोपापत्तिरिति वाच्यम । प्रविगणय्येति भाष्योदाहरणेन पञ्चमीसमासपक्षस्यानित्यत्वबोधनम् । अन्यथाऽल्लोपस्य स्थानित्वाद्"ल्यपि लघु"इति णेरयादेशो न स्यादिति ।

(२) नच अन्तवद्भावस्य स्थानिवत्त्वेन गतार्थत्वम् इति वाच्यम् । तेन श्रौतस्थानिवृत्तिधर्मस्यातिदेशेऽपि अदःसम्बन्धित्वस्याशास्त्रीयस्यानतिदेशात् । पे इत्यत्रैकाजुत्तरपदत्वस्य तद्धर्मत्वाभावाच्च । अनल्विधाविति तदतिदेशनिषेधाच्च । अनुमानिकस्थान्यादेशभावेन तु न निर्वाहः । तेन हि अव्याप्त्यतिव्या-

इदं वाचनिकं, न तु ज्ञापकसिद्धम्(१)। "न मु ने" इत्यत्र नेतियोगविभागस्य भाष्येऽदर्शनेन तस्य ज्ञापकत्वाभावादित्याहुः।

तस्य "पूर्वत्रासिद्धे" इत्यस्य, दोषो बाधः, तथा

---

प्तिवारणाय श्रौतस्थान्यघटितः श्रौतादेशघटितः श्रौतस्थानिसमभिव्याहृतयावद्वर्णघटितः श्रौतस्थान्यसमभिव्याहृतयावद्वर्णाघटितो यस्तस्यैवादेशतास्वीकारेण पूर्वापरस्थानिघटितवृत्तिधर्मस्यातिदेशेऽपि अदःसम्बन्धित्वादेस्तद्धर्मत्वाभावेन अमी क्षीरपेणेत्यस्यासिद्धिप्रसङ्गात्। किञ्चान्यतरस्थानिघटितवृत्तिधर्मस्यातिदेशे स्वाश्वेत्यत्र स्वशब्दत्वस्यातिदेशात्तत ईरिन् शब्दे परे "स्वादीरेरिणोः" इति वृद्ध्यापत्तिः स्यात्।

वस्तुतस्तु आनुमानिकस्थान्यादेशभावेन गतार्थमिदं सूत्रम्। तत्र कल्प्यमान आदेशपूर्वस्थानिघटितसमुदाये श्रौतादेशान्तसमुदाय आदेशः, परस्थानिघटितसमुदाये श्रौतादेशादिसमुदाय आदेशः पूर्वपरघटितसमुदाये विशिष्टः समुदाय आदेशः कल्प्यते। अतिप्रसङ्गस्तु उक्तसम्बन्धचतुष्टयवैशिष्ट्येन वारणीयः। तथाच अदेइत्यस्मिन् समुदाये श्रौतपूर्वस्थान्यदःसम्बन्ध्यकारघटितादःशब्दवृत्त्यदःशब्दत्वस्य श्रौतादेशौकारान्तादेसमुदाये आरोपेणैकारस्यादःसम्बन्धित्वमार्थसमाजग्रस्तमिति न तदानयने व्यापरान्तरापेक्षा। अविद्यमानधर्मस्यैवातिदेशेनापेक्षणीयत्वात् क्षीरपेणेत्यत्र पेइत्यस्मिन् एकाऽत्वस्य स्वतःसिद्धत्वाद्धत्वेनोत्तरपदत्वमात्रस्यानयनेऽनल्विधाविति निषेधाप्रवृत्तेः। स्वाश्वइत्यत्र तु न दोषः स्ववृत्तिधर्मस्य स्वाइति समुदाये आरोपेऽपि श्वइत्यनेनेरिन्नित्यस्य व्यवधानेन वृद्धिप्रवृत्त्यभावात्—। इतिदिक्।

(१) नमुने इत्यत्र नेति योगं विभज्य पूर्वत्रासिद्धत्वं क्वचिन्न भवति इत्यर्थकल्पनयेष्टानुरोधेन "तस्यदोष"इति वार्तिकोक्तविषये तस्य प्रवृत्तिस्वीकारेण तस्य वार्तिकस्य न्यायसिद्धतेतिभावः।

च स्थलत्रये स्थानिवद्भावो वक्तव्य इति तदर्थः ।

ननु लाघवाच्छसादाविति वक्तव्ये यत्नाधिक्यं किमर्थमत आह प्रकारार्थमिति । प्रकारः कः, सादृश्यम्, तच्च साधारणधर्मसम्बन्धप्रयोज्यम् । साधारणधर्मवत्त्वं चोपमानोपमेयोभयवृत्तित्वम् । उपमानत्वं साधारणधर्मवत्त्वेनेषदितरपरिच्छेदकत्वम् । उपमेयत्वमपि साधारणधर्मवत्त्वेनेषदितरपरिच्छेद्यत्वम् । तथा च स्वादौ शसादौ चोभयत्रापि सुप्त्वस्य साधारणधर्मस्य वृत्तिमत्त्वात् सुप्त्वेनैव सादृश्यम्, तद् ध्वनयन्नाह औङः श्यामिति । तत्रैव मानमाह भाष्य इति ।

तत्र हि—"शस्प्रभृतिष्वित्युच्यते, अशस्प्रभृतिष्वपि दृश्यते ककुद्दोषणी याचते महादेव इत्युक्तम् । अस्य भाष्यस्यापि सुप्त्वेनैव सादृश्यमित्यत्रैव स्वरसः । प्रायो नञ्घटिते "नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः" इति न्यायेन सदृशार्थावगमात् ।

तदुक्तं भाष्ये—"अब्राह्मणमानयेत्युक्ते ब्राह्मणसदृशमानयति, न हि कश्चन लोष्टमानीय कृती भवति" इति । अन्यथाऽन्यत्रापि दृश्यत इत्युच्येतेति सर्वं संवादचिन्तामणौ व्यक्तम् । एवं च मांस्पचन्याः, पदङ्घ्रिः, हन्मानसमित्येतेषु "न लुमताऽङ्गस्य" इत्यस्यानि-

त्यत्वेन स्वादिपरत्वं बोध्यम् ।

एतेन शब्दत्वेन प्रत्ययत्वेन वा सादृश्यमिति केषाञ्चिदुक्तिरपास्ता। "वा शोकष्यञ्रोगेषु" इत्यस्य वैयर्थ्यापत्तेः । अत्र सुप्रभृतिष्विति वाच्ये शस्प्रभृतिष्वित्युक्त्या ऽन्यत्र क्वचिदेव प्रवृत्तिर्बोध्यते, अत एव पद्दन्निशां ग्रहणं चरितार्थम् । तेषां द्वित्रिधानामपि कोशसिद्धतया तत्र "तृज्वत्क्रोष्टुः" इत्यत्रेव व्यवस्थार्थताया एव वक्तव्यतया सुब्मात्रे प्रवृत्तौ तस्या असम्भवेन तद्वैयर्थ्यमेव स्यादिति दिक् ।

काशिकायाः प्रामादिकत्वमुक्तं ध्वनयन् विवृणोति आस्ये भवमिति । शरीरावयवाद्यत् । तथा च श्रुतिः—"आस्नो वृकस्य वर्तिकाम्" इत्यादिः। तत्र वृकस्य आस्नो मुखादित्येव निरुक्तार्थात् । अत एवेति । ककुद्दोषणी इति प्रयोगादेवेत्यर्थः ।

यद्यपि दोश्च दोषंश्चेति समाहारद्वन्द्वे एकशेषे(१)

---

(१) अयं भावः—शस्प्रभृतिग्रहणे सुप्त्वेन शब्दत्वेन वा सादृश्यमाश्रित्य स्वादिष्वपि पदादीनां प्रयोगे सिद्धे दोःशब्दं दोषन्शब्दं चाश्रित्य समाहारद्वन्द्वे "विरूपाणामपि समानार्थानाम्" इति एकशेषे शिष्टेन नपुंसकार्थप्रतिपादकेन दोषन्शब्देन ककुच्छब्दस्य पुनर्द्वन्द्वे ककुद्दोषणी इति भाष्यप्रयोगोपपत्तेर्न तेन दोष्शब्दस्य नपुंसकत्वमपि कल्पयितव्यं तथाऽपि अनुपदं वक्ष्यमाणानुपपत्तिपरिहाराय पृथक्पदत्वकल्पनेन उक्तभाष्यस्यावश्यं

च कृते ककुच्छब्देन द्वन्द्वे भाष्यमन्यथोपपन्नम्, दोष्‌श-ब्दस्य नपुंसकत्वं च न प्राप्नोति । तथापि ककुच्छब्दस्य पृथक्पदत्वं युक्तम् । अन्यथा बाह्वोर्द्वित्वे लब्धेऽपि ककुदित्यस्यैकत्वं न लभ्येतेत्याशयः । तेन तमुपाद्रवदुद्यम्य दक्षिणं दोर्निशाचर इति(१) रघुकाव्यमनुगृहीतं भवति । तत्र दक्षिणं दोर्बाहुमुद्यम्य तं शत्रुघ्नं लवण उपाद्रवदिति(२) सम्बन्धः ।

साहचर्यादिति । पुँल्लिङ्गादिनिर्णायकं साहचर्यादिकमपि स्वसङ्केतेनोक्तममरसिंहेन "प्रायशो रूपभेदेन" इत्यादिनेति भावः । दोषमिति । दोषं तस्य तथाविधस्य भजतश्चापस्य गृह्णन् गुणमिति नैषधः । दोषं हस्तं दूषणं च भजतश्चापस्येति सम्बन्धः ।

ननु "दीर्घाच्छसि" इति सूत्र्यतां "प्रथमयोः पूर्व-

नपुंसकत्वज्ञापकता इति । वस्तुतस्तु उक्तभाष्यस्यान्यथा ऽनुपपत्तेरेव दोष्‌शब्दस्य नपुंसकत्वं कल्प्यम् । नचोपर्युक्तरीत्योपपत्तिः । समासद्वयकल्पनप्रयुक्तशक्तिद्वयकल्पनगौरवापत्तेः । किञ्च कृतसमाहारद्वन्द्वस्य दोषन्‌शब्दस्य ककुच्छब्देन समासे ककुच्छब्दार्थगतैकत्वं विना द्विवचनानुपपत्त्यैव ककुच्छब्दार्थगतैकत्वे लब्धे तदलाभदोषकथनस्यायुक्ततापत्तेः । समाहारे घटकतया बाहूनामनेकत्वस्यापि सम्भवेन द्वित्वलाभसिद्ध्युक्तेर्वैपरीत्यापत्तेः । उत्तरपदलोपिसमासाश्रणे तु सुतरां नपुंसकत्वमाश्रयणीयमिति दिक् ।

(१) रघुकाव्ये पञ्चदशसर्गे श्लोकः ३ ।

(२) तं लवमुपद्रवदितिक्वचित्पुस्तके ।

सवर्णः" इत्यनेन सिद्धेर्दीर्घाच्छस्येव पूर्वसवर्णदीर्घ इत्यर्थके नियमे "नादिचि" इत्यत इचीत्यपकर्षणार्थश्चकारोऽनुवर्त्तितनकारश्च नाश्रयणीयः। किं च शस्यपि "आतो धातोः"इत्यस्यैवेह प्रवृत्तेरत्रानुपयुक्तं चेदं सूत्रमिति ध्वनयन्नाह यद्यपीत्यादि। उक्तं नियमफलं दर्शयति गौर्य्य इति। इत्याद्यर्थमिति। नियमत्वेन पूर्वसवर्णदीर्घव्यावृत्त्यर्थमित्यर्थः। न्याय्यत्वादिति। विश्वपाशब्देऽपि शसि प्रवृत्तियोग्यत्वादित्यर्थ इत्याहुः।

यद्यपि "क्त्वो ल्यप्" "श्नश्शानज्झौ"इत्यादिसूत्रगतं सौत्रत्वादेव निर्वोढुं शक्यते, तथाऽपि क्त्वो ल्यब् भवति श्नश्शानज्भवतीतिव्याख्यानवाक्यस्थं तत् साधयितुम् वार्तिककृता "आतो ऽनापः"इति वक्तव्यमित्यारब्धम्, तच्च भाष्ये प्रत्याख्यातं योगविभागेन, तदाह आत इति।

एवं च भाष्यस्य वार्तिककृतैव निर्णीयोक्त आकारः सर्वोऽपि लोपविषय इति स्वरसः तर्हि धातुग्रहणं व्यर्थमात इतीयतैव सिद्धेरिति चेन्न, आबन्तव्यावृत्तिफलकत्वात्।

एवं च धातोः किं हाहान् अव्युत्पन्नमिदम्। यदि हेति कष्टे जहातीति क्रियाशब्दस्त-

दा आकारो वासुदेवस्तेन सह वर्तते सास्तान् सानित्यत्र लोपः स्यादतो धातुग्रहणमित्युक्तिरसमाजग्रस्ता । अव्युत्पन्ने हाहाशब्दादौ प्रमाणीभूताभिधाने साशब्दादावालोपस्य भाष्यवार्तिकयोरिष्टत्वात् । एतेनाचारक्विबन्तात् कर्तृक्विपैते प्रयोगा निर्वाह्या इत्यपास्तम् । आचारक्विबन्तप्रकृतिककर्तृक्विबन्तस्य भाष्ये क्वाप्यनुपन्यासेनादन्तेभ्यः कर्तृक्विपोऽनभिधानस्यैव लाभाच्चेति दिक् ।

शेषः किमिति । पूर्ववर्तिना "यू स्त्र्याख्यौ" इत्यनेन नित्यस्त्रीलिङ्गयोर्दीर्घेदूदन्तयोर्नदीसञ्ज्ञाविधानात् "ङिति ह्रस्वश्च" इत्यनेन च दीर्घेदूदन्तयोः स्त्रीलिङ्गयोर्ह्रस्वेदुदन्तयोर्विकल्पेन नदीसंज्ञाविधानात् घ्यसखीत्यत्रापि यूह्रस्वपदे अनुवर्त्य तत्रैव सामान्यतो घिसंज्ञाविधानेन समीहितरूपसिद्धेः शेषपदं व्यर्थमिति प्रष्टुरभिप्रायः । मत्यै इति । नदीत्वपक्षेऽपि घित्वे सति "आण् नद्याः" इत्याडागमे "घेर्ङिति" इति गुणे ऽवादेशे च मतयै इत्यनिष्टमापद्येतेत्युत्तरयितुंभावः ।

वस्तुतः पुन्नपुंसकयोः प्राप्तौ सावकाशां घिसञ्ज्ञां बाधित्वा मत्यै इत्यत्रानवका(१)शत्वान्नदीसञ्-

(१) न च गवां पत्यै स्त्रियै इत्यत्र नदीसंज्ञायाः सावका-

ङ्यैत्र भविष्यतीति व्यर्थं शेषग्रहणमित्याशयेनाह एके-
ति। अधिकारादिति ।"कडाराः कर्मधारये" इ-
त्येतत्पर्यन्तमधिकारस्य बुद्धिस्थत्वादित्यर्थः ।

नन्वेवं पुरुषपरस्मैपदसंज्ञयोरेकत्र समावेशः क-
थम्, कथं च गुरुनदीत्वयोर्लघुघिसञ्ज्ञयोरिति चेन्न ।
"णलुत्तमो वा"इति ज्ञापकादेव समाधानात् । अन्ये
च गुरुलघुसंज्ञे वर्णस्य नदीघिसंज्ञे तदन्तस्येति
भिन्नावधिकत्वात् समावेशादिति दिक् ।

स्पष्टार्थमिति । स्पष्टतया तदन्तविधिलाभार्थ-
मिति भावः । यू किमिति । ह्रस्व इत्यनुवृत्त्या
निर्देशज्ञापकादिनेष्टप्रतिपत्तावपि विशेष्येणेदुतोरप्यनुवृ-
त्तौ किं फलमिति प्रश्नः। मात्रे इति । अत्र घित्वे "घे-
र्ङिति"इति गुणः स्यादिति घित्वनिवृत्तिः फलम्(१) ।

---

शत्वेन कथमनवकाशत्वमिति वाच्यम् । पतिः स्त्रियामिति
न्यासेनैव सिद्धे सामान्यसूत्रकरणस्य वैयर्थ्यमित्याशयात् ।

(१) नच ऋतोङीति सूत्रे ङिग्रहणसामर्थ्याद्ददन्ताङ्गस्य-
ङिति सुपि गुणोङावेवेतिनियमेवनोक्त दोष इति वाच्यम्
विधिनियमसम्भवे विधिरेव ज्यायानितिपरिभाषया ङिग्रहणस्य
यू इत्यनुवृत्तावेव तात्पर्यग्राहकत्वमित्याशयात् । किञ्च अ-
कारान्तस्यापि घिसञ्ज्ञायां हरिश्च हरश्चेत्यत्र कदाचिद्धरहरी इ-
त्यपि अनिष्टं स्याद् । द्वयोरपि घिसंज्ञत्वेन द्वन्द्वेघीत्यस्य प्रवृत्तेरि-
ति दिक् ।

ननु "ऋतो ङि" इति गुणेन व्यर्थेन ऋदन्ते घिसंज्ञाभावज्ञापनेनात्र दोषाभावः, तस्मात् परिच्छेत्तृवाचिनो मातृशब्दस्य टाविभक्तौ घित्वे सति "आङो ना" इति नात्वापत्त्या मात्रेति प्रत्युदाहर्त्तव्यमिति चेन्न। "ऋतो ङि" इत्यस्य यू इत्यनुवृत्तावेव तात्पर्यग्रहफलकत्वादेवमुक्तेर्युक्तत्वात् ।

ननु "यू स्त्र्याख्यौ" इत्यत्रैव यूग्रहणं न कर्त्तव्यं "ङेराम्नद्याम्नीभ्यः" "ह्रस्वनद्यापः" इति ज्ञापकेन "नेयङुवङ्स्थानौ" इति नदीत्वनिषेधे इयङुवङ्स्थानत्वेन "आचिरनु" इत्यत्र य्वोरेव प्रसिद्धत्वेन चेदूदन्तयोरेव स्त्र्याख्यं नदीत्येतावता सूत्रेण सिद्धेः, तत्कथमत्रानुवृत्तिरिति चेन्न । अनेकगौरवापत्तेः ।

ननु दीर्घयोर्यू इतिनिर्देशासङ्गत्या ह्रस्वयोर्ग्रहणमस्तु, दीर्घयोस्तु ग्राहकत्वात् सिद्धेः । नचाणुदित्यनुवृत्तिः, अन्यथा ऊकालसूत्रे ग्राहकतापत्तिः । "नेयङुवङ्" इत्यत्र निषेधपर्युदासाभ्यां सवर्णग्रहणस्य ज्ञापनात् ।

तदुक्तं भाष्ये, "अविशेषेण नदीसंज्ञा उत्सर्गस्तस्या ह्रस्वयोर्घिसंज्ञाऽपवादः" इति । स्त्र्याख्यह्रस्वदीर्घयोर्नदीसञ्ज्ञायास्तु बाधयत्वरूपेणसाऽस्त्र्याद्युत्सर्ग इति

व्यवहार इति चेन्न । अनेकक्लेशकल्पनापेक्षया दीर्घयोरेव निर्देश इति पक्षस्यैव सुकरत्वात्, "छन्दोवत्सूत्राणि"इतिभाष्योक्तनिर्देशोपपत्तिः ।

ननु यू इति किमर्थमित्याशङ्क्य मात्रे मातुरित्यादौ "आण् नद्याः" इत्याट् प्रसज्येतेति भाष्योक्तमसङ्गतम्, "नद्यृतश्च"इति ऋग्रहणेन ऋदन्तानां नदीत्वाभावबोधनादिति चेत् । मैवम् । अस्त्यर्थे बहुपितृक इत्यादौ कप्फलत्वादित्याहुः ।

ननु घेर्ङीत्येवास्तु । "यस्मिन् विधिस्तदादौ"इति परिभाषया ङकारादौ सुपीत्यर्थेन सकललक्ष्याणा निर्बाधत्वात् । न च "आङ्याजयारामुपसंख्यानम्" इति वार्त्तिकेनाङादेशे ङादित्वाभावेन गुणाप्रवृत्तेः प्रबाहवेति रूपासिद्धिरिति वाच्यम् । तत्रापि ङादेशस्यैव विधेयत्वादिति चेत् । मैवम् । "आण्नद्याः" इत्यत्रापि ङीत्यस्यानुवृत्तावल्विधित्वेन स्थानिवद्भावाप्रवृत्त्या मत्यामित्यादावाडागमानापत्तेः । इद्ग्रहणे तु अनुबन्धकार्यत्वात् स्थानिवद्भावः सुलभ इति स्त्रीप्रत्यये स्फुटीभविष्यति ।

ननु सुतरां सखेति विगृहीते "राजाहःसखिभ्यः" इति टचा भाव्यमित्याशङ्क्य "न पूजनाद्"

इतिनिषेधप्रवृत्तये विवृणोति शोभनः सखा सुसखेति । एवमतिशयितः सखेत्यत्रापि बोध्यम् । ननु सखिशब्दस्य विहितं कथमत्र स्यादत आह आङ्गत्वादिति । तत्तत्कार्यस्याङ्गाधिकारस्थत्वेनाधिकृतमङ्गं प्रति सख्युर्विशेषणत्वाद् "येनविधिः" इतिप्रवृत्तेस्तदन्तलाभादिति भावः । सखेत्यादौ व्यपदेशिवद्भावेन(१) बोध्यम् ।

(१) व्यपदिश्यतेऽनेनेति व्यपदेशो मुख्यो धर्मः, सोऽस्यास्तीति व्यपदेशी मुख्यधर्मवान् तद्वत् तस्यैवैकस्यापि कार्यम् इत्यर्थिकया व्यपदेशिवदेकस्मिन्निति परिभाषयेति यावत् ।

अत्र केचित् एकस्मिन् असहाये एतन्न्यायप्रवृत्तिं व्याचक्षते, अत एव रामेषु इत्यत्र सु इत्येतन्मात्रस्यानेन पदत्वं न, अन्यथा तत्राऽपि व्यतिसे इत्यादाविव पदत्वप्रवृत्त्या तत्रेवात्रापि "सात्पदाद्योः" इति निषेधापत्तिः स्यात् । असहायत्वं च मुख्यधर्मवदघटकत्वे सति मुख्यधर्मवदघटितत्वे सति मुख्यधर्मवदसमभिव्याहृतत्वम् । अत एव सभासंनयने भव इत्यर्थे आतिदेशिकवृद्धत्वाभावः, तेन न "वृद्धाच्छः" इत्यस्य प्रवृत्तिः । अन्यथा वृद्धिसञ्ज्ञकाद्यज्वत्त्वरूपमुख्यधर्मवद्भासन्नयनघटिते सभासन्नयने तद्रादेशे वृद्धत्वाच्छो दुर्वारः स्यात् । एवं सभासन्नयनवृत्तिप्रातिपदिकत्वस्य सभासन्नयनेऽतिदेशो न, न वा भाकारवृत्तिवृद्धित्वस्य सकाराकारेऽतिदेशः । तयोः क्रमशः प्रथमतृतीयसम्बन्धव्यावर्त्यत्वात् इत्याहुः ।

तन्न युक्तम् । तथा सति रामशब्दे उक्तरूपासहायत्वस्य सत्त्वेन जराशब्दत्वस्यानेनातिदेशे जरसादेशापत्तिः स्यात् ।

किन्तु एकस्मिन्नित्यस्य घटकत्वघटितत्वलक्षणकुक्षिप्रविष्टभावरूपसम्बन्धसत्त्वे इत्यर्थः । तथाहि घटकत्वं स्वव्यापकत्वम् स्वव्याप्यत्वाभाववत्त्वमिति सवन्धद्वयेन समुदायविशिष्टत्वम् ।

व्यापकताव्याप्यतयोश्च नियामकः सम्बन्धोऽत्र विषयतारूपः ।

"शेषो घ्यसखि" इत्यत्र नञ् न प्रसज्यप्रतिषेधको ऽसमर्थसमासादिदोषात्(१), किन्तु पर्युदासकः। स च सदृशग्राही(२)। सखिसदृशश्च समुदायो नास्तीत्यभिप्रेत्याह(३) समुदायस्येति। ननु पर्युदस्यमानसमर्पकसखिशब्दे तदन्तग्रहे समुदायस्यापि सखिशब्दान्तभिन्नत्वाभावेन कथमत्र निषेधाभाव इति चेत्। नैवम्। विशेष्यासन्निधानेन "येन विधिः" इत्यस्याप्रवृत्तेस्तदन्ताला-

---

यथा रामशब्दाकारे, यत्र ज्ञाने विषयतासम्बन्धेन रामशब्दस्तत्र तेन सम्बन्धेन तस्याकारस्याभावाभावात् अन्यत्र च रामशब्दाकारस्यासत्त्वात् उक्तसम्बन्धद्वयवत्तया घटकत्वम्। घटितत्वं च स्वव्याप्यत्वं स्वव्यापकत्वाभाववत्त्वमिति सम्बन्धद्वयेन समुदायविशिष्टत्वरूपम्। यथा रामशब्दे रेफादिघटितता। एवंच रामशब्दस्य जराशब्दव्याप्यत्वस्य तद्व्यापकत्वस्य वा अभावाद् द्वितीयसम्बन्धस्यानेनानतिदेशान्न जरसादेशापत्तिरित्याद्यन्यत्र विस्तरः।

(१) प्रसज्यप्रतिषेधत्वं विवृतमभियुक्तैः—प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ्॥ इति। सम्बध्यते इति शेषः। तथाच नञः क्रियान्वयेनेतरत्रान्वयाभावात्परस्परान्वये सत्येव प्रवर्त्तमानस्य स्वप्रयोज्यविषयतानिरूपितविषयताप्रयोजकपदघटितत्वं स्वशक्त्यधिकरणत्वमिति सम्बन्धद्वयेन पदविशिष्टत्वरूपस्यैकार्थीभावस्याभावेनासमर्थसमासापत्तिः। आदिशब्देन वाक्यभेदसङ्ग्रहः।

(२) तदुक्तं भाष्ये "नहि अब्राह्मणमानय इत्युक्ते लोष्टमानयन् कृती भवति" इति। नञिवयुक्तमितिपरिभाषाऽप्येतदनुवादरूपेत्यादि विस्तरेणान्यत्र निरूपितम्।

(३) अस्मिन्मते नैयायिकानामिवावयवावयविनोः परस्परं भिन्नत्वात्। ननु मीमांसकादिवद् भिन्नाभिन्नत्वम् भेदाभेदयोर्विरुद्धयोरेकत्र समावेशायोगाद् इति भावः।

भात् । सत्यपि विशेष्ये सखिशब्दभिन्नान्तस्येत्येवार्थो, न तु सख्यन्तभिन्नस्येति । नञैकार्थीभावापन्नस्य सखिशब्दस्यान्यत्रान्वयायोगात् ।

"यस्येति च" इति सूत्रे भाष्यकारस्त्वत्रापि असखीति घिसञ्ज्ञानिषेधमभिप्रैति । तद्यथा— "इवर्णस्य किमुदाहरणमतिसखेरागच्छति, यद्यत्र लोपो न स्यात्तदा प्रकृतीकारस्य ङीपा सह दीर्घे पूर्वान्तवद्भावेन सखिशब्दत्वादुपसर्जनह्रस्वत्वे कृतेऽपि घिसञ्ज्ञा न स्यात्, लोपे तु लक्षणप्रतिपदोक्तपरिभाषया न दोषो भवति" इति । सखिशब्दस्य तदवयवे लक्षणा, ततश्च सख्यवयवभिन्नयोरिदुतोरिति वर्णसञ्ज्ञापक्षे तत्सूत्रार्थः । युवर्णान्तसञ्ज्ञापक्षे ऽप्यसखीति य्वोरेव विशेषणम्, ततस्तदन्तविधिः । ततश्च सख्यवयवभिन्नेवर्णोवर्णान्तमिति तदर्थः । एवं च प्रकृते न घिसञ्ज्ञेति भावो भाष्यकर्तुः । पूर्वरीत्या तु विशिष्टस्य सखिभिन्नत्वेन घिसञ्ज्ञा निर्बाधैवेति भाष्यासङ्गतिरेवेति दिगित्याहुरन्ये ।

एतेन 'शेषो घ्यसखिपती' 'पतिसखी समास एव' इति वा सूत्र्यतामिति परास्तम् । उक्तभाष्यरीत्या सुसख्येत्यादीष्टासिद्ध्या तथा न्यासस्य कर्तुमशक्यत्वात् ।

इह पतिना सखिनेत्यादि पुराणादौ दृष्टं त्वसाध्वेव, एतद्व्याकरणानिष्पन्नत्वात् ।

ननु परमश्चासौ सखा चेति विग्रहे "न पूजनाद्"इत्यस्याप्रवृत्तेष्टच् स्यादित्यत आह यस्येति विग्रह इति । नन्वेवं सत्युपसर्जनत्वं तच्चेतरविशेषणत्वेनार्थोपस्थापकत्वमित्युक्तम्, तत् कथं तत्कार्यमित्याशङ्क्य बाधकवचनाभावादविशेषाद्भविष्यतीत्याह गौणत्वे ऽपीति । उपसर्जनत्वे ऽप्यस्थ्याद्यनङ्त्वादित्यर्थः । न च "गौणमुख्ययोः"इति बाधकम् । अत्र गौणत्वाभावात्, अप्रसिद्धत्वगौण(१)लाक्षणिकत्वान्यतररूपत्वस्यैव तत्त्वात् । गौणोपसर्जनयोः पर्यायत्वे ऽपि न्यायेनैव सिद्धे उपसर्जनानां सर्वनामत्वनिषेधपरवार्तिकभाष्यादयो विरुध्येरन्, न्यायस्य पदकार्ये(१) प्रवृ-

---

(१) यद्यप्यत्र केवलं लाक्षणिकेत्येव पाठ उपलभ्यते तथाऽपि सोऽयुक्तः । न हि लाक्षणिकमात्रस्य गौणत्वम् तत्पदवाच्यार्थविरोधात् । गुणादागतो गौण इति व्युत्पत्त्या गुणहेतुकज्ञानविषये तस्य प्रवृत्तिर्लभ्यते । नच लक्षणामात्रे गुणहेतुकता । किन्तु गौणलक्षणास्वेवेति गौणलाक्षणिकस्यैव गौणत्वम् । अत एव अजाद्यत इति सूत्रे "शूद्रा चामहद्"इति वार्त्तिके जातिग्रहणं चरितार्थम् ।

(१) सुब्विभक्त्यनिमित्तकत्वे सति स्त्रीत्वानिमित्तकत्वं तत्त्वम् । तेन गौरनुबन्ध्य इत्यादौ नानेन णिद्वद्भावाभावः । न वा श्वशुरसदृशस्य स्त्रीत्यर्थे श्वशुरीत्यस्यासिद्धिरिति दिक् ।

त्तेऽश्वानि दिक् ।

सखीशब्दे "सख्यशिश्वीति भाषायाम्" इति ङी-षन्तेऽपि लिङ्गविशिष्टपरिभाषया सखिकार्यमाशङ्क्याह अनित्यत्वादिति । "शक्तिलाङ्गलाङ्कुश—" इति वार्तिके घटघटीग्रहणमत्र लिङ्गम् । उपसर्जनेऽप्युक्तं कार्यमाशङ्क्याह इहेति । लाक्षणिकत्वादिति । लाक्षणिकस्यानुमीयमानरूपत्वात् प्रतिपदोक्तस्य प्रत्यक्षत्वादिति परिभाषाबीजम् । ननु बाधकाभावादविशेषादुपसर्जने त्रयादेशः स्यादत आह गौणत्वे तु नेतीति । उपसर्जने तु नेत्यर्थः । यथानन्तरोक्तस्य "आमि सर्वनाम्नः" इत्यस्यानुपसर्जन एव प्रवृत्तिस्तद्वत्तत्साहचर्यादस्यापीति भावः । केचिदिति । अत्रारुचिबीजं तु साहचर्यस्यासार्वत्रिकत्वं सूत्रान्तरस्थतदाश्रयणे दृढतरप्रमाणाभावश्चेति । अत एवाह वस्तुत इति । गौणमुख्यन्यायस्यात्र प्रवृत्तौ समनन्तरोक्तसमाधिरनुसन्धेयः । "षड्भ्यो लुक्" "षट्चतुर्भ्यश्च" इतिवदर्थप्राधान्यबोधकबहुवचनस्यात्राभावाद् गौणेऽपि त्रयादेशो न्याय्य इत्यादिकं सङ्गतमिति हलन्ते वक्ष्यते ।

ननु सूत्रे त्रेरयङित्येवास्तु । मैवम् । अयङ्यीत्यादावित्रोच्चारणार्थत्वशङ्कावारणफलकत्वात् ।

एतेन तत् करोतीति णिचि "प्रकृत्यैकाज्"इति टिलोपाभावे क्विपि तुकि त्रित्, तस्य त्रयाणामिति साधनार्थं त्रयादेशः। न च तुकि त्रिशब्दो नास्ति, न च "यदागमा इत्यस्य प्राप्तिः, ह्रस्वमात्रस्यागमत्वादिति वाच्यम्। "अवयवावयवो ऽपि समुदायावयवः—"(१) इति स्वीकारादिति मन्दोक्तमपास्तम्। सत्यभिधाने निर्दिश्यमानपरिभाषया त्वदुक्तरूपस्यैवासङ्गतेः। "यदागमाः" इति लभ्यस्यार्थस्य स्थानित्वाभावो येन-विधिरिति बोधिततदन्तस्य च निर्दिश्यमानपरिभाषया क्रियते, तेन उदस्थादित्यत्र पूर्वसवर्णो न, सुपद इत्यादौ पादू इत्यस्य पदादेश इतिसिद्धान्तात्। किं चात्र तुकि यदागमा इत्यस्य कुतो न प्रवृत्तिः, प्रणिदापयतीत्यादौ दापेः कथं घुत्वमित्याशङ्क्य "यदागमाः"इत्यनेन भविष्यतीति "दाधा"इतिसूत्रे भाष्योक्तिस्त्रितो ऽपि तुल्यत्वात्। प्रनिदारयतीत्यत्र रेफो दाग्रहणेन न गृह्यते, आकारस्य तदागमित्वे ऽपि दा इत्यस्य तत्त्वाभावादिति स्पष्टमाकरे। "अवयवावयवः

(१) अत एव शेरते इत्यत्र नित्यत्वाद्रुडागमे ऽनेन न्यायेन रते इत्यस्य सार्वधातुकत्वाद् गुणः। यदागमन्यायेन तु न निर्वाहः, अत इत्यस्यानागमित्वाद् इति भावः।

समुदायावयवो ऽपि"इति त्वपसिद्धान्तः(१) । तत्साध्यार्थस्यान्यथैवोपपत्तेरिति दिक् ।

यद्यपि "निजां त्रयाणाम्"इतिनिर्देशेन त्रयादेशस्य सान्तत्वाभाववदुच्चारणार्थत्वशङ्काभावो ऽपि शक्यते वक्तुम्, तथाऽपि लाघवाभावात् त्रेरयङ् न कृत इति तत्त्वम् ।

**द्विपर्यन्तानां किमिति** । युष्मदस्मदोरात्वयत्वलोपैर्विशेषविहितैरत्वस्य बाधात्, किमः कादेशविधानाच्च न दोष इति प्रश्नः । **भवानिति** । भवत् सु इति स्थिते तकारस्यात्वे "अतो गुणे" इति पररूपे "उगिदचाम्"इति नुमि "सर्वनामस्थाने"इति दीर्घे सुलोपे च भवा इति स्यादिति भावः । उत्तरे दत्ते ऽपि दार्ढ्याय पुनराह **भवन्ताविति** । पूर्ववद् अत्वे पररूपे नुमि दीर्घे च भवानाविति स्यादिति भावः । नद्यैरामाणामित्यत्रकाशयोराट्नुटोर्युगपद् बहुश्रे-

---

(१) नचैतदनाश्रयणे शेरते इत्यासिद्धिरिति वाच्यम् । झस्यैव रुड्विधानात् तस्य सार्वधातुकत्वेन तद्वृत्तिधर्मस्य यदागमपरिभाषयाऽऽगमविशिष्टे अतिदेशेन सिद्धेः । नचैवं रुड् झस्यादादेशबाधको येननाप्राप्तन्यायेन स्यादिति वाच्यम् । अत इत्यनुवृत्त्या 'झस्य रुडकारात्पूर्वम्'इति 'पूर्वं नाभेः कायस्य'इति भाष्योदाहरणवदकारस्यावधित्वेनाश्रयणात् तस्यात्रोपजीव्यत्वेन तन्न्यायाप्रवृत्तेरित्यन्यत्र विस्तरः ।

यस्यामित्यत्र प्राप्तौ विप्रतिषेधसूत्रप्रवृत्तेराह इह परत्वादिति ।

ननु तावदाडामोः प्राप्तावनवकाशत्वादाटं बाधित्वाऽऽम् भवति । न चागमादेशयोर्बाध्यबाधकभावो न दृष्टचरः । "दीर्घो ऽकितः" इत्यत्र "अपवादो नुग्दीर्घत्वस्य" इति भाष्योक्तेर्दृष्टत्वात् । एवं च बाधितत्वेन पुनरप्रवृत्तेराटः कथं नुटा विप्रतिषेधविचार इति चेन्मैवम् । अपवादेन विनिर्मुक्ते पुनरुत्सर्गः प्रवर्तत इत्यदोषात्, "तौ सद्" इत्यादिनिर्देशात् । अत एव "ईच गणः" इतिसूत्रेण "ईत्वं नापवादत्वाद्धलादिः शेषं बाधते, किं तर्ह्यनवकाशत्वाद्" इति "गुणो यङ्लुकोः" इत्यत्रोक्तं भाष्ये ।

नन्वेवमपि "शब्दान्तरस्य प्राप्नुवन् विधिरनित्यः" इति "अनित्ययोराडामोः परत्वादाम्" इति "पादः पद्" इत्यत्र भाष्योक्ते विरुध्येतेति चेन्न । तस्यैकदेशित्वोक्तेः, परत्वादुत्कृष्टत्वादपवादत्वादित्यर्थेनादोषाच्च ।

आटा नुडिति ।

ननु ङेरामो लाक्षणिकत्वान्नुटोऽप्राप्तिरेवेति चेन्न । अत्र नुट्प्रवर्तकभाष्यप्रामाण्येन तदनाश्रयणात् ।

ननु तर्हि षष्ठीबहुवचनस्यामो ग्रहणमिति "हृ-

स्वनद्यापः" इत्यत्र साप्तमिकभाष्योक्तिरेव कथमिति ।
इत्थम् । आटाऽऽमि नुटो बाधितत्वेन तस्यैवामः प-र्यवसानात् । न चाटि कृतेऽपि पुनर्नुट् प्रवर्तताम् ।
सकृद्गतिन्यायस्यात्र लक्ष्यानुरोधेनाश्रयणात् ।

ननु"आण्नद्याः"इतिसूत्रे"अड्"इत्येवास्तु"आट-श्च"इत्यत्रापि"न माङ्योगे"इतिसूत्रभाष्ये"अटश्च"इत्येव सूत्रितम् "आडजादीनाम्"इत्यपि सूत्रमनादेयमटैव सि-द्धत्वादित्यपरमनुकूलम् । न चाटि कृते "अतो गुणे" इति पररूपापत्तिर्विधानसामर्थ्यादिति चेन्न । 'अट-श्च'इतिन्यासे दोषाभावेऽप्यत्र त्वट्करणे'अटश्च'इति वृ-द्ध्यनापत्तेः । अस्त्रपो हसन्नित्यत्र वृद्धिनिवारणाय तत्र "उपसर्गादृति" इत्यतो धाताविल्यपकर्षादिति स्पष्टं "न माङ्योगे" इत्यत्र षष्ठे भाष्ये । न च "वृद्धिरेचि" इति वृद्धाविष्टासिद्धिः । बहुश्रेयसी अ ए इत्या-दौ स्थिते पररूपापत्तेः । न च विधानसामर्थ्यम् । बहुश्रेयस्यामित्यादौ नुटो निवारणेन चारितार्थ्यात् ।

ननु"ह्रस्वनद्यापः" इत्यनन्तरं "ङेर्न"इति सूत्र-यित्वाऽऽमीत्यनुवर्त्य ङेरामो नुड् नेत्यर्थान्न दोष इति चेन्न । वचनारम्भे गौरवादनाकराच्च । एतेन श्रि-यै श्रिया इत्यादौ "सावेकाचस्तृतीयादिर्विभक्तिः"-

इत्यनेन विभक्तेरुदात्तत्वं मा भूदागमानुदात्तत्वं यथा स्यादित्यड्विधानस्य चरितार्थत्वात् पररूपं स्यादेवेति मन्दोक्तमपास्तम् । अटि सत्यप्येकादेशेन विभक्तेरेवोदात्तत्वस्य जायमानत्वादडभावपक्षेण तुल्यत्वात् ।

किं च यथान्यासे ऽप्याटोऽनुदात्तत्वं न फलम्। "आगमा अविद्यमानवद्भवन्ति" इत्यविद्यमानवत्त्वेन "सावेकाचः" इति कृते एकादेशेनोदात्तत्वस्यैव श्रुतेः । अनेकाच्शब्दे सुप्त्वेन "आद्युदात्तश्च" इति बाधित्वा विभक्तेरेवानुदात्तत्वश्रुतेश्च । अत एव "आगमा अनुदात्ता भवन्ति" इत्युक्त्वा "के पुनरागमा अनुदात्ताः" इति प्रश्ने आडनुदात्त उक्तो भगवता, न च व्याख्यातृभिरुपात्तः । स्पष्टं चेदम् "आद्युदात्तश्च" इत्यत्र तृतीये भाष्य इति दिक् ।

तस्मादनेकक्लेशकल्पनागौरवापेक्षया यथान्यासमेव युक्तमित्यलमियता ।

यदि गतिकारकपूर्वस्य यणित्युच्येत, तदा कुमार्यावित्यादावव्याप्तिरतो भाष्ये "गतिकारकपूर्वस्यैव" इति नियमघटितं पठितम्, तेन गतिकारकपूर्वभिन्नस्य न यणिति फलति, तद्भिन्नं च तत्सदृशं पूर्वपदमेवे-

त्युक्तेर्नाव्याप्तिः, यत्किञ्चित्पूर्वस्य चेत्तदा गतिकारकपूर्वस्यैव, इतरत्र तु नियमानन्तर्गतत्वाद्भवत्येवेति फलितार्थात्तदाह **गतीति** । कारकाणि कर्तृकर्मकरणसम्प्रदानापादानाधिकरणरूपाणि षट् । क्रियाजनकत्वं च कारकत्वम्,(१) विभक्तिर्द्विधा कारक-

---

(१) यत्तु क्रियान्वयित्वं कारकत्वमिति । तन्न । क्रियान्वयस्य साक्षात्परम्परासाधारणस्य दुर्वचत्वात् । अन्यतरग्रहणेन तु न निर्वाहः । तथाहि यदि साक्षात्क्रियान्वयस्य तत्त्वं स्वीक्रियेत तदा हरिं भजतीत्यादिषु साक्षात्क्रियान्वयिषु तत्समवायेऽपि कर्तृकर्मद्वारा क्रियान्वयिनि अधिकरणे ऽव्याप्तिप्रसङ्गः, अथाधिकरणस्यापि स्ववृत्तिमद्वृत्तिसम्बन्धेन साक्षात्क्रियान्वयस्वीकारः तर्हि ब्राह्मणस्य पुत्रं पृच्छतीत्यादौ ब्राह्मणस्यापि स्वजन्यवृत्तिसम्बन्धेन क्रियान्वयापत्त्याऽतिव्याप्तिर्दुरुद्धरा स्यात् । अथ परम्परया तत्स्वीकारस्तथापि अधिकरणातिरिक्तकारकेष्वव्याप्तिस्तदवस्था, तेषां साक्षादेव क्रियान्वयात् । ब्राह्मणस्येत्यत्रातिव्याप्तिरप्यनुद्धृता स्यात् ।

वस्तुतस्तु क्रियान्वयित्वस्य क्रियानिष्ठविषयतानिरूपितकारकत्वव्याप्यसम्बन्धावच्छिन्नप्रकारताश्रयत्वरूपस्य स्वीकारेणादोषः । हरिमित्यत्र हरिनिष्ठप्रकारतायाः कारकत्वव्याप्यकर्मत्वसम्बन्धेनावच्छिन्नत्वेन, कटे आस्ते इत्यत्र कटस्यापि तादृशाधिकरणत्वसम्बन्धावच्छिन्नप्रकारताश्रयत्वेन कारकत्वात् । ब्राह्मणस्य तु कारकत्वाव्याप्यजन्यजनकभावसम्बन्धावच्छिन्नप्रकारताश्रयत्वेन न तत्त्वम् । नचैवं देवदत्तः पचतीत्यत्र देवदत्तस्य तिङर्थकर्तरि अभेदेनान्वयात्तन्निष्ठप्रकारतायाः कारकत्वाव्याप्याभेदसम्बन्धावच्छिन्नत्वात्तदाश्रयस्य देवदत्तस्य कारकत्वानापत्तिरिति वाच्यम् । क्रियानिष्ठविशेष्यतानिरूपितकारकत्वव्याप्यसम्बन्धेतरभेदसम्बन्धानवच्छिन्नप्रकारताश्रयत्वस्य तत्त्वस्वीकारात् । अथ तिङर्थस्य

विभक्तिरुपपदविभक्तिश्चेति । आद्या क्रियायोग एव । अन्या तदभावेऽपि । तथा च प्रथमान्तस्य क्रियानपेक्षत्वान्न कारकत्वमित्यभिमानेनाह शुद्धधियावित्यादि । शुद्धा धीर्ययोः परमा धीर्ययोरिति विग्रहः । शुद्धं ध्यायतीत्यर्थे तु यणेवेति भावः ।

वस्तुगत्या "अस्तिर्भवन्तीपरो(१) ऽप्रयुज्यमानोऽप्यस्ति"इति भाष्योक्तेरस्तिक्रियायाः सर्वत्र सत्त्वात् प्रथमाया अपि कारकविभक्तित्वमायाति । प्रकृते त्वयं परिहारः यद्यपि सत्त्वभूतार्थकधीशब्दस्य विशेषणत्वाच्छुद्धस्यासत्त्वभूतक्रियाविरहाच्चेह कारकत्वं नास्ति, तथाऽपि प्रतीयमानामस्तिक्रियामपेक्ष्य तत्त्वमस्त्येव, इतरथा सुबेव न स्यात् । अत एव दध्योदनादावुपसेचनक्रियामन्तर्भूतामूरीकृत्य कृतः समासः कैयटादिभिः । अत्र यण् तु न शङ्कनी-

---

क्रियायामाश्रयतासम्बन्धेन कारकत्वाव्याप्येनान्वयादव्याप्तिराशङ्क्येत तर्हि क्रियाविशिष्टप्रकारताश्रयत्वस्य तत्त्वस्वीकारेणादोषः । वै० साक्षात्स्वनिष्ठविषयतानिरूपितत्वम्, स्वनिष्ठविशेष्यतानिरूपितकारकत्वव्याप्यसम्बन्धेतरभेदसम्बन्धानवच्छिन्नत्वमित्यन्यतरसम्बन्धेन, आद्यसम्बन्धोपादानात्तिङर्थस्य कारकत्वोपपत्तिः, द्वितीयोपादानाद्धरिं कटे इत्यादीनां तत्त्वोपपत्तिः, अनवच्छिन्नत्वनिवेशाद्देवदत्ते नाव्याप्तिरित्याद्यन्यत्र विस्तरः ।

(१) भवन्तीति लटः सञ्ज्ञा प्राचाम् ।

यः । दुर्धिय इत्यादावित्र प्रत्यासत्त्या यां क्रियामाश्रित्य सुबुत्पत्तिस्तां प्रत्येव कारकत्वमिति विवेचनादिति । एवं च सत्त्वभूतार्थकधीशब्दविशेषणत्वाच्छुद्धस्य कथमपि न कारकत्वमिति भट्टोक्तेरभिमान एवेति सर्वं संवादचिन्तामणौ विस्तरेण निरूपितमस्माभिः ।

दुर्ध्यायति दुष्टा धीर्ध्यानं येषां वृश्चिकादीनामेषामिति विग्रहमभिप्रयन् पर्यनुयुङ्क्ते कथं तर्हीति । दुःस्थितेति । "प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः" इति वार्त्तिकेन स्थितपदादेर्लोपः । दुःशब्दोपात्तदुष्टत्वस्य स्थितिक्रियाविशेषकत्वमिति भावः । नन्वेवं रीत्या प्रध्यामित्यादौ भाष्योक्ते यणनापत्तिः, मैवम् । प्रकर्षः प्रशब्दार्थो धीशब्दोपात्तधात्वर्थे विशेषणमित्याशयात् । यत्क्रियेति । या चासौ क्रिया चेति विग्रहः । इदं तत्र तत्र स्पष्टं भाष्य इत्युक्तं प्राक् । किं च, भाष्यकृताऽपादानविषये तत्तद्धातूनां स्वार्थपूर्वकबौद्धविश्लेषजनकनिवृत्तिलक्षणया "ध्रुवमपाये" इति सूत्रेणैव सिद्धिमासाद्य "भीत्रार्थानाम्"इत्यादीनि प्रत्याख्यातानीत्याशयेनाह बुद्धिकृतमिति । विवक्षितमिति । विवक्षात एव कारकविभक्तयो भवन्तीति

भाष्यसिद्धान्तादिति भावः। ततश्च सम्बन्धसामान्ये षष्ठ्यैव समास इति नात्र कारकपूर्वकत्वमित्याशयः। उपायस्योपायान्तरादूषकत्वेनाह वृश्चिकसम्बन्धिनीति। सा चासौ भीश्चेति विग्रहः। पूर्वपदान्तर्गतस्योत्तरपदस्य शाकपार्थिवादित्वाल्लोपप्रवृत्तेराह उत्तरेति। अल्लोपयलोपाविति। "अतो लोपः", "लोपो व्योर्वलि" इति-सूत्राभ्यामित्यर्थः। न च यलोपे ऽल्लोपस्य स्थानिवत्त्वम्। यलोपे तन्निषेधात्। न च "पूर्वं वेरपृक्तस्य" इति क्विब्लोपे वल्परत्वाभावात् कथं यलोपः। "वेरपृक्तलोपात् पूर्वं वलिलोप इष्यते" इत्युक्तेः। स्थानिवत्त्वादिति। एवं सति "एरनेकाचः" इति यणादेशे यलोपे सख् इति स्यादिति भावः। ननु अन्तर्वर्तिनीं विभक्तिमाश्रित्य सखीशब्दस्य पदत्वान् "न पदान्त" इति निषेध इति चेद्, मैवम्। "नः क्ये" इतिसामान्यापेक्षनियमेनास्यापवादत्वात्। परपदस्थाजादेशस्यैव तेन स्थानिवत्त्वनिषेधाच्चेति(१) वक्ष्यते। न चान्त-

(१) अयम्भावः—नपदान्तसूत्रेण पदचरमावयवे कर्तव्ये स्थानिवत्त्वं निषिध्यते। तत्राचः परस्मिन्नित्यस्य प्रवृत्तये पदचरमावयवस्य स्थानिभूताच्पूर्वत्वमपेक्षितम्। तच्च परपदस्थाजादेशग्रहणं विना दुःशकमिति परपदस्थस्यैवाजादेशस्य पदचरमावयवे कर्तव्ये स्थानिवत्त्वं निषिध्यते। अत एव वेतस्वानित्यादौ पदान्तत्वमाश्रित्य प्राप्तरुत्वाभावः। अत एव प्रत्यैषिषन् इत्यत्र

रङ्गे यणि कर्त्तव्ये क्विबपेक्षत्वेन बहिरङ्गस्य क्यच्सम्बन्धियलोपस्यासिद्धत्वम् । परिभाषाया अनित्यत्वात् । तत्र मूलं वक्ष्यते, अत आह क्काविति । लुप्तमित्यत्र भावे क्तः, लोप इत्यर्थः । "गोमन्तमिच्छति ततः क्विपि गोमान्" इति भाष्योक्तेः। इदमपि क्वचित् स्वीकर्त्तव्यमिति भावः । सार्वत्रिकं तु "क्वौ विधिं प्रति न स्थानिवद्" इत्येवेति दिक् । एकदेशेति । न च दीर्घस्य कथं विकृतत्वम् । स्वरूपभङ्गस्यैव विकारपदार्थत्वादिति भावः। अनङिति। "अभिव्यक्तपदार्था ये" इतिन्यायस्यात्र न विषयो गौणमुख्यन्यायवत्पदकार्यविषयत्वादित्याहुः । ननु व्युत्पत्तिपक्षे तृन्नन्तत्वात्तृजन्तत्वाद्वा दीर्घे सिद्धे नप्त्रादिग्रहणं व्यर्थमत आह नियमार्थमिति । 'उणादिव्युत्पन्नानां संज्ञाशब्दानां दीर्घश्चेन्नप्त्रादीनामेव, नान्येषाम्' । भवन्ति हि नप्त्रादय औणादिका इति दीर्घभागिनो, भवन्ति चेतरे पितृभ्रात्रादय औणादि-

---

न स्थानिवत्त्वनिषेधः । अन्यथा तस्य परपदस्थत्वेन निषेधो दुर्वारः स्यात् । उत्तरपदे परतः परपदस्थाजादेशो न स्थानिवदित्युक्तेऽपि न निर्वाहः, प्रत्यैषिषन् ब्राह्मणा इत्यत्र दोषानुद्धारात् । तथा च पदचरमावयवे कार्ये प्रत्यासत्त्या परपदस्थाजादेशस्यैव स्थानिवत्त्वनिषेध इति स्वीकारे न दोष इति भावः ।

का इति न दीर्घभाजः । धातृकर्त्तृयन्त्रादयश्च नोणादिव्युत्पन्ना इति नियमानन्तर्गतत्वाद्दीर्घभाज एवेति भावः । अव्युत्पत्तिपक्षे तु नप्त्रादिग्रहणं विध्यर्थमिति स्पष्टमेव । पितृभ्रात्रादीनामप्यत्र पक्षे "अप्तृन्"इतिसूत्रे पाठाभावादेव न दीर्घशङ्कालेश इति दिक् ।

तृतीये भाष्ये तु "ण्वुल्तृचौ"इतिसूत्रे किमर्थं चकारः,"अप्तृन्तृचां" इति विशेषणार्थः, तृ इत्युच्यमाने मातरौ पितरावित्यादावपि प्राप्नोति, नप्तृग्रहणं नियमार्थं भविष्यति, योनिसम्बन्धवाचिनां चेदस्यैव, नान्येषां योनिसम्बन्धवाचिनामिति तृचश्चकारो व्यर्थः" इति । एवं च पित्रादयोऽपि निरनुबन्धकतृप्रत्ययान्ता एवेति लभ्यते । तृन्नितिसूत्रे नेष्टृत्वष्टृक्षत्तृहोतृपोतॄणां तृन्नन्तत्वस्य प्रशास्तृशब्दस्यापि तृन्नन्तत्वस्य भाष्यवार्तिकयोरुक्तत्वेन तेषां ग्रहणमदृष्टार्थं, प्रपञ्चार्थमेव वा । तथा च यथान्यासे नियमफलं चिन्तनीयमिति प्राहुः ।

यद्यपि तृन्प्रत्ययान्तस्य क्रोष्टृनित्यादि सिध्यति, तथापि शृगालवाचिनोस्तुन्तृजन्तयोः क्रोष्टुक्रोष्टृशब्दयोरुभयोरप्यविशेषेण प्रयोगे प्राप्ते सर्वनामस्थाने स्त्रियां च तृजन्त एव, तृतीयादावप्युभयम्, अ-

ऽप्यत्र तुज्वन्तमेवेति नियमार्था "तृज्वत् क्रोष्टुः, स्त्रियां च विभाषा तृतीयादिष्वचि" इति त्रिसूत्री आरभ्यते । ततश्च पक्षे प्रसक्तदोषं प्रतिपादयितुमाह परत्वादिति । न च कृताकृतप्रसङ्गित्वेन नुटो नित्यत्वात् परस्मादपि नित्यस्य प्रबलत्वान्नुडेव तावत्स्यादिति वाच्यम् । सति तृज्वद्भावे सन्निपातभाषया नुटोऽप्रसक्त्या नित्यत्वालाभात् । नुमचिरेति । वारिणामित्यादौ "इको ऽचि" इति नुमि सति "नामि" इति दीर्घो न स्यादिति सफलम् । तिसृणामित्यत्र "अचि र ऋतः" इति रादेशे रूपासङ्गतिः, प्रकृते ऽपि रूपासङ्गतिरेव । न च "अचि र ऋत" इति अपवादसूत्रं बाध्यसामान्यचिन्ताश्रयणेन स्वविषये प्राप्तस्य सर्वस्यापि बाधकम् । अत एव गुणदीर्घोत्वानामपवाद इति वक्ष्यतीति तृज्वत्सूत्रे स्पष्टं भाष्ये । एवं चाविशेषादनेन बाधिष्यते नुडित्युत्सर्गापवादयोरसमबलत्वात् कथमिह विप्रातिषेधसङ्गतिरिति वाच्यम् । तृज्वत्सूत्रे "न तिसृ' इतिज्ञापकेन नुड् न तु विप्रतिषेधेनेति भाष्योक्तेः ।

दीर्घर्कारान्तस्य, लृकारान्तस्य च प्रायः प्रयोगाभावादनुकरणशब्दं निरूपयति कॄ तॄ इत्यादिना । प्रकृतिवदिति । अनु-

करणस्य शब्दमात्रोच्चारणतात्पर्यविषयत्वेनानुकार्यश-ब्दस्वरूपमात्रबोधकत्वम्, प्रकृतिरनुकार्यम् तेन तुल्यं वर्तते इति तदर्थः, अनुकार्यं चानुकरणाद्भिन्नमेवेति "मतौ छः" इत्यत्र स्पष्टं भाष्ये(१)। अयं चातिदेशो "य-त्तदेतेभ्यः" इत्यत्रानुकरणे त्यदाद्यत्वकरणेन ज्ञाप्यते, एकशेषाकरणेन क्षिय इत्यादौ धात्वनुकरणे विभक्तिक-

(१) तत्र हि अनुकरणमनुकार्यादभिन्नमिति कृत्वा वार्तिक-कृता अस्यवामीयमित्यादिसिद्ध्यर्थमारब्धस्य "अस्यवामादिभ्य उपसङ्ख्यानम्" इति वार्तिकस्य खण्डनं भाष्यकृता "मतौछ" इतिसूत्रेणैवोक्तरूपसिद्धिमाश्रित्य कृतं तदेव भेदानुकरणसाधकम्। तथाहि—सत्यभेदेऽनुकरणं स्वादृश्यमहिम्नैवानुकार्यमुपस्थाप-येत्, तथोपस्थितस्यापि अनुभवबलात्स्याच्छाब्दबोधविषयते-ति "अनन्य" इति न्यायेन नानुकार्यविषयिण्यनुकरणे शक्तिः क-ल्प्या स्यात्। एवं च सति प्रातिपदिकसंज्ञार्थमपेक्षितस्य शक्तिल-क्षणान्यतरज्ञानाधीनोपस्थितिप्रयोज्यबोधतात्पर्योच्चरितत्वरूपार्थव-त्त्वस्यानुकरणेऽभावेन प्रातिपदिकत्वाप्रवृत्तौ सुपोऽप्राप्त्याऽस्यवामा-द्यनुकरणशब्देभ्यो मत्वर्थे विहितछस्यानुत्पत्तिः स्यात्। भेदेतु अ-नुकरणादनुकार्योपस्थितये प्रकारान्तरस्यासम्भवात् अनुकार्यनि-रूपिता शक्तिरेव कल्प्या स्यात्। तथाचार्थवत्त्वात्प्रातिपदिकत्वेन-सूत्रेणैवास्य सिद्धतयोक्तवार्तिकं निष्प्रयोजनमिति। अपोयोनि-यन्मतुष्वित्यत्र मतुग्रहणमपि अनुकरणेषु भेदपक्षं ज्ञापयति। अन्य-था सप्तम्यन्तान्मतुपाऽनुत्पत्त्याऽनुकरणानां चाभिन्नत्वेनाप्रतिपदिक-त्वान्मतुपि परतो ऽप्शब्दप्रकृतिकसप्तम्या एवाभावेन शशविषाणक-ल्पायास्तस्याअलुग्बोधकस्योक्तमतुग्रहणस्य व्यर्थता स्यात्। तत्र म-तिश्चित्ति पाठपक्षे तु क्षियोदीर्घादित्यत्रत्याक्षियइतिपाणिनिनिर्देशस्य सानता बोध्येति दिक्।

रणेन चास्य वैकल्पिकत्वमपि ज्ञाप्यत इत्याह वैकल्पि-केति । अनुकरणस्यानुकार्यशब्दरूपमर्थ इत्यर्थवत्त्वात् प्रातिपदिकत्वम्, ततः सुबुत्पत्तिः। न चैवं "भू सत्तायाम्" इत्यादावपि स्यात्, अत एव निर्देशादनुकरणाद्विभक्त्य-भावोऽपि क्वचित् । गवित्ययमाहेत्यत्र वान्तस्यैवानुकरणम् अनुकार्यशब्दभङ्गभिया वलोपश्च न, "झलां जश्" इत्यादौ जश्त्वाभाववदित्यपि प्राहुः । इत्व इति । "ऋत इ-द्धातोः" इत्यनेनेति भावः । न च "धातोरुच्यमानं कार्यं तत्प्रत्यये भवति" इतिन्यायात् कथमत्वम् । "किरश्च पञ्चभ्यः" इत्येतत्सूत्रनिर्देशादेव तदप्र-वृत्तेः । कीरिति । कॄधातुरित्यर्थः । ननु इना (या) श्रिया सह वर्तत इतिविग्रहे "तेन सहेति तुल्ययोगे" इति बहुव्रीहौ "वोपसर्जनस्य" इति सहस्य सभावे आद्गुणे कृते स इत्यादिसिद्धौ तत्रैकादेशस्य पूर्वान्त-वद्भावेनाव्ययत्वात् सुपोलुगिति चेन्न, लिङ्गाद्यन्वय्यर्थ-प्रतिपादकत्वाद "अव्ययम्" इति महासंज्ञाया अन्वर्थत्वे-नास्याव्ययत्वाभावात्। न च सादेशात्पूर्वमन्तरङ्गत्वादा-द्गुणे ततः सहेत्यस्य सादेशे ऽदन्त एव न त्वेकारा-न्त इति वाच्यम् । "नेन्द्रस्य परस्य" इत्युत्तरपदवृद्धिप्र-तिषेधेन पूर्वोत्तरपदनिमित्तककार्योत्तरमेकादेश इति सा-

मान्येन ज्ञापनात् ।

ननु "स्वादिषु"इति योगं विभज्य स्वादिषु पूर्वं पदमिति तदर्थः । ततः "अ सर्वनामस्थानेऽयाचि"इति । तत्रायचीतिच्छित्वा प्रसज्यप्रतिषेधमाश्रित्य यजादौ सर्वनामस्थाने पूर्वं पदं न, मध्ये चेत्सुबन्तं तदपि पदं नेत्युक्तं भाष्ये । तथा च सावपि पदत्वसत्त्वात् से इत्यादिशब्दस्वीकारे "नान्तः पादम्"इत्यत्र "न चैङः पदान्तात्परो रुरस्ति"इति भाष्योक्तिर्व्याहन्येतेति चेन्न । योगविभागसिद्धस्य सौ पदत्वस्य क्वाचित्कत्वेनादोषात् । न च सय इत्यादावन्तर्वर्त्तिविभक्त्या पदत्वाद् "एङः पदान्तादति"इति पूर्वरूपेण भाव्यमिति वाच्यम् । उक्तरीत्या पदत्वाभावात्, "उत्तरपदत्वे च"इति प्रत्ययलक्षणप्रतिषेधाच्च ।

ननु "औतोऽम्शसोः"इत्यत्रामशसोस्तद्धितयोरपि सम्भवात् सुबन्तर्गतयोरेवेति कथं विशेषावगतिरित्याशङ्क्याचीत्यधिकारादजादिः शस्सुबेव सम्भवति न तु तद्धित इति निश्चित्याह साहचर्यादिति । न च गामित्यत्र परत्वाद् "अचो ञ्णिति"इति वृद्धिः, अनवकाशत्वादात्वस्यापवादत्वेन वृद्धेर्बाधकत्वात्, तदाह ओतो णिदिति । सूत्रे तपरकरणाद् गकारो न त्रिव-

क्षित इत्याशयः । तेनौकारान्ताभावाद् अल्विधौ स्थानिवत्त्वाभावाच्च चित्रगुरित्यादौ न दोषः । अन्यथाऽङ्गाधिकारे तदन्तविधिलाभात् स्थानिवत्त्वेन गोन्तत्वात् स्यादेव दोषः । ननु "ओतः" इति पञ्चम्यन्तत्वात् परत्वलाभेन हे भानो इत्यादौ प्रत्ययलक्षणेन सम्बुद्धिपरत्वाद् णिद्भावे वृद्धिप्रसङ्ग इत्यत आह विहितमिति ।

यदि वर्णग्रहणेऽपि लक्षणप्रतिपदोक्तपरिभाषा प्रवर्त्तेत इति मन्यते, तदा विहितविशेषणमिति नारब्धव्यम् । किं च "गोतो णिद्"इत्यत्र तपरकरणं प्रत्याख्याय चित्रगुरित्यादौ "गोः पूर्वत्वणित्त्वात्वस्वरेषु स्थानिवत्त्वप्रतिषेधः" इत्यनेनातिप्रसङ्गं समाधाय हे चित्रगो इत्यादौ लाक्षणिकत्वान्न दोष इति तत्रैव स्पष्टं भाष्ये । "द्योः सर्वनामस्थाने णित्त्वं वक्तव्यम्"इति "औतोऽम्शसोः" इत्यत्रोक्तं भाष्ये । पूर्वोत्तरमतयोरुभयोरपि भाष्यवार्त्तिकस्थयोर्युक्तत्वायुक्तत्वे विभावनीये इत्याहुः ॥

इति फक्किकाप्रकाशेऽजन्ताः पुंलिङ्गाः ॥

ननु रमतेः पचाद्यचि टाप्येकादेशस्य पूर्वान्तत्वेन प्रातिपदिकत्वात् सुपि सम्बोधने हल्ङ्यादिलोपे ऽपि "सम्बुद्धौ च" इति विषयसप्तमीत्वात् प्रत्ययलक्षणेन वा सम्बुद्धिगुणे सिद्धमिष्टमित्येङ्ग्रहणं तत्र विफलमित्याशङ्क्याह एङ्ह्रस्वादिति । सम्बुद्धौ प्रतिपदोक्तत्वेन शीघ्रोपस्थितिकतया हल्ङ्यादिलोपात् प्रथममेत्वे सत्यनेनैव लोपसिद्धिरिति भावः । अत एव सन्निपातपरिभाषा न प्रवर्तते । ननु रमाभिरित्यादौ एकादेशस्य पूर्वान्तवत्त्वेन ग्रहणाद् "अतो भिस ऐस्" स्यात् अत एवाबन्तस्य सर्वादिगणे पाठाभावेन सर्वनामत्वाभावमाशङ्क्यैकादेशस्येत्यादि समनन्तरं वक्ष्यति । न च तपरत्वसामर्थ्यान्नैस्, अकृतैकादेशे विश्वपाभिरित्यादौ कृतार्थत्वादिति चेन्न । वर्णमात्रवृत्तिधर्मस्य तेनातिदेशाभावात्(१) । अत एव षत्वे तुकि च एका-

(१) नचैवं वर्णमात्रवृत्तिधर्मस्योक्तस्थलेऽत्वस्य खट्वेत्यादावनतिदेशोऽप्यतथाविधस्यादन्तत्वस्य अतिदेशेनोक्तदोषो दुष्परिहर इति वाच्यम् । वर्णमात्रेत्यस्य वर्णमात्रवृत्तिधर्मघटितधर्मस्यानतिदेश इत्यत्र तात्पर्यात् । केवलतद्धर्मस्थलेतु व्यपदेशिवद्भावो बोध्यः । न चैवमपि क्षीरपेणेत्यसिद्धिः, तत्रैकाज्उत्तरपदत्वस्यैतदतिदेशमात्रलभ्यत्वादितिवाच्यम् । स्थानिविशिष्टाल्वव्याप्यधर्मघटितधर्मे उक्तनिषेधस्वीकारात् । वै० स्ववृत्तित्वंस्वस्थानिकादेशावृत्तित्वमिति सम्बन्धद्वयेन । तथा चात्राल्वव्याप्यस्याऽत्वधर्मस्य स्थानिनि अकारे विद्यमानत्वेन तत्स्थानिकादेशवृत्तित्वेन च स्थानिवैशि-

देशो ऽसिद्ध इत्यर्थकस्य "षत्वतुकोरसिद्धः" इतिसूत्रस्य चारितार्थ्यम् । अन्यथा ऽध्रीत्येत्यादावनेनादिवद्भावे सति "ह्रस्वस्य पिति" इति ह्रस्वप्रयुक्तुक्सिद्धौ तद्वैयर्थ्यमेव स्यात् । नन्वस्त्वेवम् वक्ष्यमाणे सर्वासामित्यादौ पूर्वान्तवत्त्वेन सर्वनामत्वे ऽप्याबन्तत्वं कथम् । न च परादिवद्भावेन लभ्यं तत्, "उभयत आश्रयणे नान्तादिवद्" इति चेन्न । "उभयतः" इत्यस्य भाष्यैकदेशिनोक्तेः । यद्वा लिङ्गविशिष्टपरिभाषयाऽऽबन्तस्य सर्वनामत्वम्, आबन्तत्वं तु परादिवद्भावेनेति, मूलोक्तं तु न युक्तमिति प्राहुः ।

सर्वस्यामित्यादौ स्याड्विधेराबन्तसर्वनाम्नोरपेक्षितत्वेनास्मदुक्तिरेव । मूलस्य तु सुड्विधेः सर्वनामत्वस्यापेक्षितत्वेन पूर्वान्तवद्भावस्यैवेहोपयोगात् प्रवृत्तिर्नायुक्तेति वस्तुगतिः ।

केचिदिति । निर्जरसिनेत्यादिपरिष्कर्तार इत्यर्थः । तन्निर्मूलमिति । पूर्ववत् सन्निपातपरिभाषाप्रवर्तकपरभाष्यादिविरोधेन स्वोत्प्रेक्षितमूलस्याप्रमाणत्वादिति भावः । नवीनानुरोधेन विभक्त्यादेशेभ्यः परत्वाज्जरसित्यत्रापि पक्षे दोषमुद्भावयति यद्यपीति । ननु जरसादेशो नुट्शीभावयोरपेक्षया परत्वादास्ताम्, एत्व-

याडामां तु जरसपेक्षया परत्वात्त एव जरसं बाधित्वा सम्पद्येरन्। मैवम्। एत्वे कृतेऽप्येकदेशविकृतन्यायेन जरसादेशप्रसक्त्या नित्यत्वेन जरस एव प्रवृत्तेः। न चैत्वमपि नित्यम्, जरसादेशे कृतेऽपि स्थानिवत्त्वेन तत्प्रसक्तेरिति शङ्क्यम्। प्रश्लेषस्य वक्तव्यत्वेन स्थानिवत्त्वाप्रवृत्तेः। याटमपि बाधते जरस् अन्तरङ्गत्वात्। आकाररूपापः परस्य ङितः सुपो विहितस्य याटो बह्वपेक्षत्वेन बहिरङ्गत्वात्। आममपि बाधते जरस् नित्यत्वात्। न चाकाररूपाबन्तात् परस्यामि कृते सन्निपातपरिभाषया जरसोऽप्रवृत्तौ न तस्य नित्यता, तस्याः परिभाषाया अनाश्रयणादिति सर्वथा प्रथमं जरसादेश एवेति भाव इत्याहुः।

उक्तरीतिमन्यत्राप्यतिदिशति **एवन्नासिति**। अन्त्विधित्वं व्याचष्टे **आकाररूपस्यैवेति**। स्थानिन आप आकारमात्राश्रयणे(१) तथात्वमिति भावः।

---

(१) इदम् आकारप्रश्लेषकभाष्यमते। न च "घसञ्ज्ञायां नदीतरे प्रतिषेध" इति वार्तिकात्, "उञि च पदे" इति पदेग्रहणलिङ्गाच्चानुबन्धविनिर्मुक्तपदार्थोपस्थितेः सिद्धान्तसिद्धत्वेनाप्पदबोध्याकारस्यैव सत्त्वादनल्विधाविति निषेधान्न तदवयवाकारग्रहणफलमिति वाच्यम्। अस्मिन् पक्षेऽनुबन्धानामुपस्थितिकाले-

अन्ये त्वाहुः—एत्वशीनुड्याडामां नित्यत्वात् प्रथममेतेषु कृतेषु क्वचिदजादित्वाभावात् क्वचित् सन्निपातपरिभाषया जरसो ऽनापत्तिरेव ।

यत्तु याटो बहिरङ्गत्वमामो नित्यत्वं चोक्तम्, तत्तु बहिरङ्गपदस्थशब्दमर्यादया बह्वपेक्षत्वालाभाद्भाष्यानुक्तत्वाच्च जरसादेशविषये विशिष्य सान्निपातपरि-

---

ऽसत्त्वेन वाक्यार्थबोधकाले सुतरामभावेन कार्यविशेषकत्वाभावात्तेन रूपेण तेषामुपादानं व्यर्थं मा भूदिति बोधकवृत्तिधर्माणां बोध्ये आरोपस्यावश्याश्रयणीयत्वेन अत्रापि विशिष्टरूपेणापः स्थानित्वात्तदाश्रयणात् । नचैवमपि आवृत्तिनः पकारेत्सञ्ज्ञकाकारत्वरूपधर्मस्य बोध्ये आरोपात्तस्यैव स्थानिधर्मतयाऽतिदेशे उक्तनिषेधप्रवृत्त्यैव सिद्धेरवयवाश्रयणं प्रश्लेषश्च वृथा । न च "न ल्यपि" इति लिङ्गेनानुबन्धकार्ये तन्निषेधाप्रवृत्तिः । यासुटो ङित्त्वेन तस्य क्वाचित्कत्वज्ञापनात् । इति वाच्यम् । प्रश्लेषपरभाष्यस्यैव सानुबन्धोपस्थितिज्ञापकत्वेन विशिष्टस्य स्थानितया विशिष्टवृत्त्याप्त्वधर्मस्याल्मात्रावृत्तितयोक्तनिषेधाप्रवृत्तौ तदवयवाकारस्याश्रयणात् । ननु अल्मात्रावृत्तित्वमित्यस्याल्वृत्तित्वे सति अलितरावृत्तित्वमर्थः । एवं सति एकत्वावच्छिन्नप्रतियोगिताकबहुत्वावच्छिन्नानुयोगिताकभेदस्य घटपटौ न घट इत्यप्रतीतेरनाश्रयणादपि तदंशाल्प्रातियोगिकभेदस्यासत्वेनाप्त्वस्यापि अल्मात्रवृत्तिधर्मत्वेनोक्तनिषेधप्रवृत्तिः सिद्धैवेति वाच्यम् । अलितरत्वस्य अल्त्वंप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वस्य धर्मे विवक्षणात्तस्य अत्वेऽसत्त्वात् । अत एव रामायेत्यस्य सिद्धिः, अन्यथा सुप्त्वस्याप्युक्तरीत्याऽल्धर्मत्वेन निषेधप्रवृत्तिः स्यात् । अत एव च कष्टायेत्यादिनिर्देशाः सङ्गच्छन्ते । इत्येषा दिक् ।

भाषाया अनित्यत्वमाश्रयतो भाष्यकृतो विरोधादुपेक्ष्यम् । पूर्वप्रतिषेधेन जरसादेशाद्विभक्त्यादेश एवेष्टो भाष्य इत्युक्तमेव । तस्मात्पूर्वोक्तपञ्चविधिषु कृतेषु ततो नुड्याटोरजादित्वाभावादितरत्र सन्निपातपरिभाषया जरसो ऽप्राप्तौ सर्वदोषोद्धाराज्जरानासिकादिशब्दे आकारप्रश्लेषस्य न फलं नापि मानमिति

अत एवानुपपत्तेरन्यशब्दे फलं दर्शयितुमुक्तरीतिमाह एवमिति । प्रत्याख्येयमिति । दीर्घग्रहणं हि अतिखट्वो निष्कौशाम्बिरित्यादौ स्थानिवद्भावेन ङ्याप्त्वमाश्रित्य लोपप्राप्तेर्वारणार्थम् । प्रश्लेषे तु ङ्यापोः स्थानिनोराकारेकारमात्राश्रयणे ऽल्विधित्वात् स्थानिवत्त्वाप्रवृत्तेर्लोपाप्राप्तौ व्यर्थत्वात्तस्येति भावः । "याडापः" इत्यादौ प्रश्लेषफलं दर्शयितुं चोदयति न चेति । स्वाश्रयमिति । स्वं श्रूयमाण आकारः, स आश्रयो ऽधिष्ठानं यस्य तत् । धर्मधर्मिणोरेकाधिकरणत्वात(१) तदाह आकारत्वमिति, ।

(१) वस्तुतस्तु आकारशब्दस्य सङ्ख्याशब्दत्वात् तस्य चैकव्यक्तिसन्निवेशितत्वादिभेदभिन्नत्वाद्वर्णैक्यमते डित्थादिशब्दवदत्रापि न किञ्चिदतिरिक्तं प्रवृत्तिनिमित्तम् घटादिशब्देष्विव अत्रानन्त्यव्यभिचारदोषाभावात्, किन्तु शक्यस्यैवाकारस्य प्रकारताविशेष्यतारूपविषयताद्वयेन भानम् अतस्तच्छब्दोत्तरत्वादेः प्रकारताव-

यत्तु यत्रादिसुब्निमित्तकमित्यर्थ इति, तत्त्वाकारस्य तथात्वेऽप्याकारत्वस्य तदभावादुपेक्ष्यम् । यद्वा यथा 'घटो ऽस्ति' इत्युक्ते घटत्वस्य पृथक्सत्त्वोल्लेखाभावात् समनियतत्वेन धर्मधर्मिणोः सत्त्वम्, तथेहाप्यास्तामित्यन्यत्र विस्तरः ।

स्थानिवद्भावेनाप्त्वमिति । न च ङ्याप्स्थानिको ऽदीर्घ आदेशो न स्थानिवदित्यर्थकेन "ङ्याब्ग्रहणे ऽदीर्घ आदेशो न स्थानिवद्" इतिवार्तिकेन ह्रस्वे आप्त्वस्य विच्छेदात् कथं दीर्घे स्थानिवत्त्वेनाप्त्वलाभ इति वाच्यम् । "याडापः" इत्यादिषु प्रश्लेषमाश्रित्य स्थानिवत्त्वनिषेधप्रत्याख्यानात्भाष्यमते शङ्कासत्त्वेनादोषात् ।

इदं च भाष्य एव स्पष्टं "याडापः" इतिसूत्रे । तद्यथा,—"अतिखट्वायेत्यत्र स्थानिवत्त्वाद्याट् प्राप्नोति

---

च्छिन्न आकार एवार्थः । एवं चाकारत्वस्याप्याकार एव पर्यवसानात्तस्यापि यन्निमित्तकत्वं सम्भवत्येव । यद्वा शब्दपरादस्माद्वाच्यार्थे एव त्वादिः । एवञ्चाकाराकारत्वयोः पर्यायता कुत्वकुपदयोरिव । अत एव वृद्धिसञ्ज्ञासूत्रीयं "कुत्वं कस्मान्न भवति चोः कुः पदस्येति" इति भाष्यं सङ्गच्छते । अनेकत्वमतेऽपि आकारशक्यानामानन्त्येन टिघुभादिपदवद्घ्यादिनानार्थपदेष्विव वा आकारपदस्यैव प्रवृत्तिनिमित्तत्वेन तस्यैव तदुत्तरत्वाद्यर्थत्वाद्वाच्यवाचकयोरभेदात्सम्भवति तस्यापि तन्निमित्तकता । यद्वा दर्शनान्तरवदस्माकं मते धर्मधर्मिणोर्भिन्नाभिन्नत्वेन न काऽप्यनुपपत्तिरिति दिक् ।

तस्य प्रतिषेधो वक्तव्यः, न वक्तव्यः, ङ्याब्ग्रहणे ऽदीर्घ इति स्थानिवत्त्वनिषेधाद्'' इति ।

याट् स्यादिति । न चाकारस्य लाक्षणिकत्वान्न स्यादिति वाच्यम् । अतिदेशविषये लक्षणप्रतिपदोक्त-परिभाषायाः प्रवृत्तावतिदेशवैयर्थ्यापत्तेरत आह आब-न्तं यदङ्गमिति । "प्रत्ययग्रहणे यस्मात् स विहितस्त-दादेस्तदन्तस्य ग्रहणम्" इतिपरिभाषयाऽतिखट्वेति य-दङ्गं न तदाबन्तम् यच्चाबन्तं खट्वेति न तदङ्गमिति न याडागमप्रसक्तिरिति भावः ।

ननूक्तपरिभाषयाऽऽबन्तग्रहणे ऽङ्गं प्रत्याबन्तस्य विशेषणत्वादाबन्तान्तं यदङ्गमित्यर्थादतिखट्वायेत्यादा-वाबन्तान्तमङ्गमित्यर्थाद्याट् स्यादेव । न चाङ्गेनै-वाबन्तं विशिष्याङ्गसंज्ञकं यदाबन्तं तस्माद्याडित्यर्था-न्न दोष इति वाच्यम् । अङ्गस्य विशेषणत्वे दृढतरमा-नाभावात्, "पदाङ्गाधिकारे" इतिवार्त्तिकेनाङ्गस्य विशे-ष्यताया एव लाभाच्च । खट्वाया अर्द्धं ऽर्द्धखट्वाया-मित्यादावुक्तार्थे सति याडनापत्तेश्चेति दिक् ।

किञ्च श्रुतमाकारं स्मृतमनुबन्धं चादायाप्त्वानु-सन्धानात् स्यादेव याडिति चेन्न । भाष्ये "अस्याकारस्य लाक्षणिकत्वान्न याड्" इत्युक्तेः । न चैवं सति खट्वायै

इत्यत्र याडनापत्तिः, सूत्रं तु निशायै इत्यादौ चरितार्थमिति वाच्यम् । यस्य रूपस्य लक्षणप्रवृत्तिमन्तरेणासम्भवस्तस्यैव लाक्षणिकस्य तत्परिभाषाविषयत्वेनात्र चैकादेशात् प्रागपि आत्वसत्त्वेनातद्रूपत्वाद् परिभाषाया अप्रवृत्तेः ।

ननु लाक्षणिकत्वादाकारस्येति कथमत्र समाधानम् । वर्णग्रहणे उक्तपरिभाषाया अप्रवृत्तेः, अन्यथा हरय इत्यत्रैकारस्य लाक्षणिकत्वाद् "एचो ऽयवायावः" इति न स्यादिति चेन्न । अनदः अदः अभवत् अदोऽभवदित्यत्र प्राप्ताम् "ओद्" इति सूत्रेण प्रगृह्यसंज्ञां निवारयितुं "लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्येत्येवं न भविष्यति" इति भाष्योक्तेस्तत्रापि परिभाषायाः प्रवृत्तेः, अत्रैव "लाक्षणिकत्वान्न याड्" इतिभाष्योक्तेश्च । अतिप्रसङ्गस्तूक्तस्यानित्यत्वाद्वारणीय इत्यधिकं नागेशीये ।

"अङ्गस्य" इत्याधिकारेण लाभे साक्षाच्छ्रुतत्वात्स्त्रियामिति त्रिचतुरोरेव विशेषणम्, न त्वङ्गस्येत्यभिप्रेत्याह स्त्रियामिति । तेन स्त्रीनिष्ठसङ्ख्यायां वर्तमानयोरित्यर्थः सम्पद्यते । तेनेहेति । त्रिशब्दस्य पुन्नपुंसकवृत्तित्वेऽपि समुदायस्य स्त्रियां वृत्तेः, अङ्गविशेषणत्वे त्वादेशः स्यादिति भावः । प्रियत्रिसेति । अङ्गविशेषणत्वे स्व-

न्नाऽव्याप्तिः स्यादिति भावः। प्रिया जस् त्रि जसिति स्थिते "अन्तरङ्गानपि" इति न्यायेन सुब्लुकि पुनः सुपि तदन्तविधिना निर्दिश्यमानपरिभाषया त्रिशब्दस्यादेशः। "नद्यृतश्च" इति कप् तु न, समासार्थालौकिकवाक्ये ऋदन्तोत्तरपदत्वाभावात्। "ऋदुशन" इत्यनङ्। अनित्यत्वादिति। "इकोऽचि" इत्यचिग्रहणमिह ज्ञापकम्। तद्यथा—भ्यामादौ नुमि सति "नलोपः प्रातिपदिकान्तस्य" इति लोप एव। न च "न ङिसम्बुद्ध्योः" इति निषेधात् सम्बुद्धौ नलोपो न भवतीति तत्रानिष्टवारणायाचीत्यावश्यकम्। सम्बुद्धिश्च लुका लुप्तेति प्रत्ययलक्षणेन नुमः प्राप्तिर्वाच्या प्रत्ययलक्षणं च "न लुमता" इतिनिषेधस्यानित्यतां विना दुर्लभमित्यज्ग्रहणं व्यर्थं सज्ज्ञापकं सामान्यापेक्षमित्याकरे स्फुटम्।

ननु कथं ज्ञापकत्वम्। "वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम्पूर्वविप्रतिषेधेन" इति वचनात् प्रथमं नुमि अतिराभ्यामित्यादौ नलोपे सत्यपि तस्यासिद्धत्वेन नुमा व्यवधानात् "रायो हलि" इत्यात्वं न स्यात्, पदाङ्गाधिकारान्नुमाऽङ्गस्य व्यवधानाभावे ऽपि नुम एवात्वे पूर्वस्य यणि रूपासङ्गतिर्वेति चेन्न। तत्र हि वृद्धिशब्देन विहितवृद्धेरेव ग्रहणादत्रात्वस्य

तथात्वाभावात् ।

ननु शुचीनामित्यादौ नुटि नुमि च सति "इन्हन्" इति नियमाद्दीर्घो न स्यादिति चेन्न । "नुमचिर—" इति पूर्वविप्रतिषेधेन नुमं बाधित्वा नुटि सकृद्गतिन्यायेन नुमो ऽप्रवृत्तेः, लक्षणप्रतिपदोक्तपरिभाषयाऽत्र नियमाप्रवृत्तेश्च । न च पञ्चत्रपुम्य इत्यादौ नुमि सतीगन्तोत्तरपदद्विगुत्वप्रयुक्तपूर्वपदप्रकृतिस्वरो न स्यादिति वाच्यम् । नुमः समुदायभक्तत्वेनावयवस्येगन्तत्वाविघातात्, अनिमित्तकत्वेनान्तरङ्गत्वात् प्रथमं स्वरस्यैव प्रवृत्तेश्च । बहुभिः कुलैरित्यत्र नुमि षट्सञ्ज्ञकत्वेन "झल्युपोत्तमम्" इति प्राप्त्या तदभावे ऽपि बहुशब्दस्यान्तोदात्ततया न स्वरे विशेषः । न च "अस्थिदधि—" इत्युत्तरार्थमज्ग्रहणम्, तत्रैव कर्त्तुमुचितत्वात्, कृतं चात्र तदनित्यत्वे ज्ञापकमिति स्पष्टं भाष्ये ।

द्वेरत्वे सत्याबिति । विभक्तिसन्निपातकृतमपि त्यदाद्यत्वं टापो निमित्तं भवत्येव, "न यासयोः" इतिनिर्देशेन तस्याः परिभाषाया अनित्यत्वज्ञापनात् । न चानिमित्तकत्वेन टापोऽन्तरङ्गत्वात्तत्र कर्त्तव्येऽत्वस्यासिद्धत्वम् । उक्तनिर्देशेनास्या अपि अनित्यत्व-

ज्ञापनात् । न ह्येकेनैकमेव ज्ञाप्यमिति राज्ञामाज्ञास्ति, किन्तु यावता विना स्वस्यानुपपत्तिस्तस्य सर्वस्यापि ज्ञापनात् । "सख्यशिश्वी"इति ङीषि "यस्येति च"इतीकारलोपे सखीशब्दे ऽपि सखिशब्दोक्तं कार्यमुद्भावयति प्रातिपदिकेति । विभक्ताविति । विभक्त्याश्रये कार्ये क्रियमाणे लिङ्गविशिष्टपरिभाषा नेष्यत इत्यर्थः । इदं च "ङ्याप्प्रातिपदिकाद्"इत्यादौ भाष्ये पठितम् । प्रातिपदिकपरिभाषाया अनित्यत्वमाश्रित्य दूषितं च तदिति दिक् ।

"ङिति ह्रस्वश्च"इत्यत्रास्ति वाक्यद्वयम् । एकत्र यू इति, स्त्र्याख्याविति, अस्त्री इति, इयङुवङ्स्थानाविति, वेति चानुवर्त्तते । अपरत्र तु यू इति, स्त्रीवाचकावित्येतन्मात्रार्थकं स्त्र्याख्याविति । तत्राद्ये इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गाविति त्रीणीदूतोर्विशेषणानि, ह्रस्वयोस्तु स्त्रियामिति । तथा चातिस्त्रिशब्दे पूर्ववाक्यस्याप्राप्तिरित्याशयेनाह ङितिह्रस्वश्चेति ।

ननु नित्यस्त्रीलिङ्गाविति ह्रस्वयोर्विशेषणं माऽस्तु । अन्यथा इष्वशनिप्रभृतीनामुभयलिङ्गानां मृदुपटुप्रभृतीना सर्वलिङ्गानां स्त्रीत्वे ऽपि नदीत्वं न

स्यात्, वक्ष्यमाणे कैयटमते नित्यस्त्रीत्वाभावात् । मतान्तरे ऽपि ह्रस्वांशे नित्यग्रहणव्यावर्त्यालाभाच्चेति अस्त्रीति ह्रस्वयोर्विशेषणं स्यादेव, ततश्च स्त्रीशब्दादन्यत्रभिन्नह्रस्वेवर्णोवर्णान्तादित्यर्थेन कथमत्र विकल्पप्राप्तिरित्यत आह **अस्त्रीति** । तत्र हेतुमाह **तत्सम्बद्धस्यैवेति** । "इयङुवङ्स्थानौ" इत्यत्र विशेषणीभूतस्यैवास्त्रीत्यस्य "ङिति ह्रस्वश्च" इत्यत्रानुवृत्तेरित्यर्थः । एकत्र विशेषणतयाऽन्वितस्यापरत्र ह्रस्वांशे विशेषणतयैवान्वयायोगादिति भावः । ननु "इयङुवङ्स्थानौ" इत्यनेनापि ह्रस्वस्य निषेधः किन्न स्यादत आह **दीर्घस्यायमिति** । तत्र ह्रस्वपदाभावादिति भावः । तदाह **न तु ह्रस्वस्येति** । **एवं चेति** । स्त्रीशब्दस्यैकदेशविकृतन्यायेनेयङ्स्थानत्वे ऽपि ह्रस्वान्तप्रयुक्त एव विकल्प इति पुष्कलम् । **प्रधीशब्दस्येति** । प्रकृष्टं ध्यायतीत्यर्थकस्येत्यर्थः । **वृत्तिकारादीनामिति** ।

तेषामयं भावः—आध्यै प्रध्यै इत्यादाववयवस्येयङुवङ्स्थानत्वाद् "नेयङुवङ्स्थानौ" इति नदीत्वनिषेधः प्राप्नोति, "सिद्धं त्वङ्गग्रहणात्, यस्याङ्गस्येयुवौ भवतस्तस्येदं ग्रहणम्, न चैतस्याङ्गस्येयुवौ भवतः" इत्युक्तं भाष्ये । तत्र न बहुव्रीहिः कबापत्तेः, किन्तु प्रकृष्टं ध्यायती-

त्याद्यर्थकं तत् । तत्र कैयटोक्तनित्यस्त्रीत्वाभावेन न-दीत्वाप्राप्त्या भाष्यासङ्गतिः । अतो "यू स्त्र्याख्यौ" इति सूत्रे "स्त्रीविषयावेव यौ यू नित्यम्"इति भाष्योक्तौ एवकारो भिन्नक्रमः, नित्यमेव यौ स्त्रीविषयावित्यर्थः । नित्येमेवेत्यस्य पदान्तरं विनाऽपीत्यर्थः । खलपूकटप्रूग्रामण्यादीनां क्रियाशब्दतया पुँल्लिङ्गे मुख्या वृत्तिः, पुंसः खलवयमुचितो धर्मः शक्तत्वाद्भयरहितत्वाच्च, अतस्तेषां न पदान्तरं विना स्त्रीवृत्तित्वम् । ध्यानादिकं तु स्त्रीपुंसयोः साधारणमिति । कैयटमत इति ।

अस्यायं भावः—पूर्वोक्तं नित्यस्त्रीत्वं ह्यसङ्गतम्, सूत्रभाष्याद्यक्षरमर्यादयोक्तार्थालाभात् । भाष्योदाहृते क्वापि न, "नद्यृतश्च"इत्यत्र ऋकारसाहचर्येण यस्य प्रवृत्तेः प्राग् नदीत्वम्, तदुत्तरपदक एव तत्प्रवृत्तेः । धीशब्दस्य चेयङ्स्थानत्वेन प्राङ् नदीत्वनिषेधाद् गतिपूर्वकत्वाद् यणपि सुलभः । तस्मात् सूत्रभाष्याद्यक्षरानुगृहीतं लिङ्गान्तरेति मदुक्तमेव युक्तमिति ।

अन्ये तु प्रवृत्तिनिमित्तैक्ये लिङ्गान्तराविशिष्टार्थानभिधायकत्वं तदित्याहुः ।

ननु नेयङुवङ्सूत्रे स्थानशब्दो भावल्युडन्तः,

स्थितिर्ययोरिति बहुव्रीहिः, तत्र सम्बुद्धिविषये तत्स्थितेरभावेन नदीत्वनिषेधाभावाद् ह्रस्वप्राप्तावपि तद्वारणाय तात्स्थितेरुपलक्षणतया व्याख्यानेनेयङादिविषये तत्सत्त्वादिति समाधाने ऽपि नेयङिति सूत्रमत्रयवत्रस्यैव नदीत्वनिषेधकम् । तदुक्तं भाष्ये,—"अवयवस्येयङुवङ्स्थानत्वान्नदीत्वप्रतिषेधः प्राप्नोति" इति । तथा च सुभ्रूशब्दे ह्रस्वः स्यादेवेत्याशङ्क्याग्रे भाष्ये "सिद्धन्त्वङ्गरूपग्रहणाद्यस्याङ्गस्येयुवौ भवतस्तस्येदं ग्रहणम्" इत्युक्तम् । यत्र नदीकार्याश्रये ऽङ्गे बाधकाबाधितेयङादिस्थितिः क्वचिद् दृष्टा, तस्य तदवयवस्य निषेध इति फलितार्थो भाष्ये इति व्याख्यातारः ।

एवं नदीत्वनिषेधाद् "अम्बार्थनद्योः" इति न ह्रस्व इत्याभिप्रेत्याशङ्कते कथं तर्हीति । हापितः कासि हे सुभ्रु बह्वेवं विललाप सः । विधिना त्वया हापितस्त्याजितः स रामो हे सुभ्रु कासीत्येवं बहु विललापेति तदर्थः । रावणेन सीतापहरणोत्तरं रामविलापपरम् । प्रमाद इति । विरहपीडितत्वेनानवधानलक्षणो ऽत्र प्रमादः, स च विरहपोषकत्वात् काव्ये गुणः । तादृशशब्दस्तु

व्याकरणविरुद्ध एव । केचन सामान्ये नपुंसकादिना समादधुरित्याह बहव इति । ननु "वा भावकरणयोः" इत्यतो वेत्यनुवर्तते, तेन प्रातिपदिकान्तेत्यनेन वैकल्पिकणत्वप्राप्तावपि तद्वारणाय "रषाभ्यां नो णः" इत्यस्माद् णकारोऽनुवर्तते तेन सिद्धाविहत्यणग्रहणं नित्यार्थमावश्यकमित्यत आह आरम्भसामर्थ्यादिति । वैकल्पिकस्यैवात्र णत्वस्य समीहितत्वे तु पूर्वेणैव तत्सिद्धावेतत्सूत्रवैयर्थ्यापत्तेरिति भावः । एवं चान्यथैव नित्यत्वलाभे णकारग्रहो नोपयोगीत्याह स्पष्टार्थमिति । स्पष्टतयाऽदृष्टार्थफलकमित्यर्थः ।

इत्यजन्ताः स्त्रीलिङ्गाः ।

---

सोरमिति। लुको बाधकत्वादिति भावः । परत्वादिति। अजरस् इ इति स्थिते प्रथममजन्तलक्षणे नुमि तस्याङ्गभक्तत्वादङ्गाव्यवधायकत्वे ऽप्यवयवस्य जराशब्दस्य व्यवधायकत्वेन निर्दिश्यमानपरिभाषयाऽपि जरसो न प्राप्तिः । अन्त्यादचः परस्तस्यैवान्तावयवो मित्स्यादिति मतेऽप्यवयवावयवः समुदायस्याप्यवयव इत्यभ्युपगमेन कथंचिज्जरसादेशे जाते ऽपि "सान्तमहतः"

इति दीर्घो न स्यादिति भावः । अपवादमिति । अदन्ते ऽपि लुकि वचनवैफल्यादिति भावः । सन्निपातेति । जराशब्दे सर्वथा नित्यप्रवृत्तिकयेति भावः ।

अन्ये त्वाहुः—अजरांसीत्यत्र नुम्जरसोः प्राप्तयोर्विप्रतिषेधेन जरसि झलन्तलक्षणो नुमिति ।

शब्दत्वेन सादृश्यं "न लुमता"इत्यस्यानित्यत्वं चेति प्रभृतिग्रहणस्य प्रकारार्थत्वे ऽपि भाष्यं सङ्गतमित्यभिमन्यमानं प्रत्याह वस्तुत इति । सुप्त्वेनैव सादृश्यम्, मांस्पचन्या इति "न लुमता"इत्यस्यानित्यत्वेन ङस्परत्वमिति भावः । न च"मांसस्य पचि युड्घञोः"इत्यनेनैव सिद्धम्, तस्याप्येतत्सिद्धार्थानुवादकत्वात् । उक्तप्रयोगे मासीत्यस्य "अयस्मयादीनि च्छन्दसि"इति सूत्रेण भपदसंज्ञयोर्यथा साधुता तथा बोधकेनात्र भत्वेनैव साधुत्वाद्भत्वबोधनादित्याशयेनाह संयोगान्तलोपो नेति । छन्दसीति । मासस्तकारः स्याद्भादौ प्रत्ययेइत्यर्थः । माद्भिः शरद्भिर्दुरोदरं तत्रेत्युदाहरणम् । सामर्थ्यादिति । अनुवर्तनेनैव छन्दस्यादेशे सूत्रेणैव सिद्धे तद्व्यर्थत्वादिति भावः । कैयटस्य भाष्ये ऽननुवर्तने ऽपि च्छन्दस्यपि प्रयोगे बाधकाभावादित्यपिशब्दार्थः ।

सन्निपातेति । एकमात्रावच्छिन्नाकारमाश्रित्य कृतो ऽयादेशः कथं तल्लोपे निमित्तं स्यादिति । तत्र यद्यपि "कष्टाय क्रमणे" इति निर्देशप्रापितदीर्घेण ह्रस्वत्वांशो निवर्तितः, तथाऽप्यत्वमादेशे ऽनुवर्त्तते; तर्हि परिभाषाविरोधः स्पष्ट एवेति भावः ।

परे तु व्याप्यात्वजातिरूपयञादिसन्निपातनिमित्तो दीर्घो न स्वसन्निपातविघातकलोपनिमित्तम् । सन्निपातपरिभाषायाश्च सान्निपातलक्षणविधिप्रवृत्तेः प्राक् तन्निमित्तभूतो यः सन्निपातस्तद्विघातकस्य स्वातिरिक्तस्य स्वयमनिमित्तमित्यर्थ इत्याहुः ।

अनित्यत्वाश्रये ऽत्र न दृढतरं मानम् । इदं भाष्यकैयटयोः स्पष्टम् ।

भाषितः पुमान्येन शब्देनेति सूत्रार्थे ऽनादिशब्दे तत्सत्त्वे ऽपि पीलुशब्दे ऽतिप्रसङ्गः स्यात्तस्माद्भाषितः पुमान्यस्मिन्प्रवृत्तिनिमित्तरूपे ऽर्थे इति बहुव्रीहिः । भाषणक्रियया स्वकरणतयाऽऽक्षिप्तशब्दश्च क्लीबेन समानानुपूर्वीकः समानार्थश्च गृह्यते प्रत्यासत्तेः, ततो ऽर्शआद्यच् । तस्मात् फलितम् प्रवृत्तिनिमित्तैक्ये इति । एकस्मिन्प्रवृत्तिनिमित्ते भाषितपुंस्कं यच्छब्दरूपमित्यर्थः । यस्य पुंन-

पुंसकयोरेकं प्रवृत्तिनिमित्तं तत् पुंवदिति वर्तुलार्थः । एवं चानादिशब्दस्योभयत्रारोपितादित्वं प्रवृत्तिनिमित्तमिति भवति पुंवत्त्वम् । न च भवति पीलुशब्दस्य, वृक्षे वृक्षत्वव्याप्यजातिः प्रवृत्तिनिमित्तम्, फले तु फलत्वव्याप्यजातिरित्येकजातेरुभयत्राभावादित्याह प्रवृत्तिनिमित्तेति ।

अयं भावः—शब्दानां प्रवृत्तौ कारणं चतुर्विधम्—जातिः, गुणः, क्रिया, संज्ञा चेति । एवं च जात्यवच्छिन्नो जातिशब्दो यथा घटादिः, गुणाद्यवच्छिन्नो यथा शुक्लश्चलो डित्थ इति । तदुक्तं "चतुष्टयी शब्दानां प्रवृत्तिः"इति भाष्ये । त्रयीपक्षे ऽपि "न सन्ति यदृच्छाशब्दाः" इत्यादिना भाष्य एव स्पष्ट इत्यन्यत्र विस्तरः ।

## प्राणामिति ।

माधवस्यायं भावः—नुटो निमित्तस्य ह्रस्वस्य सन्निपातस्य दीर्घेण विनाशावश्यकत्वेन तद्विषये सन्निपातपरिभाषाया विषय एव नास्ति । रामाणामित्यादौ"सुपि च"इति दीर्घो "नामि"इत्यनेन नित्यत्वाद्बाध्यत इति ।

अयं त्वाशयः "श्नान्नलोपः" इत्यत्र षाष्ठभा-

२३

ष्यकैयटविरोधादुपेक्ष्यः । "नामि" इत्यस्य नित्यत्व-मपि निराकृतं रामाणामित्यत्रेत्यरुचिबीजं हृदि निधा-याह वस्तुतस्त्वति । प्रीणामिति । ननु "हलि" इति विषयसप्तमीत्वात् प्रागेवात्वमिति चेन्न । आत्वे कृ-ते नुटोऽप्राप्त्या हलादिविषयत्वाभावात् । नन्वे-वमपि कृते "नामि" इति दीर्घे सन्निपातपरिभाषावि-रोधासम्भवादेकदेशविकृतन्यायेनात्वं दुर्वारमेवेति चेन्न । नामि परे सामर्थ्याद्ध्रस्वेकारस्य दीर्घैकारकरणेऽपि विजातीयात्वकरणे तु निमित्तेकारापाये नुटोऽपि निवृ-त्यापत्तेः, विजातीयकरणे सन्निपातपरिभाषाया विरो-धापत्तेश्च । अत एव श्रीपायेत्यत्र विजातीयलोपो नि-वारितः । एतेनात्रात्वं स्यादेवेति मूलोक्तमयुक्तमिति मन्दोक्तमपास्तम् ॥

इत्यजन्ता नपुंसकलिङ्गाः ॥

उपदेशे किमिति । धातोरित्यस्यावर्त्तनेन तु औपदेशिकस्य धातोरित्यर्थकेन दामलिहो व्यावृत्ता-वपि अधोगिति न सङ्गृह्येतातो दादेरित्यावर्तते । तत्रैकेनातिरिच्यमानेन दादिपदेनोपदेशकालो लक्ष्यत इत्यस्तूपदेशलाभः, तथाऽपि तस्य किं फलमिति प्र

श्नः । अव्याप्तेरतिव्याप्तेश्च परिहारः फलम् । लक्ष्ये लक्षणागमनमाद्या, अलक्ष्ये लक्षणगमनमन्त्येति । समाधत्ते अधोगित्यादिमाभूदित्यन्तेन । अटि सत्यप्यौपदेशिकदादित्वाददोषः । सम्प्रति दादिधातुत्वे ऽप्यौपदेशिकधातुत्वाभावान्नातिव्याप्तिः ।

वस्तुगत्याऽतिव्याप्तिपरिहार एव फलम्, धातोरवयवो यो दादिरित्यर्थेनाधोगित्यादेः सिद्धेः, वैयधिकरण्यान्वयस्तु गर्द्धबित्यादौ भष्भावसिद्धये आवश्यकः । स्पष्टं चेदं भाष्ये ।

केचित्तु व्यधिकरणषष्ठ्यैवाव्याप्त्यतिव्याप्तिपरिहारः । धातोरवयवो यो दादिस्तस्य हकारस्य घो भवतीति सूत्रार्थः । अधोगित्यादावडागमे 'अदोह्'इति धातुस्तदवयवो 'दोह्'इति तदीयो हकारस्तस्य घः । दामलिडिति धातोरवयवो यो दादिर्दामेति न तदीयो हकार इति घत्वाभाव इत्याहुः ।

ननु समानाधिकरणत्वमेकधर्मिबोधकत्वमेवेति कारके वक्ष्यते, तत्र विशेष्यविशेषणभावमात्रम्, वैयधिकरण्ये तु भेदः संसर्गो विशेष्यविशेषणभावश्च इति । अत एवोच्यते 'संभवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वम्'इति । एवं च लाघवात् समाना-

धिकरणत्वेनैवान्वयो ऽस्त्वित्याशङ्क्याह एकाच इति। एकाज्विशिष्टस्य धातोरित्यर्थे गर्द्धबित्यस्यानेकाच्त्वाद्भष्भावो न स्यादिति वैयधिकरण्येनैवान्वयो धातोरवयव इत्याद्युक्तः।

ननु धात्ववयवो धातुरिति व्यपदेशिवद्भावेनैव सिद्धावलं वैयधिकरण्यान्वयेन। मैवम्। "अर्थवता व्यपदेशिवद्भावः" इति भाष्योक्तेः, तर्हि दुहेर्घत्वे धात्ववयवमेकाज्रूपं दु इति, उघ् इति वा, तत्राद्यो न झषन्तो, ऽन्त्ये न बश्, दुघिति तु नावयव इति प्रकृतासिद्धिरत आह व्यपदेशिवदिति। "असहाये व्यपदेशिवद्भावो वक्तव्यः" इति आद्यन्तवत्सूत्रे भाष्ये व्यक्तम्। विशिष्टो ऽपदेशो मुख्यव्यवहारः, सो ऽस्यास्तीति, तेन तुल्यमित्यर्थः। ननु धुगित्यादेः प्रातिपदिकत्वात् कथं धातुकार्यमिति चेन्न। "असन्तस्य चाधातोः" इत्यादिनिषेधेन कारकं प्रत्यप्रधानभूतक्रियावाचकस्यापि धातुत्वज्ञापनात्। न च "धातोरुच्यमानं कार्यं तत्प्रयये भवति" इति परिभाषया धातुसंशब्दनेन विहितः प्रत्ययस्तस्मिन्नित्यर्थकतया कथमत्र धातुकार्यमिति वाच्यम्। अस्य पदान्तनिमित्तत्वेन प्रत्ययनिमित्तत्वाभावात्। अत एवा-

प्रशानिति चरितार्थम् । अन्यथा "मो नो धातोः" इत्यत्रापि परिभाषायाः प्रवृत्तौ नत्वानापत्त्या व्यर्थमेव स्यात् ।

ननु सुधियावित्यादावियङादिकं न स्यादुक्तपरिभाषाप्रवृत्तेरिति चेन्न । इयङादेर्वस्तुतो ऽङ्गस्यैवोच्यमानत्वादिति दिक् ।

ननु सर्वनामस्थाननिमित्तकत्वेन सामान्यत्वादामपेक्षया सुनिमित्तकत्वेन विशेषत्वं नुम इति 'सामान्यविशेषयोर्विशेषो बलीयान्' इति न्यायेन नुमाऽऽम् बाध्यतामित्याशङ्कयाह न बाध्यत इति । उपजीव्योपजीवकयोर्विरोधाभावेन बाध्यबाधकभावो नास्तीत्यभिप्रायेणोक्तम् । आदित्यधिकारादिति । "आच्छीनद्योः" इत्यस्मादनुवर्त्तनादित्यर्थः । आम् उपजीव्यः, नुमुपजीवकः । नन्वादित्यनुवृत्तावपि नित्यमनडुहि विद्यमानो यो ऽकारस्तस्मात् कुतो न भवति । मैवम् । मित्त्ववैयर्थ्यात् । अमा चेति । नुमपेक्षया सम्बुद्धिनिमित्तकत्वेन विशेषविहितेनापीत्यर्थः । उपजीवकत्वादेवेति भावः । दत्वं नेति । विधानसामर्थ्यात् सर्वत्राविकृतो नुम् भवितुमर्हतीति भावः । नन्वनड्वांस्तरतीत्यत्र "नश्छवि" इति रुत्वमपि न स्या-

त् । अत्र भाष्ये समाधानम्—"यं विधिं प्रत्युपदेशोऽनर्थकः, स विधिर्बाध्यते, यस्य तु विधेर्निमित्तमेव, नासौ बाध्यते । भवतिहि दत्वं प्रतिं नुम्विधिर्निरर्थकः, रुत्वं प्रति तु निमित्तमेव''इति ।

ननु हे अनड्वन्नित्यत्र सम्बुद्धिलोपे ऽवश्यं प्राप्तेऽम आरम्भादमो ऽपवादत्वेन तद्विषये सम्बुद्धिलोपानापत्तिः, विषयभेदे ऽप्यचि रादेशस्य नुडपवादत्वमाशङ्कितं सप्तमे भाष्य इति चेन्न । प्रत्ययलोपविधायकैः प्रत्ययानुत्पत्तेरेवान्वाख्यानेनापवादत्वस्यैवासम्भवादित्यधिकं नागेशीये ।

ननु इम इत्येवास्तु सूत्रम् । न च तिम् ष्टिम् इत्यादौ दोषः,"त्यदादीनाम''इत्यनुवर्त्य त्यदादीनामिमोऽः स्यादित्यर्थात् । न च त्यदादित्वाभावः । द्वेः प्राक् किमः पठितव्यत्वात् । एवं सति "किंसर्वनामबहुभ्यः" इत्यत्र किंग्रहणमकर्त्तव्यमित्यपरमनुकूलम् । तत्र हि "अद्यादिभ्यः" इति पर्युदासात् किमो ऽप्राप्तौ पृथक् पाठः । द्वेः प्राक् पठिते तु पर्युदासाप्राप्तौ सर्वनामत्वादेव सिद्धेः । न चेमावित्यादावयं स्यात्, अङ्गवृत्तपरिभाषया वारणात् । न चैवमप्यन्त्यस्य स्यात् । "नानर्थके" इति निषेधात्, "त्यदादीनामः" इति

सिद्धे आरम्भसामर्थ्याच्च । न च "कु तिहोः" इत्याद्यर्थं किम इति, अन्यथेमः क्वादेशे कद्वयं स्यादिति वाच्यम् । तत्रापि 'उ तिहोः' इति विन्यासात् । न चेहान्त्यस्योकारः स्यात्, "नानर्थके" इति निषेधादित्याशङ्कयाह अकच्सहितस्येति । किम इत्यस्याभावे ऽकचि टेरत्वे कक इति स्यादिति भावः ।

सिद्धान्ते तु तन्मध्यपतितस्तद्ग्रहणेन गृह्यते इतिपरिभाषया साकच्कस्य किंशब्दत्वाद्रूपसिद्धिः । न च सुबन्तात्तद्धितोत्पत्त्या सुबुत्पत्त्यनन्तरं परत्वात् कादेशे ततो ऽकचि कक इत्येव स्यादिति वाच्यम् । "प्रातिपदिकाद्" इत्येवाधिकारात्। सुपः शब्देन निमित्तत्वेनानाश्रयणादङ्गसंज्ञानिमित्तप्रत्ययानपेक्षणेन चाकचोऽन्तरङ्गत्वाच्च । ननु "निर्दिश्यमानस्य" इतिपरिभाषया साकच्कस्य कथमादेश इति चेन्न । कादेशविधानसामर्थ्यात्, 'आवृत्त्याश्रयणेन साकच्कस्यादेश' इति कैयटोक्तेश्च । उक्तसामर्थ्यात् किंशब्दे उक्तपरिभाषाया अप्रवृत्तिः ।

यत्तु सर्वत्राकज्विषये तस्या अप्रवृत्तिरिति । तत्तु न युक्तम् । 'भिन्धकीत्यत्राकचि कृते निर्दिश्यमानपरिभाषया हेर्धित्वं न प्राप्नोति' इति "हुझल्भ्यः"

इत्यत्र भाष्यविरोधात् । नन्विद ए इति स्थिते स्मैभा-वात्परत्वादनादेशे सकृद्गतिन्यायेन स्मै न स्यादत आह नित्यत्वादिति । न च स्मायादेशे ऽन् आदेशः, हलिलोपेन बाधनात् । न च प्रवृत्तियोग्यत्वं नित्यत्वम्, तच्च बाधिते ऽप्यस्तीति चेत्, लक्ष्यानुरोधेन बाधका-बाधितकृताकृतप्रसङ्गस्यैवात्राश्रयणादिति दिक् ।

नन्वत्वे हलि लोपेनाभ्यामित्यादेरनुदात्तत्वेनैव सिद्धावश्विधानं व्यर्थमत आह साकच्कार्थमिति । शित्त्वात् सर्वादेश इति भावः ।

यद्यपीह शिद्ग्रहणं व्यर्थम् । अकारस्याकारवि-धानसामर्थ्यादेव सर्वादेशसिद्धेः । तथाऽप्यनुदात्तत्वा-र्थमेवाकारविधानमित्याशङ्का स्यात्, तन्निवारणाय शि-द्ग्रहणमिति केचित् ।

अन्ये तु अ अ इतिप्रश्लेषेण सर्वादेशसिद्धेस्त-द्ग्रहणं न कर्त्तव्यम् । तत्र समुदायस्यैवार्थवत्त्वात्, तत एव विभक्तौ पूर्वस्यापदान्तत्वादतोगुणेन निर्देशसा-मर्थ्यादादेशप्रवृत्तिकाले अअइतिसमुदायः प्रवर्त्तत इत्याहुः । स्पष्टं चेदं भाष्ये ।

"अचः परस्मिन्"इत्यत्र पूर्वस्माद्विधाविति पञ्चमीसमासो ऽप्यस्तीत्याशयेन शङ्कते न चे-

ति । पूर्वत्रेति । अत्र बीजं शब्देन्दुशेखरे निरूपितम् । बहिरङ्गेति । "असिद्धं बहिरङ्गम्" इति-परिभाषयेत्यर्थः । "अल्लोपोऽनः" इत्यस्य भसंज्ञायाः प्रकृतिप्रत्ययापेक्षत्वेन बहिरङ्गत्वम्, "स्तोः श्चुना"इत्यस्य वर्णद्वयापेक्षत्वेनान्तरङ्गत्वम् । तथा चेयं परिभाषा ।

संज्ञापरिभाषाविषये पक्षद्वयं "यथोद्देशं संज्ञा-परिभाषम्" "कार्यकालं संज्ञापरिभाषम्" । दिशिरत्रोच्चारणक्रियः, अधिकरणार्थकश्च घञ्प्रत्ययः । उद्दिश्यते उच्चार्यते यत्रासावुद्देशस्तमनतिक्रम्य वर्तत इति यथोद्देशम् । यद्देशे उपदिश्यते तत्रैव वाक्यार्थबोधेन गृहीतशक्त्या गृहीतपरिभाषार्थेन च सर्वत्र शास्त्रे व्यवहार इति यथोद्देशपक्षार्थः । अत एव "परिभाषा एकदेशस्थिता सर्वं शास्त्रमभिज्वलयति प्रदीपवद्"इत्युक्तं समर्थसूत्रे महाभाष्ये । कार्येण काल्यते स्वसन्निधिं प्राप्यते, कार्येण स्वसंस्काराय स्ववृत्तिलिङ्गचिह्नितपरिभाषाणामाक्षेप इति यावत् । भाष्येऽपि "यत्र कार्यं तत्रोपस्थितमिदं द्रष्टव्यम्"इत्युक्तमिति कार्यकालपदार्थः ।

तत्राद्यपक्षे तावत् समाधत्ते यथोद्देशे इति । परिभा-

षाया देशं निर्दिशति षाष्ठीमिति । षष्ठे षष्ठाध्याये भवाम्, षाष्ठं वाहऊठ्सूत्रम्, तस्माज्जातामित्यर्थः ।

तद्यथा विश्वौह इत्यादौ वस्य यजादिप्रत्ययनिमित्तभसंज्ञाश्रयत्वात् सम्प्रसारणे "सम्प्रसारणाच्च"-इतिपूर्वरूपे "पुगन्त" इतिगुणे "वृद्धिरेचि" इतिवृद्धौ रूपसिद्धावूठ्ग्रहणं व्यर्थं सज् ज्ञापयति भवत्येषा परिभाषा "असिद्धं बहिरङ्गम्" इति ।

ननु "पुगन्त" इतिसूत्रे निमित्तमिको विशेषणम् अत एव भिनत्तीत्यादौ न गुणः, तथा च "नाजानन्तर्ये" इतिनिषेधात् कथं परिभाषाप्रवृत्तिरिति चेन्न । प्रत्ययस्याङ्गाकाङ्क्षित्वेनोपस्थितत्वात्तत्रैवान्वयात् पुगन्तेत्यादौ कर्मधारयाश्रयणेन प्रत्ययपराङ्गावयवलघूपधरूपेको गुण-इति "इको गुण" इत्यत्र भाष्यसम्मते ऽर्थे भिनत्तीत्यादौ दोषाभावाच्च । न च वार्यूह इत्यादिरूपार्थमूठ्ग्रहणम्, ज्ञापनपरभाष्यप्रामाण्येनानकारान्ते ऽकारान्तोपसर्गे चोपपदे वहेर्वाहेर्वा ण्विविचोरनभिधानात्, धातूनामनेकार्थत्वेनोहयतेः क्विपि रूपसिद्धेश्चेति दिक् । तथा चेयं सपादसप्ताध्यायीस्था त्रिपाद्यां न, "पूर्वत्रासिद्धम्" इत्यनेन त्रिपाद्या असिद्धेरित्याह अप्रवृत्तेरिति ।

नन्वस्तु तावदेवम्, कार्यकालपक्षे तु दोष एवे-

तिचेन्न। पूर्वं प्रति परस्यासिद्धत्वेनान्तरङ्गाभावेन पूर्वस्यान्तरङ्गनिरूपितबहिरङ्गत्वाभावात्तया तस्यासिद्धत्वप्रतिपादनासम्भवात्। न चानया पूर्वस्यासिद्धत्वात्तदभावेन पूर्वं प्रति परासिद्धत्वं पूर्वत्रेत्यनेन वक्तुमशक्यमिति वाच्यम्। एवं हि विनिगमनाविरहादुभयोरप्यप्रवृत्त्यापत्तेः।

ननु कार्यकालपक्षेऽपि त्रिपाद्यां परिभाषा प्रवर्तत एव। अत एव नृकुट्यां भवो नार्कुटो, नृपतेरपत्यं नार्पत्य इत्यादौ त्रिपादीस्थेऽन्तरङ्गे "खरवसानयोः" इति विसर्गे बहिरङ्गायाः "तद्धितेष्वचामादेः" इति वृद्धेरसिद्धत्वमुक्तं विसर्जनीयसूत्रे भाष्ये। एवं चात्र पक्षे "षपूर्वहन्धृतराज्ञामणि" इति निर्देशेनास्याः परिभाषाया अनित्यत्वात् समाधेयमिति चेन्न। भाष्य एव पूर्वोक्तबहिरङ्गत्वादिखण्डनात्। तदुक्तम्—"अयुक्तोऽयं परिहारो "न वा बहिरङ्गलक्षणत्वाद्" इति"।

किञ्च उरण्सूत्रे रेफस्य पूर्वान्तत्वं "विसर्जनीयप्रतिषेधो वक्तव्यो नार्कल्पिर्नार्कुट इत्याद्यर्थम्" इत्यपूर्ववचनमेवारब्धं भाष्ये।

अत एव निगाल्यत इत्यादौ लत्वार्थं "तस्य दोषः-" इति वचनम्। इतरथाऽन्तरङ्गत्वाण्णिलोपात् पूर्वं

वैकल्पिकलत्वासिद्धौ नारभ्येत ।

किञ्च सौत्रनिर्देशाश्रयणमगतिकगतिः। प्रतिदिवन्-शब्दे निर्देशाभावश्च । तस्मात् पक्षद्वये ऽपि परिभाषाप्रवृत्त्यभावाददोष इत्यधिकं नागेशीये ।

अथ वृत्रघ्न इत्यादौ एकाजुत्तरप्रातिपदिकान्त-कुमातिचेतिसूत्रैः प्राप्तं णत्वं निवर्तयितुं "हन्तेरत्पूर्वस्य" इतिसूत्रे ऽत्पूर्वस्येत्यंशो विभक्तो नियमरूपो ऽपवादः। स च "येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति"इति, ।

तत्र चास्ति पक्षद्वयम्—बाध्यसामान्यचिन्तापक्षो बाध्यविशेषचिन्तापक्षश्चेति । तदुक्तम्—'यदा लक्षणनिरपेक्षं कार्याणां बाधकत्वमिति दर्शनम्, तदा विध्यन्तरैरनाक्रान्तो विषयो नास्तीत्यविशेषात् सर्वकार्यं बाध्यमित्याद्यः । यदा लक्षणं बाध्यत इति दर्शनम्, तदा येन सर्वो विषय आक्रान्तस्तदेव बाध्यत इत्यन्त्यः' इति "उपसर्गस्यायतौ"इत्यत्राष्टमे कैयटे ।

तत्रान्त्यपक्षमूलकेन "अनन्तरस्य"इति न्यायेन "अत्पूर्वस्य"इति सूत्रं हन्तेरेव बाधकम्, आद्यपक्षे तु सर्वेषामपीत्युभयोः समकक्षयोः पक्षयोः कतरो ग्राह्यस्तत्राह योगविभागेति । ननु विभक्तसूत्रांशे "उपसर्गस्थाद्"

इत्यस्य निवृत्तिस्तत्फलमिति चेन्न । सामर्थ्यादेव तन्निवृत्तिसिद्धेः । अनन्तरस्येति । अत एव "संख्याव्ययादेः" इति ङीब्ग्रहणं चरितार्थम् । तद्धि अनन्तरस्य ङीष्विधेरभावाय । किञ्च "न क्तिचि" इतिसूत्रे दीर्घग्रहणं चरितार्थम् । तद्व्यन्तरितस्य "अनुनासिकस्य क्विझलोः क्ङिति" इतिदीर्घस्य "अनुदात्तोपदेशस्य" इत्यस्याभावायेति न्यायप्रचारः ।

न चैवं "न षट्स्वस्रादिभ्य" इति निषेधो ऽनन्तरस्य "ऋन्नेभ्यः" इति ङीप एव स्यात्, न तु व्यवहितस्य टाप इति वाच्यम् । तत्र स्वरितत्वप्रतिज्ञासामर्थ्येन तस्य न्यायस्य बाधितत्वात् ।

ननु विभक्तसूत्रस्य नियमरूपस्य विधिनिषेधरूपत्वाभावात् कथमत्र न्यायप्राप्तिरिति चेन्न । अन्यनिवृत्तिफलकसिद्धविषयकविधित्वमेव नियमत्वमित्यदोषात् । अत एव "पञ्च पञ्चनखा भक्ष्याः" इत्यत्र "भक्ष्यनियमे ऽभक्ष्यप्रतिषेधो गम्यते" इत्युक्तं पस्पशायां भाष्ये ।

अयं च न्यायः "शि सर्वनामस्थानम्" इत्यादिषु भाष्ये स्पष्टः ।

एकाजुत्तरेति । न चाल्लोपे एकाच्त्वं नास्ती-

ति शङ्क्यम् । पञ्चमीसमासे स्थानित्वस्त्वात् । न च पूर्वत्रासिद्धे तन्निषेधः । "तस्य दोषः संयोगादिलत्व"इत्युक्तेः । णत्वमपीति । अपिना प्रातिपदिकान्तकुमतिचेत्यनयोः सङ्ग्रहः । बाध्यसामान्यचिन्ताश्रयणात् सर्वेषां बाध इति भावः । न च "कुमति च"इत्यस्य सन्निपातपरिभाषयैवाप्राप्तिः । तस्या अनित्यत्वात् । इदमत्पूर्वग्रहणं हस्थानिककवर्गाभाववद्धन्तेरुपलक्षणम्, अतो बहुवृत्रहाणीत्यत्र, प्राघानि प्रघनाघन इत्यत्र च न दोष इति दिक् । "अगारैकदेशे" इति सूत्रे प्रघणप्रघाणयोः कृतणत्वयोरुच्चारणमुपलक्षणार्थत्वे मानम् ।

माधवेनोक्तमिति । अल्लोपे उत्तरपदस्यानच्त्वाद् "एकाजुत्तर"इत्यस्याप्राप्तौ "प्रातिपदिकान्त"इति विकल्पो वृत्रघ्णो वृत्रघ्न इति तद्भावः । तद्भाष्येति ।

"कुव्यवाये हादेशेषु णत्वप्रतिषेधो वक्तव्यः, वृत्रघ्नः, स्रुघ्नः, प्राघानि, हन्तेरत्पूर्वस्येत्यत्रात्पूर्वग्रहणं न कर्त्तव्यं भवति"इति भाष्येत्यर्थः । एवं च भाष्यवार्तिकयोर्णत्वाभावे तात्पर्येण विरोधः स्पष्ट एव । एतच्च वार्तिकाशयवर्णनानुग्रहमात्रं, न तु वस्तुस्थितिः । वार्तिकेन सूत्रावयवप्रत्याख्यानापेक्षया योगविभागमा-

श्रिस्य वार्तिकार्थोपसङ्ग्रहस्यैव न्याय्यत्वात्, स चो-पलक्षणार्थत्वेनोपसङ्गृहीतः। हादेशकवर्गव्यवाये इ-त्यर्थे आर्षत्वात् समास इति दिक् ।

ननु कुर्वन्नित्यादाविव संयोगान्तलोपस्यासिद्धत्वे-न नान्तत्वाभावात् "सर्वनाम—"इति दीर्घत्वं न स्या-दित्याशङ्क्याह इहेति । बहुलग्रहणादिति । बहू-नर्थान् लाति आदत्ते इतियोगेन क्वचित्प्रवृत्तिः क्व-चिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेवेत्यभियुक्तो-क्तेषु चतुर्विधार्थेषु क्वचिदन्यदेवेत्यर्थस्यात्र पूर्वं प्र-ति परं नासिद्धमिति विवक्षितत्वात् । ननु क्वचित्पदस्वा-रस्येन स्थलविशेषे नियमितत्वात् कथमेकत्र युगपद-र्थद्वयविकल्पो ऽसिद्धत्वाभावश्चेति चेन्न । क्वचित् प्र-योजने इत्यर्थात् । असिद्धत्वाभावकल्पने मानमाह तथा-चेति । "श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्द्धन्मज्ज-न्नर्यमन्विश्वप्सन्मातरिश्वन्मघवन्"इत्युणादिसूत्रेणम-हेर्हस्य घो ऽवुगागमः कनिप्रत्यय इति त्रितयस्य निपातनादित्यर्थः । प्रकारान्तरमाह मघशब्दादिति । धनार्थकादित्यर्थः । मतुपो मस्य वः । प्रत्याख्यात-माकर इति । "केशाद्व" इत्यत्र पञ्चमे कैयटे ।

तद्यथा—"मघवा बहुलम्"इत्येतन्न कर्त्तव्यं श्व-

न्नुक्षन्निति निपातनान्मघशब्दान्मतुपा च भाषायामपि शब्दद्वयस्य सिद्धत्वात् । तथा च मतुप्पक्षे "अत्वसन्तस्य चाधातोः" इतिदीर्घसत्त्वेन त्रादेशपक्षे ऽपि दीर्घो युक्तः । अन्यथा फलभेदे प्रत्याख्यानासम्भवादिति भावः ।

ननु अन्तोदात्तस्य त्रादेशे वकाराकारस्योदात्तत्वं भवति, मतुपि तु "ह्रस्वनुड्भ्याम्" इतिप्राप्तमतुबुदात्तत्वस्य "न गोश्वन्" इतिनिषेधेन पित्त्वादनुदात्तत्वे घोत्तराकारस्योदात्तत्वमित्यस्त्येव फलभेद इति चेन्न । त्रादेशपक्षे ऽपि दीर्घवद् बहुलग्रहणेन घोत्तराकारस्योदात्तत्वाङ्गीकारात् । ननु त्रादेशपक्षे मघवानस्ति यस्यामित्यर्थे मतुपि "उगितश्च" इति ङीपि मघवत्वतीति प्रयोगो निष्पद्यते । मतुप्पक्षे तु न ।

शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थकः ।

सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते ॥ इति—

सन्सूत्रभाष्यसिद्धान्ताद् मतुबन्तान्मतुपो ऽप्रवृत्तेरिरिति चेन्न । तादृशप्रयोगस्यानभिधानात् ।

ननु "सप्तद्वीपा वसुमती त्रयो लोकाश्चत्वारो वेदाः साङ्गाः सरहस्या बहुधा भिन्ना एकशतमध्वर्युशाखाः सहस्रवर्त्मा सामवेद एक विंशतिधा बा-

ह्वृच्यं नवधाऽऽथर्वणो वेदो वाकोवाक्यमितिहासः पुराणं वैद्यकमित्येतावान् शब्दस्य प्रयोगविषयः, एतावन्तं शब्दस्य प्रयोगविषयमननुनिशम्य सन्त्यप्रयुक्ता इति वचनं केवलं साहसमात्रमेव" इति पस्पशायां भाष्योक्तेः कथमनभिधानमिति चेन्नैष दोषः । यतो हि अनभिधानं तस्माच्छिष्टलोकस्य बोधाभावरूपमिति ब्रूमः । एवं च द्वयी विवक्षा प्रायोगिकी लौकिकी चेत्यादिना "तदस्यास्त्यस्मिन्" इत्यत्र भाष्ये कैयटे च स्पष्टम् । शिष्टाश्च शब्दतत्त्वविद इत्यपि पृषोदरादिसूत्रे स्पष्टं भाष्ये । बोधनिश्चयश्च कोशादित्यलमाकरव्यतिकरणकल्पनया ।

ननु "व्यथो लिटि" इत्यस्य "श्वयुव—" इत्यस्य च प्रदेशान्तरस्थस्य कथमनेन निषेध इति चेन्न । "सम्प्रसारणम्" इत्यतो ऽनुवृत्त्यैव सिद्धे पुनः सम्प्रसारणसामर्थ्यान्निषेधात् । न च व्यथेलिट्यादावस्य चारितार्थ्येन यून इत्यादौ पूर्वसवर्णदीर्घरूपैकादेशे तस्य "अचः परस्मिन्" इति स्थानिवत्त्वेन सम्प्रसारणत्वे ऽपि तेनैव स्थानिवत्त्वेनोकारव्यवधानात् कथमनेन निषेध इति शङ्क्यम्, "व्यथ" इति सूत्रे यग्रहणेनैव सिद्धौ सम्प्रसारणग्रहणस्यैतन्निषेधकतयैव चारितार्थ्यस्य

वक्तव्यत्वेन व्यवहितेऽपि प्रवृत्तेः, "यूनस्तिः" इति निर्देशाच्चेत्याशयेनाह **यकारस्य नेत्वमिति** । न चेदं व्यर्थम्, "इग्यण" इत्युपस्थितस्य पदैकवाक्यतयाऽन्वये निमित्तस्य यणा ऽन्वयेन 'येननाव्यवधानम्' इतिन्यायेन पूर्वस्य सम्प्रसारणाप्राप्तेरिति वाच्यम् । पदैकवाक्यतापक्षे ऽपि संज्ञासूत्राणां वाक्यभेदेनैव सम्बन्धस्यान्यत्र प्रपञ्चितत्वाद्विधायकेषु यण इत्यस्याभावात् । इदमप्यत्र ज्ञापकम् ।

ननु 'सकृद्गतौ' इतिन्यायेनोभयोः सम्प्रसारणे जाते निषेधो व्यर्थो निमित्तत्वानुपपत्तिश्चेत्यत आह **अत एव ज्ञापकादिति** । तदुक्तं भाष्ये "इहेङ्गितेन निमिषितेन महता वा सूत्रप्रबन्धेनाचार्याणामभिप्रायो गम्यते एतदेव ज्ञापयति परस्य पूर्वं भविष्यति" इति । ननु "लक्ष्ये लक्षणस्य" इतिन्यायेन कथं पुनः प्रवृत्तिरिति चेन्न । कार्याश्रयभेदेन लक्ष्यभेदादिति तिङन्ते निरूपयिष्यते । ननु ऋधातोर्विचि गुणे मतुप्यर्वन्तावित्यादि स्यात्, 'अदिप्रचति' इत्यादिना वनिपि अर्वेत्यपि, "छन्दसीवनिपौ" इति वेदेऽप्यर्वेति च सिध्यतीति किमर्थं सूत्रमित्याशङ्क्य नान्ततान्तयोः सर्वत्र प्रयोगे प्राप्ते सौ परे नञ्युपपदे च नान्तस्य प्रयोगो भवत्यन्यत्र

तु नान्तस्य नेति व्यवस्थापनायेदं सूत्रं "तृज्वत् क्रोष्टुः"इत्यादिवदित्यस्तु । तत्रानञ इत्यस्य को व्यावर्त्य इति पृच्छति **अनञः किमिति** । उत्तरयति **अनर्वेति** । यज्वशब्दसदृशो ऽनर्वशब्दो व्यावर्त्य इति दिक् । ननु "अस्थिदधि–"इत्यत्रोदात्ततयोच्चारणे कर्त्तव्ये उदात्तग्रहणेन "गुणा अभेदकाः"इति ज्ञाप्यते, तथा चात्र निरनुनासिकोच्चारणे ऽपि तपरसूत्रस्यानणि विधीयमाने ऽपि अण्प्रत्ययपदयोरनुवृत्तौ नियामकाभावाद्विध्यर्थत्वेनान्तरतम्याच्च नकारस्यानुनासिकः स्यादत आह **आआदिति** ।

ननु "परस्मैपदानां णलतुस्"इत्यत्राकारप्रश्लेषादनेकाल्त्वेन थस्य सर्वादेशवदत्रापि सर्वादेशः स्यादिति चेन्न । अत्र विशेष्यविशेषणभावान्वयेन विधेयत्वात् ।

वस्तुगत्या नात्र प्रश्लेषक्लेशः कार्य्यः, अन्यथैवोपपत्तेः । तथा हि—भाष्ये समाजग्रस्तगुणाभेदकजातिपक्षाभ्या प्राप्तस्य सवर्णग्रहस्याप्रत्ययग्रहणेन निषेधात् , "भाव्यमानः सवर्णान्न गृह्णाति" इतिनिषेधाच्च । न च "भाव्यमानो ऽण्" इत्यादिपाठादत्राकारस्यानण्त्वान्न निषेध इति वाच्यम् । अप्रत्ययग्रहणेनाणु-

दित्सूत्रे परिभाषां ज्ञापयता भाष्यकृता अणुघटित-पाठस्यानुक्तत्वात् । न च "चोः कुः" इत्यत्राग्राहकतापत्तिः । उदित्करणसामर्थ्यात् । एतेन गुणाभेदकत्वप्राप्तस्य न निषेधः । अत एव "यवलपरे" इति वार्त्तिकेनानुनासिकयकारादिविधानं न विरुध्यत इति मन्दोक्तमपास्तम् । तेन निरनुनासिकानां यादीना च विधानस्य सिद्धान्तितत्वादिति स्पष्टमुद्द्योते ।

ननु "अष्टन आ विभक्तौ" इत्यत्रापि शुद्धोच्चारणसामर्थ्यान्नानुनासिक इति चेन्न । "रायो हलि" इत्युत्तरत्रानुवृत्त्या चारितार्थ्यात् । न च तत्रापि प्रश्लेषः, शब्दतोऽनुनासिकव्यावृत्तेरलाभात् गुणाभेदकत्वेनान्तरतम्यादनुनासिकस्य दुर्निवारत्वात्, प्रश्लेषस्तु पर्यायेण सकलाकारविधानार्थः । तस्मादनण्त्वान्नानुनासिक इति बोध्यम् । स्पष्टं चेदं भाष्ये ।

इह तु भाष्यकाराः—'अनुनासिकविधाने हि प्रतिपत्तिलाघवाय तस्यैवोच्चारणे कार्ये तदनुच्चारणाच्छुद्धस्यैव विधानं भविष्यति' इति युक्त्यन्तरमेवाभिदधिरे । एतेन पथीयतेः क्विपि एकदेशविकृतन्यायेन पथीत्यस्याप्यात्वे न्थादेशे पन्था इत्यपास्तम् ।

अत्र शुद्धार्थं तदनुच्चारणस्यावश्यकत्वेन भाष्या-

सङ्गतेरस्यानभिधानस्यैव युक्तत्वात्।

नन्वदित्येवास्ताम् नकारेकारयोरत्वे सवर्णदीर्घेण समीहितरूपसिद्धेः। न च पररूपापत्तिः। "पथिमथ्यृभुक्षां लोपः, भस्य टेः, इतोऽत्सर्वनामस्थाने"इति न्यासेन नकाराश्रवणसिद्धावकारविधानसामर्थ्यादिति चेन्नैवम्। ज्ञानगौरवपरिहारेण स्पष्टार्थमाकारकरणात्। न च सिद्धान्ते ऽप्यादित्यनुवृत्त्यैव सिद्धेः "इतो ऽद्" इत्यत्रात्करणं व्यर्थम्। 'ऋभुक्षणमिन्द्रम्'इतिश्रुतौ "वा षपूर्वस्य निगमे"इतिसूत्रेण दीर्घविकल्पे ह्रस्वश्रवणफलत्वादिति दिक्।

ननु "विंशत्याद्याःसदैकत्वे सर्वाः संख्येयसंख्ययोः"इत्यमरोक्तेरेकवचनस्यैव लाभ इत्याशङ्क्यानुद्भूतावयवभेदे समूहार्थाभिप्रायेण तदुक्तावप्युद्भूतावयवभेदसमुदायार्थे द्विवचनादेरपि भाष्यसम्मतत्वाल्लाभादत आह **शतानीत्यादि**। **सन्निपातेति**। इदं स्पष्टं भाष्ये।

लक्षणप्रतिपदोक्तपरिभाषया न लुगित्यन्ये।

**गौणत्वे तु न लुग्नुटाविति**। "षड्भ्यो लुक्" "षट्चतुर्भ्यश्च" "अष्टाभ्य औश्"इत्यादिषु बहुवचननिर्देशस्यार्थप्राधान्यबोधकत्वेन षडाद्यर्थगतसंख्या-

भिक्षायीत्याद्यर्थे गौणे तदप्रवृत्तेरिति नव्याः ।

अन्ये तु 'षड्भ्यः' इत्यादिषु बहुवचनं नोक्तार्थसाधकम्, "तिसृभ्यो जसः" इतिवत्सिद्धार्थकत्वात्, सर्वत्र जातिनिर्देशस्यानौचित्यात्, तेषां बहुत्वाच्च, बहुवचनान्तानां सञ्ज्ञाबोधकत्वेनोपपत्तेश्च, किन्तु सर्वत्र विहिताविशेषणम् । परमपञ्चादीनामपि संख्याप्रकारकसंख्येयविशेष्यकबोधजनकत्वेन संख्यावाचितया षट्त्वमस्त्येव । लोके गणनायां प्रसिद्धानामेव ग्रहणमित्यत्र तु न मानम् । उपसर्जनत्वे ऽतिक्रान्ताद्यर्थस्य प्राधान्यम् न तु संख्याया इति न दोषः । षडित्यन्वर्थसंज्ञया न गौणे इत्यप्यसङ्गतम् । प्रियपञ्चा द्रौपदीत्यत्र "न षट्"इति टाबनिषेधानापत्तेः । सर्वनामसंज्ञावदत्रोपसर्जनप्रतिषेधानारम्भाच्चेत्याहुः ।

ननु "ष्णान्ता षड्"इतिविन्यासेन चतुःशब्दस्याप्यस्तुषट्संज्ञैव । चत्वार इत्यत्र लुगर इति न्यासात । नतु लाघवाभावः । "षट्त्रिचतुर्भ्यश्च, षट्त्रिचतुर्भ्यो हलादिः" इत्यनयोश्चतुःशब्दस्यानिवेशादिति चिन्त्यम् । अष्टानामित्यत्र नित्यत्वान्नुटः प्रागात्वेऽनान्तत्वेन संज्ञाभावान्नुटोऽप्रवृत्तिरित्याशङ्क्य "रायो हलि"इत्यस्माद्धलीत्यपकृष्टम् । अत एव "हलीत्युभयोः

शेषः" इत्युक्तं "ष्णान्ता–"इतिसूत्रे भाष्ये ।

तथा च जश्शसोर्विषये आत्वस्याप्रवृत्तेः कृताकारादित्यनुपपन्नमत आह कृतात्वेति । तदनुकरणेत्यर्थः । लक्षणवशसम्पन्नत्वे हि तस्य वैकल्पिकतयैव लाघवादष्टभ्य इत्येव वदेदिति भावः । सूत्र इति । दीर्घान्तादष्टनः परा ऽसर्वनामस्थानविभक्तिरुदात्ता स्यादिति तदर्थः । ज्ञापकादिति । तद्धि अष्टभिरितिह्रस्वे ऽन्तोदात्तनिवृत्त्यर्थम् । तथा च ह्रस्वनिवृत्त्यर्थं क्रियमाणं दीर्घग्रहणमात्ववैकल्पिकत्वे ज्ञापकम् । नन्वष्टाभिरित्यत्र दीर्घे लब्धावसरस्याष्टन इतिसूत्रस्याष्टभिरित्यत्र परत्वाज् "झल्युपोत्तमम्"इत्यनेन 'षट्त्रिचतुर्भ्यो या झलादिर्विभक्तिस्तदन्ते पदे उपोत्तममुदात्तं स्याद'इत्यर्थकेन बाधे "सकृद्गतौ"इतिन्यायेन पुनरप्रवृत्तौ व्यर्थमेव दीर्घग्रहणम् । अष्टाभिरित्यत्र "झल्युपोत्तमम्"इति तु न भवति, कार्यकालपक्षे ऽनान्तत्वेन षट्त्वाभावात्, अल्विधित्वेन स्थानिवद्भावाभावाच्चेति चेन्न । पुनःप्रसङ्गबोधद्वारेणैतद्विषये यथोद्देशपक्षस्यैवाश्रयणबोधनद्वारेण चात्वविकल्पे ज्ञापकं तद्ग्रहणमित्याशयात् । कुतः पुनरपवादत्वे परत्वचर्चा । न चाष्टौ पश्येत्यत्राष्टन्स्वरः सा-

वकाशः; न ह्यत्र षट्स्वरो लभ्यते, हलादित्वाभावादिति वाच्यम् । एतद्भाष्यप्रामाण्यादेवाष्टन्शब्दस्य घृतादिपाठादन्तोदात्तत्वेन "एकादेश उदात्तेनोदात्त" इत्येव तत्रान्तोदात्तत्वसिद्धेः । ननु षट्स्वरविधायके विहितविशेषणाश्रयणेन समासे गौणे च तदप्राप्तेः प्रियाष्टाभ्यामित्यादावष्टन्स्वरश्चरितार्थ इति चेन्न । एतज्ज्ञापकपरभाष्यमहिम्नाऽष्टन इत्यस्यापि विहितविशेषणेन समासादावप्रवृत्तेः । प्रियाष्टादीनामनभिधानस्य षटसंज्ञासूत्रभाष्ये स्पष्टमुक्तत्वाच्चेति दिक् ।

गौणत्वेति । "अष्टाभ्य"इति बहुवचननिर्देशेनार्थप्राधान्ये तत्प्रवृत्तेः, अन्यथा हि कृतात्वानुकरणे ऽपि एकवचनेनैव निर्दिशेत्—अष्टा औश् अष्ट औश् इति वा । आत इति योगविभागेनाकारलोपात् । तथा चौश्त्वविधौ कृतात्वनिर्देशबलेनानुमीयमानमात्वमपि प्राधान्य एवोचितम्, अत एव वक्ष्यति न गौणतायामिति नव्यमतम् । पूर्वस्मादपीति । न च "पूर्वत्रासिद्धे"इतिनिषेधः, "तस्य दोषः" इत्युक्तेः । न च तत्र संयोगादिलोपसाहचर्याल्लत्वस्येव णत्वांशे ऽपि प्रतिपदोक्तपरिभाषया "रषाभ्याम्"इतिनिष्पन्नस्य णत्वस्य निषेध इति वाच्यम् । "रषा-

भ्याम्"इत्यत्र "अपदान्तस्य मूर्द्धन्यः"इति सूत्रमनुवर्त्य णग्रहणं "पदान्तस्य"इतिनिषेधसूत्रं च प्रत्याख्यातं भाष्यकृता, तन्मते ष्टुत्वमूर्धन्यशब्दनिर्वर्त्यमानणकारे वैषम्याभावादुक्तपरिभाषाया अप्रवृत्तेः ।

कार्यकालपक्ष इति । अत्रापि पक्षे त्रिपाद्यां परिभाषाप्रवृत्तिरित्यभिमन्तुरर्वाचो मतेनेदम् । अत्र वक्तव्यं राज्ञ इत्यत्रोक्तम् ।

अथ बहुवचनं नोपसर्जननिवारकमित्युक्तम् । "अष्टन आ विभक्तौ"इत्यत्र विहितविशेषणेनोपसर्जने दोषाभावः । प्रियाष्टादीनामनभिधानमेवेति "ष्णान्ता" इत्यत्र स्पष्टं भाष्ये । अत एव "अष्टाभ्यः" इतिसूत्रे "विभाषा आत्वम्, यदयमात्वभूतस्य ग्रहणं करोत्यष्टाभ्य इति, अन्यथाऽष्टन इत्येव कुर्याद्"इत्युक्तं भाष्ये । पूर्वमते तु गौणे प्रवृत्त्यभावाय बहुवचननिर्देशस्यावश्यकतया भाष्यासङ्गतिरित्यधिकं नागेशीये ।

सूत्रान्तर्गतमलक्षणसिद्धं साधयितुमाह निपातनादिति । ऋतावुपपदे यजेः क्विन्, धृष्णोतेर्द्वित्वमन्तोदात्तत्वं च, सृजेः कर्मणि क्विन्नमागमश्च, दिशेः कर्मणि क्विन्, उत्पूर्वात्स्निहेश्च क्विन् उपसर्गदलोपः षत्वं च, अञ्चेस्सुप्युपपदे क्विन्नित्यर्थः । निरुपपदा-

दिति । "युजेरसमासे" इत्यसमासे नुमो विधानेन सोपपदात् "चोः कुः"इति सिद्धत्वेन क्विनि क्विपि च विशेषाभावादिति भावः । कनाविताविति । उपलक्षणं चैतद् उच्चारणार्थैकारस्यापि, तत्रापि "तस्य लोपः" इति प्रवृत्तेर्लोपात् । उच्चारणार्थानां विनैव शास्त्रमपगमस्तु न, इत्संज्ञकानामपि तथैव सिद्धेः "तस्य लोपः" इत्यस्य वैयर्थ्यापत्तेः । न च "अच्च घेः" इत्यादिविहितयोरदौतोः "न विभक्तौ" इतिनिषेधापत्तिरिति वाच्यम् । "इदमस्थमुः"इति मकारपरित्राणाय कृतेनोकारेण तस्यानित्यत्वज्ञापनादित्यन्यत्र विस्तर इत्याहुः ।

धातुपाठेति । व्याख्यानादिति भावः ।

अन्ये तु पूर्वोत्तराभ्यामञ्चुक्रुञ्चाभ्यां परस्मैपदिभ्यां साहचर्यात्कर्त्तरि सम्भवत्परस्मैपदकस्य ग्रहे पाक्षिकस्य तस्य "युजियोगे" इत्यस्यैव सम्भवादस्यैव ग्रहणम् । एतदुपजीवकत्वेन "युजेरसमासे" इत्यत्राप्यस्यैव ग्रहणमित्येतद्द ध्वनयन्नाह आत्मनेपदीति इत्याहुः । फणादिरेवेति । न च "श्तिपा शपाऽनुबन्धेन निर्दिष्टम्"इति गणनिर्दिष्टत्वाद्यङ्लुगन्ते राराष्टीति न स्यादिति वाच्यम् । तस्यच्छान्दसत्वेनादो-

षादित्याहुः। "त्यदादीनाम्"इत्यनुवृत्तौ तत्र चोक्ता भाष्येष्टिं स्मारयति द्विपर्यन्तानामिति। उच्चारणेति। "त्वाहौ सौ"इत्यत्रेत्यर्थः। चरितार्थत्वादिति। गौणेऽन्तर्गणकार्यत्वात् सत्वं न। त्वाहाविन्युक्तेऽतित्वमिति स्यादिति भावः। तदाह अत्वसत्वे नेति। तयोरन्तर्गणकार्यत्वात्।

ननु किमर्थमनन्त्ययोरिति, हे स इत्यादिसाधनार्थम्, अन्यथा परत्वात्त्यदाद्यत्वं बाधित्वा दस्य से सति हल्ङ्यादिना सुलोपे रुत्वविसर्गयोर्हे स इति सविसर्गं स्यात्। किञ्च, स्त्रियां सेति न स्यात्। वस्तुतोऽन्त्यस्य सकारेऽपि "पुनःप्रसङ्गविज्ञानात्सिद्धम्" इति न्यायेन सस्य त्यदाद्यत्वे रूपसिद्धिः। "सकृद्गतौ"इति स्वीकारेऽपि "तदोः सः सौ" इत्यनन्तरमदस इति योगं विभज्यादस एव दस्य सत्वं नान्यस्य दस्येति व्याख्ययाऽप्युक्तसिद्धिरिति अदृष्टफलकमनन्त्ययोरिति।

स्यादेतत्। 'तोः सः सौ'इति सूत्र्यताम्। नैतत्। अनेष इत्यादौ तवर्गीयनस्य सत्वापत्तेः। न च नुड्विधानसामर्थ्यम्। अनश्व इत्यादौ कृतार्थत्वात्।

ननु परित्यज्य तस्मादितिपदं नुगचीति सूत्र्यताम् । एवं तर्हि "नलोपः प्रातिपदिकान्तस्य"इति नलोपापत्तेः । विधानसामर्थ्यान्न नलोप इति चेत् । एवमपि ङमो ह्रस्वादचि ङमुट् स्यादिति तस्मादिति कर्त्तव्यमेव, टिदनुबन्धश्चेति यथान्यासमेवास्तु ।

कैयटास्तु तोरित्युक्ते ऽपि अनेष इत्यादौ नुडागमस्य पदद्वयापेक्षत्वादिति चिन्त्यमेव चिन्त्यमिति परिचस्करुः ।

ननु यद्यपि "त्वमावेकवचने" इति युष्मदः सिद्धस्त्वादेश इति त्वाहाविल्यत्र त्वग्रहणमनर्थकं, तथाऽपि युष्मानतिक्रान्तो ऽतित्वमित्यत्र युष्मदो ऽनेकार्थत्वाद्विधानार्थम् । एकत्रोपसर्जने चरितार्थत्वात् केवले परत्वात्त्वममाभ्यां बाध इति न वाच्यम् । 'त्वमावपि प्रबाधन्ते पूर्वविप्रतिषेधतः" इति वक्ष्यमाणत्वात् । तत्र मपर्यन्तस्यादेशो "शेषे लोपः" इति दस्य लोपे ऽजन्तादेशपक्षे "अतो गुणे" हलन्तादेशपक्षे तदभावे ऽप्यदन्तत्वाद् "अजाद्यतः" इति टापमाशङ्कते नन्वित्यादिना । अन्तरङ्गत्वादिति । परनिमित्तानपेक्षत्वेन टापो ऽन्तरङ्गत्वमिति भावः । "ङेप्रथमयोः"इत्यत्र युष्मानित्यत्र "तस्माच्छसो नः"इति नत्वमिति भा-

ष्येण लिङ्गबाधनात्, "साम आकम्"इत्यत्र"अलिङ्गे युष्मदस्मदी"इत्यपि भाष्येण लिङ्गाभावस्य बोधनादुक्तदोषमर्द्धमङ्गीकरोति सत्यमिति । अलिङ्गे इति । इयं भाष्योक्तिः । न टाबिति । इदं "सामः"इत्यत्र स्पष्टं भाष्ये । ननु "अलिङ्गे" इति भाष्यस्य पदान्तरसन्निधानं विना लिङ्गविशेषो युष्मदस्मच्छब्दमात्रान्न प्रतीयते इत्यर्थादस्त्येव लिङ्गसत्त्वम्, अत एव त्रिलिङ्ग्यामनयोः प्रयोगा न विरुध्यन्ते, न वा "शिशीनुम्लुग्विधिभ्यो युष्मदस्मदादेशा विभक्त्यादेशाद् विप्रतिषेधेन" इति "नेतराच्छन्दसि"इतिसूत्रस्थवार्त्तिकभाष्यवचनानीत्यत आह यद्वेति । इदं च "साम आकम्" "त्यदादीनामः" इत्यनयोर्व्यक्तं भाष्ये । यद्यपि 'शेषे' इति विभक्तिविशेषणे स्वविषये आत्वयत्वाभ्यां विशेषविहिताभ्यां लोपस्य बाधनाद् व्यर्थमेव, तथाऽपि तत्सार्थक्याय तेन प्रकृतिं विशेष्य समाधत्ते अधिकरणत्वेत्यादिना । वृक्षस्य शाखेति युक्ते वृक्षे शाखेतिवच्छेषस्येति वाच्ये शेषे इत्युच्यते । सप्तम्यन्तपक्षे ऽवशिष्टे ऽन्तस्य दस्य लोप इह तु सर्वस्य तदाह अद्शब्दस्येति । एवमप्यदन्तत्वमस्त्येव अत आह अन्तरङ्गे इति । अन्तरपेक्षत्वेनास्य तत्त्वं, लोपस्य

तु बहिर्भूतविभक्तिनिमित्तकत्वेन बहिरङ्गत्वमित्यर्थः। फलितमाह अदन्तत्वाभावादिति । ननु "वार्णादाङ्गं बलीयः" इति परिभाषया पररूपात्पूर्वमेव टिलोपः, तत्कथमदन्तत्वाभाव इति चेन्न । तस्या अनित्यत्वाङ्गीकारात् । अत्र "च्छ्वोः शूड्" इति सूत्रे सतुक्कनिर्देशो ज्ञापकः, अन्यथाऽऽङ्गत्वात्पूर्वं तुकः शादेशे तुको ऽप्राप्त्या तद्वैयर्थ्यं स्पष्टमेवेत्यन्यत्र विस्तरः। सर्वमेतददन्तादेशपक्षे, हलन्तादेशसर्वलोपपक्षयोस्तु टापोऽप्राप्तिरेवेति स्पष्टमाकरे ।

अन्ये तु बुद्धावित्यत्र "अच्च घेः" इत्यदौतोः कृतयोः सन्निपातपरिभाषया टाब् नेति यथा "कृन्मेजन्तः" इत्यत्र भाष्ये समाख्यातम्, तथाऽत्राप्यस्तु, किमुक्तातिक्लेशकल्पनयेत्याहुः ।

मपर्यन्तस्य किमिति । अधिकारसूत्रं किमर्थमिति प्रश्नः। अकच्सहितस्य तन्मध्यपतितन्यायेनादेशः स्यादित्युत्तरयति युवकामिति । ननु समुदायादेशत्वे ऽपि युष्मदस्मद्विषये त्वयकेत्यादिसिद्धये "ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकजन्यत्र तु सुबन्तस्य टेः प्राग्"इति व्यवस्थाया वक्ष्यमाणत्वेनान्तरङ्गत्वाद्युवामित्यादिसिद्ध्युत्तरमकजिति

नोक्तरूपासङ्गतिरित्यस्वरसादाह त्वयेत्यादि । अद्-विशिष्टस्यादेशे यकारान्तादेशे च रूपासिद्धिरिति भावः । ननु "यो ऽचि" इतिसूत्रम् 'अच्ये' इति विन्यस्याचि परे एकारादेशे ऽयादेशे चोक्तरूपस्य नासङ्गतिरित्यपरितोषादाह युवकाभ्यामित्यादि । उक्तव्यवस्थया भकारादौ सर्वनाम्नष्टेरकजित्यस्य श्रवणानापत्तेरिति भावः ।

ननु किमः कादेशविधानं न सर्वत्राकज्विषये निर्दिश्यमानपरिभाषानिवृत्तेर्ज्ञापकं किन्तु किंशब्दमात्रविषयें, अत एव भिन्धकीत्यत्र "अकचि कृते निर्दिश्यमानपरिभाषया हेर्धित्वं प्राप्नोति" इत्युक्तं "हुझल्भ्यः" इत्यत्र षष्ठे भाष्ये । एवञ्चोक्तपरिभाषया युवकाभ्यामित्यादावकच्श्रुतिरभ्याहतैव । अधिकारसूत्रस्य त्वादयो हलन्ता इति पक्षे त्वयेत्यादेरसिद्धिरादेशस्य सर्वादेशत्वं च न स्यात्तन्निवृत्तिरेव फलमिति चेन्न । अदन्तादेशपक्षे दोषाभावात् ।

नन्वेवं तर्हि मान्तस्येत्येवास्तु । मैवम् । युष्मयतेः क्विपि सुप्यादेशाभावार्थं तत्करणात् । पर्य्यन्तशब्देन मान्तापेक्षया शेषस्य लाभात् । कटिपर्य्यन्तं वास इत्युक्ते अग्रे किञ्चिदस्ती-

ति नियमेन प्रतीतेः। एवं च मान्ताद्यत्राग्रे किञ्चि-
दवशिष्टं तत्रैवादेशा इति क्वापि नादेश इति सर्व-
मत्रैव स्पष्टं भाष्ये।

हलन्तादेशटिलोपपक्षयोर्यूयमित्यादौ दोषाभावे
ऽप्यन्यत्र पक्षे दोषमुद्भावयति इहेति। आङ्गकार्यं
इति। एतेन "अङ्गवृत्ते पुनर्वृत्तावविधिः" इति परिभा-
षाऽर्थत उपनिबद्धा। अङ्गे ऽङ्गाधिकारे वृत्तं वर्त्तनं यस्य
तद् अङ्गवृत्तं शास्त्रम्, तस्मिन्वृत्ते सति पुनरङ्गस्या-
ङ्गवृत्तशास्त्रस्य प्रवृत्तौ प्राप्तायामविधिरिति तदर्थः।
इयं च भाष्ये स्पष्टा। तद्यथा "ज्यादादीयसः" इत्यत्रा-
ऽऽन्मास्तु, "बहोर्लोपः" इत्यतो लोपानुवर्त्तनेन "अकृ-
त्सार्व—" इतिदीर्घेण सिद्धं ज्यायानिति। "ज्ञाजनोर्जा"
इत्यत्र ह्रस्वो ऽस्तु, "अतो दीर्घो यञि" इति दीर्घे सिद्धं
जायते जानातीति। एवं सिद्धे यद् आकारं करोति
तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषाऽङ्गवृत्ते इति। अ-
नित्या चेयं "द्व्योरेकस्य" इत्यादिनिर्देशात्, तस्या अङ्ग-
सम्बन्धिकार्यविषयत्वात् प्रकृते प्रवृत्त्यभावाद्वेत्यस्व-
रसादाह मकारान्तरमिति। "शसो न" इत्यनेन संहि-
तया पाठे इति शेषः। इदमुपलक्षणम्। "जसः शी"-
इत्यत्र जसः स् इति सकारं प्रश्लिष्य सान्तस्य जस

इति व्याख्यानाद् "अतोऽम्"इत्यतोऽमित्यनुवर्त्यामम्मेवेति व्याख्यानाद्वेति बोध्यम् ।

अन्ये तु शेषविभक्तिभूतामादियुष्मदादिसन्निपातेन जातस्य लोपस्य तद्विघातकश्यादिनिमित्तत्वं नेति सन्निपातपरिभाषयैव श्याद्यभावः । सुटस्त्वाकमवयवत्वान्न तेन सन्निपातविघात इति सकारनिर्देशः "साम आकम्"-इत्यत्र । मूलोक्तं तु न युक्तम् । अत एव "नेतराच्छन्दसि"इतिसूत्रे "नपुंसकादेशेभ्यो युष्मदस्मदोर्विभक्त्यादेशा विप्रतिषेधेन"इति वार्त्तिकं व्याख्याय "कृतेषु पुनःप्रसङ्गाच्छिशीलुग्विधयः कस्मान्न भवन्ति, सकृद्गतिन्यायाद्" इत्युक्तम् । तव मते पुनःप्रसङ्गस्यैवाभावेन भाष्यासङ्गतिरित्याहुः ।

वस्तुगत्या न हि अम् लोपस्य निमित्तम्, किं तर्हि शेषत्वम्, तच्चास्त्येव कृतेऽपि शीभावे इति नोक्तपरिभाषाविषयः । अत एव यूयं ब्राह्मणकुलानीत्यत्राम्भावे कृते सकृद्गतिन्यायाश्रयणाद् "जश्शसोः शिः"इति शिभावो नेति भाष्योक्तं सङ्गच्छते । त्वन्मते सन्निपातपरिभाषयैव शीभावाप्रसक्तेर्भाष्यासङ्गतिः । तदुक्तभाष्यविरोधस्तु नास्त्येव, उपायस्योपायान्तरादूषकत्वात् । तस्मान्मूलोक्तमेव युक्तमिति वदन्ति ।

"भ्यसो भ्यम्" इत्यत्र भाष्ये "सन्देहो भवति भ्यम् अभ्यम् वा, यदि भ्यमादेशः, शेषेलोपोऽन्त्यलोप इत्येवं प्राप्नोति । अथाभ्यमादेशः, शेषेलोपष्टिलोप इत्यन्तस्योदात्तनिवृत्तिस्वरः प्राप्नोति । यथेच्छसि तथाऽस्तु" इत्युक्तम् । तदाह आद्य इत्यादि । "अङ्गवृत्ते" इत्यस्य अनित्यत्वेऽप्राप्तौ वा सन्निपातपरिभाषयोक्तरीत्या वारणीयमेत्वम् । पक्षद्वये ऽपीति । न चान्तलोपपक्षे पररूपं बाधित्वा सवर्णदीर्घः स्यादकारोच्चारणसामर्थ्यादिति वाच्यम् । एत्वनिवृत्त्या चरितार्थत्वात् । न च "अङ्गवृत्ते" इत्यनयैव वारणं सिद्धेऽकारो व्यर्थ इति शङ्क्यम् । तस्या अनित्यत्वज्ञापनार्थत्वात् । तत्रान्त्यलोपे द्वयोरकारयोः पररूपे "एकादेश उदात्तेनोदात्तः" इत्यनेनाभ्यम आद्याकार उदात्तः, टिलोपे ऽपि "अनुदात्तस्य च यत्र" इत्यनेन यत्रानुदात्ते वर्णे परे उदात्तो लुप्यते स वर्ण उदात्त इत्यर्थकेनोदात्त एवेति न विशेषः ।

वस्तुत इहाभ्यमेवादेशो भाष्याभिप्रेतः । अत एव "युष्मदस्मदोरनादेशे" इत्यत्र "न चादेशो हलादिरस्ति" इति भाष्योक्तं सङ्गच्छते । उक्तभाष्यस्य त्वयमर्थः—त्वं यथेच्छसि तथाऽस्तु,

तत्र दोषोद्धारो मया सुकर इत्येकदेशिनं प्रत्युक्तिरिति । एवं च टिलोपपक्षो ऽपि व्यर्थः, शेषग्रहणं तु प्रत्याख्यातमेव भाष्ये ।

ननु यद्यपि "योऽचि" इत्यत्राज्ग्रहणाभावे युवाभ्यामित्यादौ दोषस्तथाऽपि "युष्मदस्मदोरनादेशे" इति सूत्रे "रायो हलि" इत्यतो हलीत्यनुवर्तनेन परिशेषादत्राच्येव प्रवृत्तेरचीत्यस्य वैयर्थ्येऽपि विशेषविहितत्वादाकमादेशात् पूर्वमनादेशत्वाद्यत्वेन भाव्यम्, ततश्च शेषे लोपाभावे हलन्तत्वात् सुटोऽप्रसक्त्या साम इति निर्देशो व्यर्थ इत्यत आह भाविन इति। आकमि शेषे लोपे कृते प्राप्तस्येत्यर्थः । ससुट्कस्य स्थानिवत्त्वेन निर्देशसामर्थ्यान्निवर्त्तत इति भावः । न चोपसर्जनेऽतित्वाकमित्यादौ कथमादेश इति वाच्यम्। साम इत्यत्र तन्त्रेण केवलस्यामोऽपि निर्देशात् । एकशेषो वा । इत्थमुपपत्तिः—साम्पदस्यामृपदेन एकशेषः, असारूप्ये ऽपि विरूपाणामित्यस्य प्रवृत्तेः । एकत्र सुट्साहित्यार्थाधिक्ये ऽपि विशेष्यभूतस्यामो ऽन्येनामा समानार्थत्वात् । एवं चाकमः स्थानिवद्भावेनाम्त्वात् ससुट्कत्वाच्च साम इति प्रवर्तते, उपसर्जने तु प्रथमप्रवृत्त्यैव पर्यवसानम् । अत्राकमः स्थानिवद्भावेन नुट् तु न, अङ्गवृत्त-

परिभाषया, "ह्रस्वनद्यापः" इत्यत्र ह्रस्वान्ताद्विहितस्यामो नुडिति व्याख्यानेन वेति ।

अन्ये तु सामः प्रसङ्गे आकमिति सूत्रार्थः । तेनाम्सकारयोरत्र विषये ऽत्यन्तमप्रयोगो बोध्यते । यथाऽस्धातुविषये ऽस्तेरप्रयोगो भुवश्च प्रयोगो "अस्तेर्भूः" इत्यनेन प्रतिपाद्यते, न तु सतो निवृत्तिः, शब्दनित्यताहानेः, किन्तु प्रसक्तबुद्धेरेव निवृत्तिः । तत्र सकारबुद्धेः प्रकृते साम्प्रतिक्या असम्भवाद्भाविन्या ग्रहणम् सकारोच्चारणसामर्थ्यात्, तन्निवृत्तिश्चामो ऽभावात् । अत्र सामः स्थानित्वोक्त्याऽऽकामि स्थानिवद्भावेन साम्त्वमेव, न त्वाम्त्वम् । आम्येव साम्त्वस्याहार्य्यारोपेणादेशः, आदेशस्याम्त्वाभावाच्चोपसर्जने न नुट् । न च यत्र भावी सुट् तत्रैव आदेशो, न [illegible] तूपसर्जने । सामो भावित्वस्य सर्वथा दुरुपपादत्वादित्याहुः ।

ननु ह्रस्वादिरेवाकमस्तु । मैवम् । अन्त्यलोपपक्षे ऽप्यकारस्यैत्वनिवृत्त्या चारितार्थ्येन युष्माकमित्यादौ पररूपापत्तेः (१) ।

---

(१) वस्तुतस्तु आमो डाकम् इत्येव सूत्रमस्तु, डित्वाट्टिलोपे सुडाद्यप्राप्त्यैवेष्टसिद्धेरित्येतादृक्प्रयासो विफल एव । यथाश्रु-

ननु षष्ठ्यादिविशिष्टयोरित्यर्थलाभः कथम् । न च "पदस्य" इत्यधिकाराद्विभक्त्यन्तस्यैव पदत्वादिति वाच्यम् । उक्तरीत्या वसून्नसादौ दोषाभावे ऽपि भ्यामादौ विभक्त्यविशिष्टस्यापि पदत्वसत्त्वात् । एवं चोक्तार्थसम्पादनायास्तु स्थग्रहणमिति चेन्न । सर्वस्येत्यधिकारात् सामर्थ्यात् सर्वस्य विभक्तिविशिष्टस्य पदस्येत्यर्थसम्भवात् । अत एव षष्ठीचतुर्थीद्वितीयानामिति सूत्रिते ऽपि विशेषणेन तदन्तलाभात् षष्ठ्याद्यन्तयोर्युष्मदस्मदोरित्यर्थलाभो, न तु युष्मदादिसम्बन्धिनीनां षष्ठ्यादीनामित्यर्थ इति किं स्थग्रहणे-

---

तन्न्याससमर्थनाग्रहे तु यथा अस्तेर्भूरित्यनेनार्द्धधातुकविषये भूशब्दस्य प्रयोगोऽस्शब्दस्याप्रयोगो बोध्यते एवमनेनापि युष्मदस्मच्छब्दाभ्यां षष्ठीबहुवचने सुडामोरत्यन्तमप्रयोगो बोध्यते । न च पूर्वं सामोऽभावात्कथमत्र तत्प्राप्तिरिति वाच्यम् । साम्बुद्धिस्थल आकम्बुद्धिः कर्तव्येति शब्दनित्यतावादे आदेशादिविधायकसूत्रेषु सम्प्रतिपन्नसजातीयार्थेनादोषात् । साम्बुद्धिस्साम्प्रातिक्यसम्भाविनीति भाविनी गृह्यते, आहार्यबुद्धेर्लोके कार्याकरत्वस्य तीरे आरोपितगङ्गात्वेन स्नानादीनां वस्तुसद्गङ्गानिर्वर्त्यकार्याणामदृष्टेरपि वैयाकरणनये तस्या अपि प्रवृत्त्यादिकरत्वं स्वीक्रियते । अत एव पूर्वत्रासिद्धमित्याद्यतिदेशानां चारितार्थ्यम् । अतिदेशानां कार्यार्थत्वेन अतिदेशकत्वादेवाहार्यबुद्धिसंपादकेभ्यस्तेभ्यः कार्यानुत्पत्तौ तेषां वैयर्थ्यमेव स्यात् । एवं चात्राम्स्येव साम्त्वारोपेणादेशोऽन्त्यलोप इति पक्षेऽपि न सुटः प्राप्तिः, स्थानितावच्छेदकधर्मस्य प्रकृते साम्त्वस्यैव स्थानिवत्त्वेनातिदेशो नाम्त्वस्येति कल्पनादिति दिक् ।

नेत्यत आह स्थग्रहणादिति । अहान्यर्थे ऽत्र तिष्ठतिः, यथा समये तिष्ठ सुग्रीवेति । अत्र समयं मा हासीरित्यर्थो गम्यते । धातूनामनेकार्थत्वादत्र तल्लाभ इति भावः । तेन षष्ठ्यादीनविजहतोर्युष्मदस्मदोर्वैत्रादेशा इत्याह श्रूयमाणेति । इति युष्मत्पुत्त्रू इति । पदात्परत्वं सम्पादयितुमितिशब्दः प्रयुक्तः । युवयोर्युष्माकं वा पुत्त्रू इत्यर्थः, न तु तव पुत्त्रू इति । एवं सति त्वमादेशप्रसङ्गः । यद्यपि वृत्तौ संख्याविशेषो नावगम्यते, वृत्तेः स्वभावादिति स्पष्टं भाष्ये, तथाऽप्यवच्छेदकत्वेनैवानेकव्यक्त्यवगमो न द्वित्वादेर्भानं नाप्येकत्वस्येति वस्तुगतिः । प्रकृते तु सम्बोध्यत्वरूपावच्छेदकेनैवानेकव्यक्त्यवगतिरिति शास्त्रप्रवृत्त्युपयोगिवचनारोपे ऽपि श्रूयमाणत्वाभावान्नादेशः ।

केचित्तु वृत्तावेकत्वसंख्या प्रतीयते द्वित्वादिकं यत्नलभ्यम् । अत एव "संयोगस्य" इति सूत्रिते ऽपि विशेषणेनान्तलाभे संयोगावन्ते यस्येति द्विवचनान्तेन समासलाभार्थमन्तग्रहणम् । तेन प्रत्येकं संयोगसञ्ज्ञापक्षे सुदृषत्करोतीत्यादौ न लोप इति । तन्न सत् । अननुभवात् । किञ्च "अर्द्धं नपुंसकम्" इत्यत्रार्द्धं पिप्पलीनामित्यर्थे समासमाशङ्क्यैकाधिकरणेनेत्यस्या-

नुवृत्त्या समाहितं द्वितीये भाष्ये । पूर्वमते तूपसर्ज्जनपदार्थे एकत्वस्यैव भानात् समासप्रसङ्ग एव नास्ति, मम तु पिप्पलीत्वेनानेकव्यक्तिबोधादाशङ्कोचितैवेत्यधिकं नागेशीये ।

निमित्तनिमित्तिनोरेकवाक्यस्थत्वे इत्यर्थकं समानवाक्यइति । स्वसङ्केतं विषयीकरोति एकतिङिति । तिङ्पदेन तिङन्तं गृह्यते । बहुव्रीहिरत्र, एकतिङन्तघटितमित्यर्थः, तेन पचतीत्येतन्मात्रस्य न वाक्यत्वम् । ननु पश्य मृगो धावतीत्यादावेकवाक्यत्वप्रतिपादनपरभाष्यविरोधः । किञ्च, अस्तु एकतिङ्विशेष्यकं वाक्यम्, अत एव व्रजानि देवदत्तेत्यादौ सम्बोधनस्य क्रियान्वयनियमेन जानीहीत्यध्याहारेणैकवाक्यत्वप्रयुक्तानिघातस्वरः । एवमपि समानवाक्ये तिङ्द्वयलाभेन निघातव्यावृत्तये "तिङ्ङतिङः" इतिसूत्रेऽतिङ्ग्रहणस्यावश्यकत्वेन तत्प्रत्याख्यानपरभाष्यविरोध इति चेत् । न । पश्य मृग इत्यादौ लौकिकं वाक्यं, वार्त्तिकविषये तु स्वशास्त्रकार्योपयोगि निरुक्तमेकवाक्यमित्यदोषात् । एवमपि व्रजानि देवदत्तेत्यादौ कथम्, श्रूयमाणैकतिङन्तघटितमिति वर्त्तुलार्थेनोपपत्तेरिति दिक् ।

लौकिकं त्वमरेणोक्तम्—

सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्विता। इति।

अयमर्थः—वाकारश्चेदर्थे, कारकान्वितक्रिया चेद्बोध्येति शेषः। तेन निरर्थकशब्दसमुदायव्यावृत्तिः। सुप् च तिङन्तं च सुप्तिङन्ते, सुब्विशिष्टं तिङन्तं च सुप्तिङन्तं, तेषामेकशेषः। तेन कारकान्वितक्रियाबोधकः सुबन्तचयस्तिङन्तचयः सुप्तिङन्तचयश्चेति त्रिधा चैत्रेण शयितव्यम्, पचति भवति, चैत्रः पचतीत्यादिः क्रमेण बोध्यः। तुल्यार्थैरित्यादिवत्तृतीयानिर्देशेनैव सिद्धे युक्तग्रहणं व्यर्थमत आह युक्तेति। नपुंसके भावे क्तः। चादिपञ्चानां क्रमेण समुच्चयो, विकल्पो, ऽद्भुतं, खेदो, ऽवधारणं चेति पञ्चार्थाः। ते च चादिसमभिव्याहारे विशेष्यशब्देन वाच्याश्चादिभिर्द्योत्यन्ते, चादीनां द्योतकत्वादित्यन्यत्र विस्तरः। शब्दशक्तिस्वभावान्नित्यानुभवसिद्धत्वाच्च नित्यपरतन्त्रनियताः स्वार्थं परविशेषणत्वेनैव बोधयन्तीति। एवञ्च यत्र युष्मदस्मदर्थगतसमुच्चयादीन् द्योतयन्ति चादयः, तदा चादिभिः सहार्थद्वारा युष्मदस्मदोः साक्षाद्योगः, तत्रायं निषेध इति त्वां मां चेत्यादावादेशाभाव उदाहृतः। परम्परेति। स्वार्थाश्रयान्वय्यन्वयित्वादिरूपे इत्यर्थः। हरो हरिश्च मे इति। इह हरिहरगत-

समुच्चयं चशब्दो द्योतयति, हरिहराभ्यां त्वस्मदः स्वस्वामिभावादिसम्बन्ध इति भवत्येवादेशः । एवं च युक्तग्रहणेन ज्ञाप्यते 'अन्यत्र परम्परासम्बन्धे ऽपि निषेधः' इत्याशयेन समनन्तरं वक्ष्यति **परम्परेति** । तस्य स्वान्वितान्वयित्वादिरूपे इत्यर्थो, न तूक्तः, तस्य द्योतकाविषयत्वात् । तत्र तस्मिन् धातौ कर्मतयाऽन्वितं रूपं, तत्र युष्मच्छब्दार्थान्वय, इत्यस्ति परम्परासम्बन्धः । भाष्ये तूक्तम्—"पश्यार्थैश्च प्रतिषेधः समानवाक्य इति प्रकृत्य वक्तव्यः, इतरथा हि यत्रैव पश्यार्थानां युष्मदस्मदी साधनं, तत्रैव प्रतिषेधो ग्रामस्त्वां सम्प्रेक्ष्य गत इति, इह न स्याद् ग्रामस्तव स्वं सम्प्रेक्ष्य गत इति" । "समानवाक्ये" इतिकरणेन समानवाक्ये पश्यार्थैर्युक्तयुक्ते च युष्मदाद्यर्थे आदेशप्रतिषेध इत्यर्थं कैयटो व्याचष्ट । एवं च भाष्यकैयटाभ्यां "पश्यार्थैः" इत्यस्य युक्तग्रहणाभावे साक्षाद्योग एव प्रवृत्तिः, समानवाक्य इतीह संबन्धाद्युक्तयुक्ते ऽपि प्रवृत्तिरिति लभ्यते तस्य स्पष्टार्थत्वमेवेति । ननु "भाव्यमानः सवर्णान्न गृह्णाति" इति कथं ह्रस्वेन दीर्घसङ्ग्रहो ऽत आह **उ इतीति** । **ह्रस्वव्यञ्जनयोरिति** । व्यञ्जनस्य हि ह्रस्व ईषत्सदृश(१)

(१) द्विमात्रान्यूनकालिकत्वस्य ह्रस्वव्यञ्जनयोः सत्त्वेन तेन

इति भावः।

अत्राहुः—उ सु ऊ स् इतिद्वन्द्वे सुलोपे घ्यन्तत्वाद्ध्रस्वस्य पूर्वनिपाते नपुंसकह्रस्वसवर्णदीर्घयोः प्राप्तयोर्दीर्घस्य शब्दान्तरप्राप्त्या अनित्यत्वेन नित्यत्वादपरनिमित्तत्वेनान्तरङ्गत्वाच्च ह्रस्वत्वे ततः सवर्णदीर्घे उ इति रूपासिद्धेर्मूलोक्तं न युक्तम्। तस्माद् "दिव उत्" "ऋत उद्"इति च तपरकरणेन "भाव्यमानो ऽप्युकारः सवर्णान् गृह्णाति"इति परिभाषाया ज्ञापनेनात्र सिद्धिरिति।

वस्तुगत्या "शब्दान्तरस्य प्राप्नुवन्विधिरनित्यः" "अन्तरङ्गं बलीयः"इति परिभाषयोः सौत्ररूपसामर्थ्येनानित्यत्वात् पूर्वं दीर्घ एव ततो ह्रस्वः। किं च, समुदायस्यैव नपुंसकवृत्तित्वेन समुदायाश्रयणरूपबाहिरङ्गत्वस्य ह्रस्वविधेरप्यावश्यकत्वम्। अपि च आकृतेरेकतया शब्दान्तरेत्यस्य प्राप्त्यभावः। "ऊकाल" इत्यत्र स्पष्टार्थमेव समाहारो न निर्दिष्ट इति न मूलासङ्गतिः। अस्तु चोक्तरीत्या पूर्वं ह्रस्वस्ततो दीर्घ, एवमपि पुनर्ह्रस्वप्रवृत्तेः। न च "लक्ष्ये लक्षणस्य"(१)

---

रूपेण तयोः सादृश्यम्।

(१) अत्र तल्लक्ष्ये तल्लक्षणं सकृदेव प्रवर्तते इत्यर्थः।

इतिन्यायविरोधः, कार्यभेदेन लक्ष्यभेदस्य बहुत्राभ्युपगमात् । किं च तत्रैव लक्ष्यलक्षणन्यायः प्रवर्त्तते यत्र रूपासङ्गतिर्भविष्यति, इह तु पुनर्लक्षणप्रवृत्त्यैव रूपसिद्धिरिति वदन्ति ।

नन्वदस्यतीत्यत्रासेरितीकारस्योच्चारणार्थतया 'असान्तस्यादस' इत्यर्थे दोषाभावे ऽप्यदो ऽत्राद इत्यादावुत्वाद्यापत्तिरिति चेन्मैवम् । सग्रहणस्य सस्थानिकोकाररेफयोरप्युपलक्षणत्वादित्याकरे स्फुटम् । तथा चादसो ऽवयवदकाराभ्यां परयोरकाररेफयोरुत्वमत्वे चामुमुयङित्यादि सिद्धम् ।

ननु सूत्रे ऽदस इति विनिगमनाविरहात् स्थानषष्ठी तन्निबन्धनालोन्त्यपरिभाषोपस्थितिश्च, तथा चादसो यो ऽन्त्य इकारः स दात्परो न भवति रेफव्यवधानाद्, यश्च दात्परो रेफः सो ऽदसो ऽन्त्यो नेति कथमत्र शास्त्रप्राप्तिरित्याशङ्क्य भाष्योक्तपरिभाषामर्थतो विन्यस्यति अन्त्यबाध इति । अन्त्यस्य

---

अन्यथा लक्ष्ये यत्किञ्चिच्छास्त्रप्रवृत्त्यनन्तरं शास्त्रान्तरस्यापि प्रवृत्तिर्न स्यात् । तत्र तल्लक्ष्यत्वं च प्रथमप्रवृत्तावुपयोगित्वेनाश्रीयमाणो यावान् शब्दसमुदायस्तदघटको यस्तद्घटकोद्देश्यकविकारागमातिरिक्तस्तदघटितत्वमिति । लक्षणसमन्वयः पदकृत्यपुरःसरमन्यत्र प्रपञ्चितस्तत एवावगन्तव्य इति दिक् ।

बाधे कार्यप्राप्तावन्त्येन समानो देशो यस्य तस्य भव-तीति तदर्थः । अन्त्यसदेशत्वं चान्त्याव्यवहितपूर्ववर्त्तित्वं, तादृशत्वं च रेफस्यैवेति तस्योत्वम् । "ष्यङः सम्प्र-सारणम्"इत्यत्र षष्ठे भाष्ये "अनन्त्यविकारे ऽन्त्यसदे-शस्य"इति पठितम् । अन्त्यसदेशानन्त्यसदेशयोरेकप्रयोगे युगपत्प्राप्तावन्त्यसदेशस्यैवेति तदर्थो, ऽनन्त्यविकार इति लिङ्गमित्यधिकं नागेशीये । व्याख्यानान्तरमाह अः सेरिति । एवं विग्रहे एकदेशिसमासः । फलितमाह त्यदाद्यत्वेति । "त्यदादीनामः"इत्यनेन कृताकारान्त-स्यादस इति पाठार्थः, इह तु टेरद्व्यादेश इति भावः । इदमुपलक्षणम् "आ सर्वनाम्नः" इत्यस्यात्वस्या-पि, तेनामूदृगित्यादि सिद्धम् । उक्तपक्षत्रये वा-र्त्तिकं प्रमाणयति उक्तं चेति । लत्ववदिति । चली-क्लृप्यत इत्यत्र रीगृकारयोः "कृपो रो लः"इति यथा लत्वं, तथेहापीति प्रथमे दृष्टान्तः । सूत्रे अप्रत्यये इति पाठे ऽविद्यमानः प्रत्ययो ऽप्रत्ययः क्विबादिः, वप्रत्यये इति पाठे ऽपि अकारस्याविवक्षितत्वात्(१)

---

(१) अयं भाव.—सूत्रे वप्रत्ययशब्दे वकाराकारस्याविवक्षणे हल्रूपवकारमात्रस्य प्रत्ययस्यावस्थितत्वात्तस्य च "वेरपृक्तस्य" इत्यनेन लोपात्प्रत्ययस्याविद्यमानत्वं समामिति स एवार्थः । एवं चोभयविधेऽर्थे फलस्य तुल्यत्वमिति परमनिष्कर्ष इति ।

स एवार्थः । स च किमर्थ इति पृच्छति वप्रत्यये किमिति । तदभावे माऽस्तु इत्युत्तरयति विष्वगञ्चनमिति । अत्र ल्युटो ऽनादेशः । ननु तदभावेऽपि "अलुगुत्तरपदे" इत्यधिकारादेनत्सूत्रस्याञ्चुरूपे उत्तरपद इत्यर्थस्यावश्यम्भावाद्विष्वगञ्चनमिति ल्युडन्तस्य व्यावृत्तिसिद्धौ व्यर्थं तद्ग्रहणमत आह वप्रत्यये इति । अञ्चताविति समभिव्याहारात् सजातीयज्ञापनम् । तत्फलं चाहान्यत्रेत्यादि । "अतः कृकमि" इत्यादौ स धातुरादिर्यस्येति तदादिस्तेनाणाद्यन्ते ऽपि भवतीत्याह तेनेति । अन्यथा तत्र "नित्यं समासे" इत्यस्मादनुवृत्तसमासेनोत्तरपदाक्षेपे ऽपि कृधातुरूपे उत्तरपदे इत्यर्थापत्तावयस्कृदित्यत्रैव स्यादिति भावः । पूर्वस्मात् परं बलवत् विप्रतिषेधशास्त्रात्, तस्मान्नित्यं कृताकृतप्रसङ्गित्वमात्रात्, ताभ्यामन्तरङ्गं सिद्धत्वात्, तेभ्यश्चापवादो वचनप्रामाण्यादिति परनित्येतिपरिभाषायां बीजम्, तद्ध्वनयन्नाह परमिति । न च दीर्घस्याचरितार्थत्वात् कथं विप्रतिषेधत्वं, वचनसामर्थ्यात् पूर्वमुपधापदासम्बन्धने चारितार्थ्यात्तस्येत्यभिमानः । अयमभ्युच्चय इत्याह नित्यमिति । सामर्थ्यादिति । वाक्यार्थबोधकाले विरोधाभावेनोपधासम्बन्धे कृते सामर्थ्यात् पूर्वं दीर्घप्रवृत्ति-

रेव कल्प्यते इति भावः । ननु "एकानुबन्धकग्रहणे न द्व्यनुबन्धकग्रहणम्" इति चतुर्थे भाष्ये स्पष्टया परिभाषया मतुपो ऽग्रहणेन धीमानित्यादौ कथं दीर्घः । न च सूत्रसामर्थ्यादिति वाच्यम् । अनुनासिकोकारविशिष्टे भवतुशब्दे चरितार्थत्वादिति चेन्न । पकारस्य समुदायानुबन्धत्वे ऽप्यतुमात्रस्य द्व्यनुबन्धत्वाभावादित्यन्यत्र विस्तरः । "अत्वसन्तस्य" इत्यत्र चशब्दस्तुशब्दार्थे, अतु इति लुप्तषष्ठीकं पृथक् पदम्, तथा चाधातोरित्यसन्तस्यैव विशेषणम्, न त्वत्वन्तस्य, तुशब्दादिल्याशयेनाह धातोरपीति । एवमपि धातोरौपदेशिकस्यात्वन्तत्वाभावाव्द्यर्थो यत्न इत्यतो नामधातुं साधयति गोमन्तमिति । क्वचि "क्वौ लुप्तम्" इति निषेधादल्लोपो न स्थानिवत् । आचारक्विप्तु नवीनानुरोधेनात्रोक्तः "ह्रस्वनद्याप" इत्यत्र हलन्तेभ्यस्तदभाव इति स्पष्टं भाष्ये । ननूगित्त्वादेव सिद्धे ऽञ्ग्रहणं व्यर्थमत आह नियमार्थमिति । तच्छरीरमाह धातोश्चेदिति । नच 'अञ्चतेश्चेन्नलोपिन एव, तेन पूजार्थस्य न' इतिनियमसम्पादनेन तद्ग्रहणं चरितार्थं कथमुक्तार्थं ज्ञापयतीति, किं च, नुम्मात्रविषयको नियमो ऽस्तु

इति वाच्यम् । अचामिति नलोपस्याविवक्षितत्वात्(?) । नियमफलमाह **तेनेति** । अत्र नुम्न क्विबन्तस्य धातुत्वात्, उखास्रद् ब्राह्मणीत्यत्र नुम् 'उगितश्च'इति ङीप् च नेत्यर्थः । ननु गोमानित्यस्य धातुत्वात् कथं नुम् स्यात् अत आह **अधातोरितीति** । न चौपदेशिकधातुविषयक एव नियम उक्तो भवतु, किमनेनेति वाच्यम् । 'उगिदचाम्'इत्यत्र 'सप्तमे गोमत्यतेरप्रत्यये गोमान्'इति भाष्येणोक्तरूपस्यैव सामान्यापेक्षत्वादिति दिक् । **अधात्विति** । पूर्वं भूतो भूतपूर्वः, न धातुर्भूतपूर्वो ऽधातुभूतपूर्वस्तस्येत्यर्थः । तेन 'साम्प्रतिकाभावे भूतपूर्वगतिः'इति परिभाषा सिद्धा । **कुत्वस्यासिद्धत्वाद् वृक्षेति ष इति** ।

अयं भावः-"व्रश्च"इति निशादौ चरितार्थम्, "क्विन्प्रत्ययस्य"इत्यपि ऋत्विगाद्यंशे चरितार्थम्, तादृश् इति स्थिते परत्वात् "क्विन्प्रत्यय"इति कुत्वशास्त्रे प्राप्ते "पूर्वत्रासिद्धम्"इति षत्वविधिं प्रति कुत्वविधेरसिद्धत्वात् निष्प्रतिपक्षत्वेन षत्वमेवेति ।

ननु क्विबन्ते कथं "क्विन्प्रत्ययस्य"इत्यस्य प्राप्तिः । इत्थम्—प्रत्ययग्रहणेन बहुव्रीह्यर्थाश्रय-

णात् । तदुक्तं क्विन्प्रत्ययस्येत्यत्राष्टमे भाष्ये 'क्विनः कुरिति सिद्धे यत् प्रत्ययग्रहणं कृतं, तेन येभ्यः प्रत्ययो विधीयते तेषामन्यप्रत्ययान्तानामपि कुत्वं यथा स्याद्'इति । अत्र कैयटः—"व्रश्च"इति षत्वे प्राप्ते कुत्वेन शस्य खः, 'वाऽवसाने' इति चर्त्वेन कः, "पूर्वत्रासिद्धम्"इत्यसिद्धत्वं षत्वे कुत्वस्य नास्ति, प्रत्ययग्रहणसामर्थ्यात् षत्वापवादत्वात् कुत्वस्येत्याचष्टे तदाह षत्वेत्यादि ।

तस्यायमभिप्रायः—'क्विन् कुर्यात' इति न्यासेन दृष्ट इत्यध्याहारेण च बहुव्रीह्यर्थलाभे सिद्धे प्रत्ययग्रहणमन्यपदार्थे वीप्सागर्भबहुव्रीह्यर्थलाभार्थम्, तेन विशिष्य तादृक्छब्दादिविषयकलक्षणोपप्लवेन तादृक्छब्दविषये षत्वस्यापवादकं कुत्वं निरवकाशत्वादिति ।

अयमेवाशयो हरदत्तमिश्रादीनामपि बोध्यः । इदं च मतं भाष्यविरुद्धं, प्रत्ययग्रहणस्य बहुव्रीह्यर्थमात्रफलकतया एव तत्रोक्तत्वात् । तस्माद्दृत्विगाद्यंशे चरितार्थस्य कुत्वविधेर्नापवादत्वमिति स्थितम् । "इण्कोः'इत्यधिकारस्य पञ्चम्यर्थषष्ठीत्वादनानन्तर्ये षत्वाप्राप्तौ "नुम्विसर्जनीय''इति व्यवाये ऽपि

षत्वार्थम्, तत्र यथा "वृषलैर्न प्रवेष्टव्यम्" इति वृषलप्रवेशनिषेधपरेण वाक्येन प्रत्येकं समुदायस्य च प्रवेशाभावो बोध्यते, तथा नुमादीनां षत्वप्रतिबन्धाहेतुत्वप्रतिपादनायोपादानात् प्रत्येकं समुदायेन च व्यवाये षत्वप्राप्त्या निंस्स्वेत्याद्यर्थं 'निंसेः प्रतिषेधो वक्तव्यः' इति वार्तिकं, तत्प्रत्याख्याय भाष्यकृतोक्तम्—"योगविभागात् सिद्धम्, तद्यथा नुम्व्यवाये विसर्जनीयव्यवाये शर्व्यवाये इति, स तर्हि योगविभागः कर्त्तव्यो, न कर्त्तव्यः, प्रत्येकं व्यवायशब्दः परिसमाप्यत इति," । तदेवाह प्रत्येकमिति । निंस्स्वेति । णिसि चुम्बने, इदितो नुम्, तस्यानुस्वारः । नन्वाद्यसकारस्य प्रत्येकव्यवायादस्तु षत्वमिति चेन्न, आदेशप्रत्ययत्वाभावात् । न चास्मात्परत्र "आदेशप्रत्यययोः" इत्यस्य स्थितेः कथमत्र तदनुवृत्तिरिति वाच्यम् । "अपदान्तस्य मूर्द्धन्यः" 'इण्कोः" इतिवदस्याप्यधिकारसूत्रत्वेन स्वातन्त्र्येण विधायकत्वाभावात् । ननु 'अयोगवाहानां शर्षूपदेशः' इति हयवरट्सूत्रे भाष्योक्तेः शरन्तर्गतत्वेन यथा विसर्जनीयग्रहणं व्यर्थं, तथा नुम्ग्रहणमस्त्वित्यत आह उपलक्षणार्थमिति । व्याख्यानादिति । भाष्यकृ-

तादित्यर्थः । तत्रैवोक्तं भाष्ये "नुम्ग्रहणे नुमो यो-ऽनुस्वारस्तत्र यथा स्यादिह मा भूत् पुंसु" इति । तदेतदाह अत एवेति । ननु पिपठीष्षु इत्यादौ सनः सस्य रुत्वविसर्गयोः कृतयोः "वा शरि" इति वैकल्पिक-सकारे शरा व्यवाये सुपः सस्य षत्वे "अपदान्तस्य" इत्य-नेन "आदेशप्रत्यययोः" इत्यस्य बाधनाद्विसर्गस्थानिक-स्य सस्य ष्टुत्वेनैव सिद्धे सग्रहणमेवास्तु किं श-र्ग्रहणेनेति चेत्। भवेदेवं यदि भाष्यकृत् शर्ग्रहणमाश्रि-त्य विसर्जनीयग्रहणं न प्रत्याचक्षीत, न च नुमा नुम्स्थानिकानुस्वारमुपलक्षयेत । ननु "यचि भम्" इति प्रातिपदिकस्य भसंज्ञाविधानाद्धातोस्तदभावेन टे-रिति कथं प्रवर्त्तेत इत्यत आह सामर्थ्यादिति । सति गमके "टेः" इति भत्वं विनाऽपि प्रवर्त्तेत इति भावः । ननु अपवादत्वात् स्कोरिति प्रवृत्ते रूपासिद्धिरत आह षत्वस्येति । "आदेशप्रत्यय-योः" इति कृतस्येत्यर्थः । वश्चेति ष इति । सपाद-सप्ताध्यायीस्थकार्य्यप्रवृत्तियोग्यतायां त्रिपादीस्थस्याप्रवृ-त्तेर्हल्ङ्यादिलोपोत्तरं विविश् स् इत्यवस्थायां षत्वा-सिद्धया संयोगान्तलोपे षो भवतीति घटनार्थः । त-क्ष्णोतेः क्विपि पदान्तसंयोगादिलोपस्य संयोगान्तलोपा-

पत्वादकत्वात् कलोपे तडिति सिद्धम् । ण्यन्ते तु नेत्याह तक्षीति । णिलोपस्य "णेरनिटि" इति कृतस्य । स्थानिवद्भावात्, "अचः परस्मिन्" इतिजातात् । न च "क्वौ लुप्तम्" इति निषेधः, तस्यासार्वत्रिकत्वात् । अपवादस्याप्रवृत्तावुत्सर्गविधिप्रवृत्तेराह तस्मादिति । नच बहिर्भूतक्विबपेक्षत्वेन णिलोपस्य बहिरङ्गत्वात्संयोगान्तलोपे कर्त्तव्ये ऽसिद्धत्वं शङ्क्यम् । परिभाषाया अनित्यत्वात् । पदसंज्ञासापेक्षत्वेन संयोगान्तलोपस्यैव बहिरङ्गत्वादित्यप्यन्ये । ननु संयोगान्तलोपं बाधित्वा स्कोरिति स्यादत आह कुत्वस्येति । "चोः कुः" इतिविहितस्येत्यर्थः । पिपच्स्इत्यत्रस्थायां कुत्वासिद्ध्या ककाराभावेन स्कोरित्यस्याप्राप्तेः संयोगान्तलोप इत्याशयः । षद्लृ-इत्यस्माद् "भाषायां सदवसश्रुवः" इति लिटः क्वसुः, द्वित्वं, हलादिः शेषः, "अत एकहल्" इत्येत्वाभ्यासलोपौ, "वस्वेकाजाद्घसाम्" इतीट् शसादौ वसोरिति सम्प्रसारणमित्यनयोर्मध्ये तावत्प्रत्याह अन्तरङ्गइति । अन्तरपेक्षत्वेनेति भावः । अकृतेति(१) । न च "सम्प्र-

(१) अन्तरङ्गशास्त्राप्रवृत्तिसम्भावनाप्रयोज्या यत्र बहिरङ्गेण अन्तरङ्गनिमित्तविनाशसम्भावना तत्र पूर्वमन्तरङ्गं न प्रवर्तते. इत्यस्याः परिभाषाया अर्थः । गौरवभयादत्र न समन्वयः प्रदर्श्यते ।

सारणं तदाश्रयं कार्य्यं च बलवद्"इतिपरिभाषया सम्प्रसारणे कृते इटो ऽप्राप्तिरेवेति, "लिट्यभ्यासस्य"इत्यत्र भाष्ये उक्तपरिभाषायाः खण्डनात्, तच्च तिङन्ते वक्ष्यते। अन्ये तु पदात्वधिकमन्वाख्यानमिति पक्षे लक्ष्यानुरोधादाश्रीयमाणे सिद्धम्। सेट् वस् असिति स्थिते इट्सम्प्रसारणयोः प्राप्तौ प्रतिपदविधित्वेन शीघ्रोपस्थितिकत्वात् पूर्वं सम्प्रसारणे ततो वलादित्वाभावान्नेटः प्राप्तिरित्यकृतेति परिभाषा व्यर्थेति। न च विदेः शतुर्वसोरेकानुबन्धकत्वादेकानुबन्धकेति परिभाषया लिङादेशस्य क्वसोः सम्प्रसारणं न स्यादिति वाच्यम्। वसुसादेशेन तस्यापि ह्यनुबन्धकत्वादिति ङ्किसकारको निर्देश इत्यादिना तत्रैव सूत्रे षष्ठे स्पष्टं भाष्ये। ननु "षत्वतुकोः"इति सूत्रेण "सम्प्रसारणाच्च"इति पूर्वरूपत्वस्य षत्वे कर्त्तव्ये सिद्धत्वमिति चेन्न। पदान्तपदाद्योरेकादेशस्यैव तेनासिद्धत्वबोधनादिति स्पष्टं तृतीये "ई च खन" इत्यत्रान्यत्र च भाष्ये। ननु प्रातिपदिकाधिकाराद् बहिर्भूतत्वेनाविशेषाद्धातोरप्युपधाया दीर्घः स्यादत आह सान्तमहत इति। साहचर्य्यादिति। महतः प्रातिपदिकत्वाव्यभिचारादिति भावः। ननु महान्तमि-

च्छतीत्यर्थे क्यच्, ततः क्विपि महतोऽपि धातुत्व-मस्तीति चेन्न । औपदेशिकधातुत्वस्याभावात्तत्साह-चर्य्येणौपदेशिकधातुभिन्नासन्तसंयोगस्य ग्रहणमित्य-भिप्रायात् । न च सुहिंन्नित्यत्र "सर्वनाम्—"इतिदीर्घो-ऽस्तु, संयोगान्तलोपस्यासिद्धत्वात् । प्रत्ययस्योगि-त्त्वेन सिद्धे उकारस्य वैयर्थ्यमाशङ्क्याह उच्चारणार्थ इति । प्रत्ययस्योगित्त्वं सफलयति बहुपुंसीति । न चात्राप्यन्तर्वर्त्तिनीं विभक्तिमाश्रित्य तस्यां परतोऽसु-ङ्स्त्वास्तु इति वाच्यम् । अनुवृत्तसर्वनामस्थाने इ-त्यत्र विवक्षितसप्तमीस्वीकारात् । अत एव परमपुमा-नित्यत्रासुङि समासान्तोदात्तत्वं भवद् असुङ एवाका-रस्य भवति । परसप्तम्यां नैतत् सिध्येत् । सर्वना-मस्थाने प्रागेव पुम्शब्दोकारस्योदात्तत्वे कृते स्रंस-नधर्मिणो हलः स्थाने तद्धर्मणोऽनुदात्तस्यैवादेशस्य प्रसङ्गात् । उक्तं च सप्तमे प्रकृतसूत्रे भाष्ये—"अ-सुङ्युपदेशिवद्ववचनं स्वरसिद्ध्यर्थं बहिरङ्गलक्षणत्वाद्" इति । ननु बहुपुंसइत्यवस्थायां सर्वनामस्थान-विवक्षोत्तरं ङीबस्तु, नैतत्, प्रातिपदिकत्वप्रयुक्तका-र्य्याणां क्रमिकत्वस्वीकारस्योक्तत्वात् । न च ङी-बन्तस्याप्यसुङ् स्याल्लिङ्गविशिष्टपरिभाषयेति । "विभ-

क्तौ लिङ्—''इतिनिषेधात् ।

अत्र वदन्ति, विवक्षितसप्तम्यामपि विभक्तिबुद्धिनिमित्तकत्वेनासुङो बहिरङ्गत्वात्तत: पूर्वं परमपुमानित्यत्र समासान्तोदात्तप्रवृत्तेर्दोष एव । किं च परसप्तमीपक्षो ऽपि सुपपादः, अकृतव्यूहपरिभाषाया बहिरङ्गपरिभाषापवादकत्वादिति, तन्न । बहिरङ्गपरिभाषायां बुद्धिकृतबहिरङ्गत्वाश्रयणे बहूपप्लवापत्तेः; अकृतेत्यस्या असत्त्वाच्च, बहुपुंसीत्यत्रासुङ्प्रवृत्तेश्चेति दिक् ।

पूत्र इति । पातेरिति पाठान्तरम् । स्त्रियामित्यत्र चतुर्थे सूते: सस्य पो ह्रस्वो म्सुन्प्रत्यय इति भाष्यकैयटयोरुक्तम्, उभयथाऽपि न दोष इत्याह प्रत्ययस्येति । ननूच्चारणार्थानामपीत्संज्ञाया आवश्यकत्वादियमुक्तिर्निष्फलेति चेन्न । उच्चारणमात्रार्थतदतिरिक्तार्थयोरित्सञ्ज्ञया ऽपगमाविशेषे ऽप्येकस्य (प्याद्यस्य) कार्य्याप्रवर्त्तकत्वेन विशेषस्यावश्यं वक्तव्यत्वादिति ।

स्यादेतत्, "अत्वसन्तस्य"इत्यत्र धातुभिन्नासन्तस्येत्यर्थात्सुवः पिण्डग्र इत्यादौ समुदायस्य धातुभिन्नत्वाद्दीर्घो ऽत आह अधातोरिति धात्ववयवाभिन्नासन्तेति विवक्षितार्थकस्येत्यर्थः । ननु वार्त्तिकद्ध-

यप्रतिपाद्यकार्यद्वयस्य पर्य्यायतापत्तिरत आह प्रतिषेधेति । सुधीवेत्यत्र ङीबादेशवत् "सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यपायः" इति न्यायादिति भावः । अयं च "बिल्वकादिभ्यश्छस्य लुग्" इत्यत्र छग्रहणेन ज्ञाप्यते । तद्यथा, बिल्वकादेरुत्तरप्रत्ययस्य भनिमित्ते तद्धिते विधीयमानो लुक् प्रत्ययान्तराभावाच्छस्यैव सिद्ध इति च्छमात्रस्य लुग्यथा स्यान्न तु छसन्नियोगशिष्टकुको निवृत्तिरित्यर्थं छग्रहणमिति । इदं च "न क्त्वा सेड्" इत्यत्र प्रथमे स्पष्टं कैयटे । "बिल्वकादिभ्यः" इत्यत्र षष्ठे भाष्ये च । **तदभावे,** औत्वप्रतिषेधाभावे । **सादुत्वं** चेत्यस्य "तदोः सः सौ" इति विहितसकारात् परस्योत्वमित्यर्थः । **असुक इति** । अमुक इत्यादौ त्वव्युत्पन्नो ऽदःशब्दपर्यायो ऽमुकशब्दः । ननु सोडौ इत्येवास्तु, मैवम् । असावित्यत्र टिलोपे कृते नित्यत्वात् सत्वं बाधित्वा त्यदाद्यत्वे ऽसावित्यसिद्धेः । न च टिलोपात्परत्वेन नित्यत्वेन च त्यदाद्यत्वस्यैव प्रवृत्तिः, टिलोपस्यैव प्रतिपदविधित्वेन पूर्वकालप्राप्तिकत्वरूपान्तरङ्गत्वेन बलीयस्त्वात् । तव मते वृद्ध्यैव डित्त्ववैयर्थ्यात् सामर्थ्येनाङ्गत्वभत्वैकल्ये

ऽपि प्रवृत्तिदर्शनेनास्य बलवत्त्वाच्चेति "लुटः प्रथमस्य" इत्यत्र ध्वनितं भाष्ये स्पष्टमुद्द्योते। एतेन परत्वान्नित्यत्वाच्च टिलोपात् प्राक् त्यदाद्यत्वस्य प्रवृत्तेः सोडोत्रिर्यत्र युक्तमिति मन्दोक्तमपास्तम्। अन्त्यत्वादकृतव्यूहपरिभाषया सत्वानापत्तेश्च।

ननु सुलोप इति न कार्यं, सोरेवौकारोऽस्तु त्यदाद्यत्वेन रूपसिद्धेरिति चेन्न। असकौ स्त्रीत्यत्र "प्रत्ययस्थाद्" इति इत्वप्रसङ्गात्। न च "प्रत्ययस्थाद्" इत्यत्र आआपीति प्रश्लिष्टनिर्देशादाकाररूपस्यैवापो ग्रहणेनात्र वृद्धौ कृतायामैकाररूपत्वान्नेत्वमिति वाच्यम्। कारिके इत्यादिद्विवचनादावप्यैकाररूपत्वादित्वानापत्तेरिति स्पष्टं भाष्ये। न चात्रेत्वमन्तरङ्गत्वात् सुबुत्पत्तेः प्रागेव प्रतिपद्येत, असकावित्यत्र तु प्राक् सुबुत्पत्तेष्टाप् नास्ति, विभक्तिनिमित्तकत्यदाद्यत्वाप्रवृत्तेरनदन्तत्वादिति वाच्यम्। अत्रापि कृते टाप्येकादेशात् पूर्वं "वार्णादङ्गं बलीयः" इतीत्वप्रसङ्गात्। ननु प्रश्लेषनिर्देशवैयर्थ्यम्। एवं तर्हि तत्सामर्थ्येन वार्णपरिभाषां बाधित्वा एकादेश एव कारिकेत्यत्राप्यन्तरङ्गादप्यात्वात् पूर्वं विभक्तितन्निमित्तकार्याप्रसङ्ग इति बोध्यते। वस्तुतः प्रश्लिष्टनिर्देशो व्यर्थः प्रासजीविक

इत्यत्र दोषाच्चेति दिक् ।

त्यदादीनामित्यादिसपादसप्ताध्यायीं प्रति "अदसोऽसेः" इति त्रैपादिकशास्त्रस्यासिद्धत्वादकृते तु "त्यदादीनामः" इति विभक्तिकार्ये सान्तत्वादुत्वमत्वयोरप्रवृत्तेश्चेत्याशयेनाह **विभक्तिकार्यं प्रागिति** । पूर्वत्र सिद्धं निष्पन्नं प्रवृत्तम्, तद्भिन्नमसिद्धमप्रवृत्तम् । एवं चादसोसेरिति शास्त्रस्यैवाप्रवृत्तत्वात् प्रथममेव विभक्तिकार्यम् । यदि तु कार्यासिद्धत्वमिष्येत तर्हि अमू इत्यादि न सिध्येत(१), त्यदाद्यत्वे कृते पररूपात् प्रागेवोत्वमत्वयोर्जातयोः पश्चात् कार्ययोरसिद्धतया "अतो

(१) नच सत्यपि कार्यासिद्धत्वे अद अ औइत्यत्र मुत्वप्रवृत्तेः प्राक् तस्यासिद्धत्वाभावेन प्रथमं प्रवृत्तावपि मुत्वप्रवृत्त्यनन्तरं मुत्वस्यासिद्धत्वेन दकाराकारबुद्ध्या क्रियमाणपररूपस्य नहि रजतभ्रमप्रयुक्ता प्रवृत्तिः शुक्तिं न गोचरयति" इति न्यायेनोकार एव प्रवृत्त्या सन्नियोगशिष्टन्यायेन मकारस्यापि निवृत्तौ 'अद औ' इति जाते "वृद्धिरेचि" इति वृद्ध्यनन्तरं पुनर्मुत्वप्रवृत्त्येष्टामूइति रूपसिद्धिः, नच लक्ष्यलक्षणन्यायेन पुनर्मुत्वाप्रवृत्तिरिति वाच्यम् । प्रथमप्रवृत्त्युद्देश्यघटकमात्रोद्देश्यकविकारातिरिक्तत्वेनैकलक्ष्यत्वापादकाभावप्रतियोगिःघटितत्वशरीरघटकाभावप्रतियोगि–घटके निविष्टतया प्रकृते वृद्धेरतथाभूतत्वेन तद्घटितस्य तल्लक्ष्यत्वाभावादुक्तन्यायाप्रवृत्तेः । तथाचादोषात्कार्यासिद्धत्वपक्षः सिद्धान्तसम्मति इति वाच्यम् । अमू इत्यस्यामूदृग्, अमूभ्यामित्यस्योपलक्षणतया तत्र च तन्मात्रोद्देश्यकविकारसत्त्वेनोक्तन्यायप्रवृत्त्या पुनर्मुत्वाप्रवृत्त्योक्तरूपासिद्धिप्रसङ्ग इति तस्यासम्मतत्वाद् इत्याशयात् इति दिक् ।

गुणे" इति पररूपे ऽसावित्याद्यनिष्टापत्तेरित्यन्यत्र विस्तरः॥

इति हलन्ताः पुँल्लिङ्गाः स्त्रीलिङ्गाश्च ॥

---

विमला द्यौर्यस्येति विग्रहे समासे ततो द्वित्वा-दिवचने(१) प्रत्ययलक्षणेन "दिव उद्" इत्यस्य प्रवृत्तिं साधयति अन्तरिति। पूर्वपदस्येवेति। यथा राजपुरुष इत्यादौ प्रत्ययलक्षणेन विभक्त्या पदत्वं तत्प्रयुक्तं नलो-पादि सिध्यति, तथोत्तरस्य दिव् इत्यस्यापि पदत्वं तत्-प्रयुक्तमुत्वादि प्राप्नोतीति दृष्टान्तदार्ष्टान्तिकयोर्भावः। उत्तरपदत्वे इति। उत्तरशब्देनोत्तरपदम्। उत्तरपद-शब्दश्च समासस्य चरमावयवे रूढः, उत्तरस्योत्तर-पदस्य भावस्तत्त्वं तस्मिन्, तथा चोत्तरपदस्य प-दत्वे पदप्रयुक्तकार्ये कर्तव्ये लुमता लुप्ते प्रत्यय-लक्षणं न भवतीति प्रथमकोट्यर्थः। किमविशेषे-ण नेत्याह अपदादिविधाविति। पदादिविधौ त्वयं निषेधो नेत्यर्थः। एवं च प्रथमकोट्या विमल-दिवीत्यादावुत्वं, परमवाचावित्यादौ कुत्वं, सुधियावित्या-दौ शाकलह्रस्वत्वं च नेत्यादि सिद्धम्। द्वितीयकोटेः फलं पृच्छति किमिति। दधिसेचाविति। सोपपदाद्विचो

---

(१) द्वित्वादिबोधके वचनेऽर्थाद्द्विवचनबहुवचनात्मके इत्यर्थः।

ऽनभिधानमितिकैयटोक्तेर्निरुपपदाद् विच्, सिञ्चत इति सेचौ, दध्नः सेचाविति षष्ठीसमासः। इह "आदेशप्रत्ययोः" इति प्राप्तं षत्वं प्रत्ययलक्षणेन विभक्त्या पदत्वमाश्रित्य 'सादिस्य पदादेश्च सस्य षो न'इत्यर्थकेन "सात्पदाद्योः" इतिसूत्रेण पदादित्वे षत्वनिषेधः सिध्यति । पदादिविधिश्च प्रतिपदोक्तत्वात् "सात्पदाद्योः" इत्येव, तेन परमबुधावित्यादौ भष्भावो न । अयं च निषेध उत्तरपदस्य कार्यित्व एवेति "उञि च पदे" इत्यत्रोक्तम् ।

ननु समासस्य चरमावयव इत्युक्तेः पूर्वदण्डिप्रिय इत्यादाववान्तरतत्पुरुषे पदत्वं तत्प्रयुक्तनलोपो न स्यादिति चेन्न, उत्तरपदशब्देन मध्यमपदत्वानाक्रान्तोत्तरपदस्य ग्रहणात् । ननु बहुच्पूर्वके बहुसेचावित्यत्र षत्वं स्यादेव, बहुचोऽपदत्वेन षत्वप्रतिषेधाप्राप्तेरिति चेन्मैवम् । "बहुच्पूर्वस्य न" इतिवचनान्तरादित्यन्यत्र विस्तरः। वस्तुगत्या "याचि भम्" इत्यस्य योगविभागेन यजादौ सुपि पूर्वं पदं नेत्यर्थो भाष्ये स्थितः, स चोक्तः प्राक् । एवं च परमवाचावित्यत्र प्रत्ययलक्षणेनापि पदत्वं न सम्भवति । अतः परमदण्डिन्नागच्छेत्यत्रोत्तरपद-

त्वाश्रयो ङमुट् सिध्यति, दधिसेचावित्यत्र तु अवश्यमाश्रयणीयेन पदादादिः पदादिरिति पञ्चमीसमासेनैव निर्वाहः । एवं चोत्तरपदत्वेनेति निषेधो व्यर्थ एवेति ।

नन्वहः, अहोभ्यामित्यादौ "रोऽसुप्यहन्" इत्यनयोरचारितार्थ्येनापवादरूपत्वान्नलोपसूत्रस्य बाध एवेत्याशङ्क्य नलोपसूत्रस्यासिद्धत्वेन तयोश्चारितार्थ्यादसम्भवे सति अपवादत्वं स्यादित्याशयेनाह सिद्धत्वान्नलोपे प्राप्त इति । ननु नलोपे ऽकारस्य रौ रे वा विशेषाभावेनान्यतरेणैव सिद्धावुभयविधानसामर्थ्यादेव लोपो न भविष्यति इति चेन्न । "न ङिसम्बुद्ध्योः" इति सम्बुद्धौ प्रतिषेधेनाहर्गच्छेत्यादावुत्वाभावेन दीर्घाहो निदाघेत्यादावुत्वसम्पादनेन च कृतार्थत्वात् । न च नकारोच्चारणसामर्थ्यबललब्धनकारान्तानुकरणेन नान्तस्याहन्शब्दस्येतिव्याख्यानान्नलोपो नेति वाच्यम् । दीर्घाहो निदाघेत्यादौ सम्बुद्धौ प्रवृत्त्या भ्यामादौ व्यावृत्त्या च नकारस्य चारितार्थ्यान्नलोपबाधे मानाभावात् । आवर्त्येति । आवृत्तौ मानं च "रूपरात्रि—" इतिवार्त्तिकम् । अन्यथा नलोपे ऽकारस्य रेफादर्शनेनैव सिद्धे तद्वैयर्थ्यमेव स्यात् । आवृत्तस्यायमर्थः—पदान्ते अहन्निति निपा-

त्यते इति, तेन नलोपो न ।

अत्राहुः— सति सम्भवे न बाधनमिति तु वार्त्तिकमतम् । "मिदचोऽन्त्यात्" इत्यत्र भाष्ये 'सत्यपि सम्भवे बाधनं भवति' इत्युक्तेरयमेव भाष्यसिद्धान्तः । अन्यथा 'सर्वेभ्यो दधि दीयतां तक्रं कौण्डिन्याय' इत्यत्र तक्रदानेन दधिदानस्य बाधो न स्यात् । तद्दानोत्तरं तत्पूर्वं वा तद्दानस्य चरितार्थत्वसम्भवादित्यन्यत्र विस्तरः । एवं चात्रापि रुत्वरत्वे नलोपापवादभूते एवेति नलोपाप्राप्त्योक्तकुसृष्टिकल्पनं विफलमेवेति ।

तदन्तस्यापीति । पदाधिकारात् पदं प्रत्ययस्य विशेषणत्वेन "येन विधिः" इत्यनेन तल्लाभादिति भावः । ननु "ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति" इति परिभाषां "पूर्वादिनिः" इतिसूत्रे तदन्तविधिनैव सिद्धे "सपूर्वाच्च" इतिसूत्रं व्यर्थं सज्ज्ञापयतीति स्पष्टमाकरे । तथा च कथमत्र तदन्तविधिरिति चेन्न । एषा प्रत्ययविधिविषयेति(१) "असमासे निष्कादिभ्यः" इत्यत्र

(१) अन्धपङ्गुन्यायेनेत्यर्थः । यथा कौचनान्धापङ्गू दुस्तरं पर्वतं तितीर्षू परस्परं प्राप्य परस्पराकाङ्क्षया परस्परसाहाय्यकरणेन स्वेष्टं साधितवन्तौ तथा "प्रत्ययविधौ" इति प्रतिषेधस्यास्त्यपेक्षा 'केन तदन्तविधिर्निषेध्यः' इति, "ग्रहणवता" इत्यस्याप्य-

पञ्चमे भाष्यकैयटयोरुक्तत्वात् ।

ननु तदन्तेऽपि दीर्घाद्दावित्यादावन्तर्वर्त्ति-विभक्त्या पदत्वाद् रुविधिः स्यादिति चेन्न । "उत्तरपदत्वे च" इति निषेधात् । तस्यासिद्धत्वादिति । रुत्वात् पूर्वं तु न दीर्घप्राप्तिः, "अकृतव्यूहाः" इति परिभाषया । तस्या असत्त्वे तु हल्ङ्यादिलोपात् पूर्वमेव परत्वाद्दीर्घ इति ज्ञेयम् । सम्बुद्धौत्विति । सम्बुद्धिलोपेऽसम्बुद्धावित्युक्तेर्दीर्घाभावे रुत्वे "हशि च" इत्युत्वे आद्गुणः । वक्ष्यमाणभाष्यप्रयोगेणानव्ययपूर्वपदे कुत्वाभावो बोध्यत इत्यभिप्रेत्याह असृज इति, विश्वसृडिति च । "क्विन्प्रत्ययस्य" इत्यस्यासिद्धत्वाद् व्रश्चेति षत्वे जश्त्वम्, षत्वं तु सृष्टमित्यादौ सावकाशमित्याशयः । ननु-सृगिति शोणितार्थकमिति सृज्धातो रूपे त्वर्थासङ्गतिः, किञ्च, षत्वस्यैव प्रवृत्तिरनवकाशत्वादत आह यद्वेति । कुत्वापवाद इति । सृजियज्योः पूर्वोत्तर-साहचर्य्येण पदान्ते विशिष्य षत्वबोधनेन तद्बला-

---

स्त्यपेक्षा–'कुत्र तदन्तविधिः प्रतिषेध्यः' इति । तदनयोः परस्परं, वाक्यैकवाक्यतया 'ग्रहणवता प्रातिपदिकेन प्रत्ययविधौ तदन्तविधिर्नास्ति' इति वाक्यकल्पनेनास्याः प्रत्ययविधिविषयतेति भावः । विस्तरस्त्वन्यत्र द्रष्टव्यः ।

तु कुत्वबाध इति। अत एव तृतीये "काम्यच्च" इति सूत्रे भाष्योक्त उपयट्काम्यतीति प्रयोगो यज्धातोः सङ्गच्छते। ननु स्रगृत्विजोः कथमित्यत आह **निपातनादेवेति**। निपातनं नामान्यादृशप्रयोगे प्राप्ते ऽन्यादृशप्रयोगकरणम्। अपवादाप्रवृत्तिमात्रं निपातनेन बोध्यते, कुत्वं तु सूत्रेणैवेति ध्येयम्। सृज्धातो रूपं निवारयति **असृगिति**। एवं च नार्थसङ्गतिः, अस्यति उत्क्षिप्तं भवति क्षरतीति यावत्। **अल्लोपस्येति**। अतोलोपकृतस्येत्यर्थः। **स्थानिवत्त्वात्**, "अचः परस्मिन्" इतिकृतात्। **नुम्**, "नपुंसकस्य झलचः" इति विहितः। **स्वविधौ स्थानिवत्त्वाभावादिति**। यस्यैव कार्यं तस्य स्थानिवत्त्वासम्भवादित्यर्थः। अयं भावः—अनादिष्टादचः पूर्वस्य स्थानिवद्भावो भवति, न चेहाजन्तमनादिष्टादचः पूर्वम्, येनाजन्तस्य नुमि कर्तव्ये ऽल्लोपः स्थानिवत् स्यादिति। एवं वक्ष्यमाणे पिपठिषि इत्यत्रापि नुमभाव उपपादनीयः। ननु कथं स्थानिवत्त्वम्। "आर्द्धधातुके" इत्यस्य विषयसप्तमीत्वात्। अत एव "अचो यत्" इत्यत्र तृतीये भाष्ये "हलन्तादण्यता सिद्धे ऽज्ग्रहणमजन्तभूतपूर्वादपि यथा स्यात् दित्यस्ये

धितुस्यम्"इत्युक्तम् । परसप्तमीत्वे तु प्राग्यतो लोपाभावाद्भाष्यासङ्गतिः स्पष्टैवेति चेत् । सत्यम् । परसप्तमीपक्षस्यापि सत्त्वात् । अत एव धिनुत इत्यादौ "धिन्विकृण्व्योर च"इति वकारस्याकारे उप्रत्यये चाकारस्य लोपे तस्य स्थानिवद्भावाल्लघूपधगुणाभावः । इदं चासिद्धवत्सूत्रे षाष्ठे कैयटे स्पष्टम् । न च झलन्तलक्षणो नुम् दुर्वारः, "कौ लुप्तम्"इतिस्थानिवत्त्वनिषेधादिति वाच्यम् । तस्यासार्वत्रिकत्वात् । अत एव "स्वरत्यात्परस्य" "मपर्यन्तस्य" इति सूत्रयोरेव तदाश्रितं भाष्ये इति "दिधीवेवीटाम्"इत्यत्र स्पष्टं कैयटादौ । **नित्यादिति** । कृताकृतप्रसङ्गित्वेनेति भावः । **परादिति** । विप्रतिषेधेनेति भावः । आप इत्यत्र दीर्घविधिः सावकाशः, नुम् यशांसीत्यादौ । **प्रतिपदोक्तत्वादिति** । प्रतिपदोक्तो विधिर्बलीयानिति वचनादिति भावः । **निरवकाशमिति** । तस्य निरवकाशत्वे सत्येव बाधप्रयोजकत्वादिति भावः । तदुक्तं "शेषाद्विभाषा" इत्यत्र पञ्चमे भाष्ये, "शेषग्रहणमनर्थकं, ये प्रतिपदं विधीयन्ते ते बाधका भविष्यन्ति" इत्याशङ्क्य "अनवकाशा हि विधयो बाधका भवन्ति समासान्ताश्च कबभावे सावकाशाः" इति ।

अन्ये तु क्वचिदनवकाशत्वाभावे ऽपि परनित्यादिसमवधाने शीघ्रोपस्थितिकत्वेन पूर्वप्रयोजकं बलवत्त्वं प्रतिपदविधित्वेनापि । अत एव हे रमे इत्यादौ प्रतिपदोक्तत्वात् पूर्वमेत्वे आकारप्रश्लेषाद्धल्ङ्याादिलोपो न प्राप्नोतीत्याशङ्क्य "एङ्ह्रस्वाद्" इति लोपेन समाहितं भाष्ये । एवं चात्रापीदृशप्रतिपदोक्तत्वस्वीकारेण पूर्वं दीर्घे ततो नुमि स्त्रास्पीत्यत्रेत्याहुः ॥

## इति हलन्ता नपुंसकलिङ्गाः ॥

अव्ययमिति । महासंज्ञाकरणमन्वर्थताविज्ञानाय । न व्येति विशेषं विकारं गच्छति, सत्त्वधर्मान् लिङ्गसंख्यादीन्न गृह्णातीति यावत् । अतोऽत्युच्चैसावित्यादि सिध्यति । अतिक्रान्ताद्यर्थप्राधान्येन सत्त्वधर्मपरिग्रहादव्ययत्वाभावात् । तत्रावयवाव्ययत्वानपायाद् "अाप्सुपः" इति लुक्प्रसक्तेरित्याह विहितविशेषणान्नेति । नन्वत्युच्चैसावित्यादौ कथं समासः । उच्चैरित्यस्याधिकरणशक्तिप्रधानत्वेन द्वितीयाद्यन्तायोगादिति चेत् । सत्यम् । दोषाभूतमहर्दिवाभूता रात्रिरित्यादिवत् क्वचिद् वृत्तिविषये शक्तिमत्प्रधानतास्वीकारेणादोषात् । समुदायस्यापि अव्ययत्वमाशङ्क्य समाधत्ते यद्यपि तदन्तेति । शब्दस्य विशेष्यत्वात् "प्रयोजनं सर्वना-

माऽव्ययसंज्ञायाम्" इति वाचनिकस्तदन्तविधिरित्याशयः। न गौणेइति। सामानाधिकरण्यसम्बन्धेन लिङ्गाद्यनन्वय्यर्थबोधकत्वविशिष्टाऽव्ययपदत्वेनाव्ययपदं बोधकमिति तादृशमहासंज्ञाकरणात्तादृशानां गणेऽनुकरणावश्यकत्वे इतरेषामनुकरणे मानाभावेन समुदायस्य नाव्ययत्वमिति भावः।

अन्ये तु अत्रार्थस्य "प्रधानाप्रधानयोः प्रधानस्यैव ग्रहणम्" इति न्यायेन सर्वनामसंज्ञासाहचर्येण च प्रसिद्धानुपसर्ज्जनीभूतस्यैव लिङ्गाद्यनन्वयिनो ग्रहणेन न समुदायस्य नाप्यवयवस्य संज्ञा भविष्यति। एवं च विहितविशेषणमङ्गाक्षेपो वा व्यर्थ एव, अव्ययात् परस्वस्याप्यभावादत्युच्चैसावित्यादेर्निर्बाधत्वमित्याहुः॥

इत्यव्ययानि॥

---

ननु प्रत्ययविधौ तदन्तविधिप्रातिषेधप्रतिप्रसवेन "उगिद्वर्णग्रहणवर्जम्" इत्यनेन तदन्तलाभेऽजादीनामप्यकारान्तत्वस्याव्यभिचारादत इयतैव सिद्धिरित्यत आह अजाद्युक्तिरिति। "येन नाप्राप्ते" इति परिभाषया सामर्थ्याद्बाध्यसामान्यचिन्ताश्रयणादित्याशयः। तदाह ङीषो ङीपश्चेति। यथायथं "जातेरस्त्रीविष-

यादयोपधाद्" "वयसि प्रथमे" इति सूत्राभ्यां प्राप्त-
स्येत्यर्थः । तदाहाऽजेत्यादिना ङीप्प्राप्त इत्यन्तेन ।
अजत्वजातिविशिष्टा स्त्रीत्यर्थः । अत एवाजादिवाच्यं
स्त्रीत्वमित्युक्तम् । प्रत्ययवाच्यत्वे हि स्त्रीत्वस्य वि-
शेष्यतापत्तिः । ननु प्रत्ययवाच्यमेव तदिति चेन्न ।
वागादिपदे प्रत्ययमन्तराऽपि तद्बोधात्, "ह्रस्वो न-
पुंसके" "स्वमोर्नपुंसकाद्"इति सूत्रस्वरसाच्च । अत
एव व्याघ्रक्रोशीत्यादौ "कर्मव्यतिहारे णच् स्त्रियाम्"
इति णचि "णचः स्त्रियाम्"इत्यञि च ङीप् सिध्यति ।
'प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यम्'इति व्यु-
त्पत्तेर्यत्र प्रत्ययस्य वाचकत्वं तद्विषयत्वेनेहाऽप्रवृत्ते-
रित्यन्यत्र निरूपितम् । ननु "ङ्याप्प्रातिपदिकाद्"
इत्यादिना प्रत्ययविधौ पञ्चम्या युक्तत्वबोधनादजादि-
भ्यष्टाप्स्यात् स्त्रीत्वे द्योत्ये इत्यर्थस्य युक्तत्वम्, तच्च
प्रत्यासत्त्या प्रकृत्यर्थनिष्ठमेव टापा द्योत्यमिति कथ-
मजादीनामिति षष्ठ्यन्ततयाऽर्थवर्णनमित्यत आह अ-
जादिभिरिति । व्याख्यानात्षष्ठ्यन्तत्वे ऽपि अर्थात्
पञ्चम्यन्तलाभ इति भावः । उक्तयुक्तेः फलमाह
पञ्चाजीति । पञ्चानामजानां समाहार इति । "अका-
रान्तोत्तरपदो द्विगुः स्त्रियाम्"इति स्त्रीत्वे "द्विगोः"

ति ङीबेव, न त्वनेन टाप् । नन्वत्र "प्रत्यय-विधौ" इति निषेधात्तदन्तत्वालाभादेव टापो ऽप्रवृत्ति-रेव, किमुक्तव्याख्ययेति चेन्न । अमहत्पूर्वग्रहणेन(१) "अनुपसर्जनाद्" इति वक्ष्यमाणाधिकारेण च स्त्रीप्रत्ययेषु तदन्तविधेर्ज्ञापनात् । न च तदन्तविधावपि "स्त्रिया-म्" इत्यजादीनामेव विशेषणं श्रुतत्वादिति वाच्यम् । उक्ताधिकारेण तदन्तग्रहणस्यैव स्त्रियामित्यस्य तद-न्तविशेषणत्वमित्यर्थस्यापि बोधनात् । अत्र हीति । समासे अजशब्दसत्त्वे ऽपि समाहारनिष्ठं स्त्रीत्वं स-

(१) अयं भावः—"शूद्रा चामहत्पूर्वा जातिः" इति वार्तिके यो-गो विभज्यते शूद्राचेति प्रथमो योगः—शूद्रशब्दष्टापं लभते जा-तिश्चेद्वाच्येत्यर्थकः । ततोऽमहत्पूर्वेति द्वितीयो योगः । अत्रापि जातिरिति सम्बध्यते, महत्पूर्वः शूद्रशब्दष्टापं न लभते जातिश्चेद्वा-च्येत्यर्थः । तत्र निषेधस्य प्राप्तिपूर्वकत्वेनात्र महत्पूर्वस्थले जातौ वाच्यायां टापः प्राप्तिर्वाच्या । न चात्र तदन्तविधिज्ञापनं विना साऽस्ति । नच येनविधिरित्यनेनाधिकारप्राप्तप्रातिपदिकादिति-विशेष्येण सार्कं शूद्रशब्दस्य विशेषणतामाश्रित्य तदन्तविधिः स्या-दिति वाच्यम् । तस्य प्रत्ययविधौ प्रतिषेधात् । द्वितीयस्मि-न्योगे जातिरित्यनुवृत्तिफलन्तु पूर्वं शूद्रशब्दे जातिमात्रविवक्षया महच्छब्देन कुक्कुटाण्डमित्यादिवत्समासे पश्चात्स्त्रीत्वविवक्षायां महती शूद्रेत्यर्थे महाशूद्रेतिटाबेव भवति । समुदायस्य जाति-वाचकत्वाभावात् । तत्सम्बन्धेन तु आभीरी तु महाशूद्री जातिपुंयोगयोः समेति कोशबोधिताभीरत्वजातिविशिष्टस्य स्त्रि-यां वर्तमानत्वेन ततष्टाप् प्राप्तो न भवति किन्तु जातेरस्त्रीवि-षयादयोपधादिति ङीषेवेति दिक् ।

मुदायवाच्यं, नाजशब्दमात्रवाच्यम्, सामर्थ्येनाजादि-मात्रवाच्यस्त्रीत्वस्य ग्रहणादिति भावः। सामान्येति। तेन विशेषाग्रहणम्। वन इतिसूत्रे ऽनुबन्धरहितस्य वन उच्चारणात् "तदनुबन्धग्रहणे नातदनुबन्धकग्रहणम्"इति परिभाषायाश्चतुर्थे "वामदेवाद्–"इत्यत्रभाष्ये स्पष्टाया इहाप्रवृत्तेरित्याशयः। नन्वतिधीवरीत्यादौ कथम्, वन्नन्तत्वाभावात् तत्राह प्रत्ययग्रहणमिति। इयं च अङ्गसंज्ञासूत्रे भाष्ये स्पष्टा।

तद्यथा—'यस्मात्प्रत्ययविधिस्तदादिप्रत्यये' इति योगो विभज्यते, 'गृह्यमाणे उपतिष्ठते' इति शेषस्तेन तदाद्यंशः सिद्धः, तदन्तांशस्तु 'येन विधिः' इत्यनेन सिद्धः। तेन देवदत्तश्चिकीर्षतीत्यादौ देवदत्तादेः सन्नन्तत्वादिप्रयुक्तं कार्यं नेति।

तेनेति। वन्नन्तेनेत्यर्थः, तत् प्रातिपदिकं प्रति विशेषणमिति भावः। न च कथमत्र तदन्तविधिः, "ग्रहणवता प्रातिपदिकेन न तदन्तविधिः"इतिनिषेधात्। "अनुपसर्जनाद्"इत्यधिकारस्यामहत्पूर्वग्रहणस्य च ज्ञापकत्वात्। सूत्रे गृहीतस्य वन इत्यस्य प्रातिपदिकत्वं नास्तीति तन्निषेधाविषयत्वाच्चेत्याहुः। "न षट्स्वस्रादिभ्य" इत्यनेन "अनन्तरस्य"इति न्या-

येनाऽप्यत्राहितङीप एव निषेधप्राप्तावपि स्त्रियां यत् प्राप्तं तन्नेति व्याख्यानेनोभयोर्ङीप्टापोरपि निषेध इत्याशयेनोदाहरति **पञ्च चतस्र इति**। ननु "न तिसृचतसृ" इति नामि दीर्घत्वनिषेधात्तयोर्ङीबभावः सिद्ध इति चेत्सत्यम्। सन्निपातपरिभाषाया अनित्यतां ज्ञापयितुं तत्र तयोर्ग्रहणमिति केचित्। स्वस्रादिषु तयोः पाठो न कर्तव्य इति भाष्यकैयटयोः स्वरसः। ननु कथं षट्त्वमदन्तस्येत्याशङ्क्योपपादयति **नलोप इत्यादिना**। **असिद्धत्वादिति**। इदं चासिद्धत्वोपवर्णनं कार्यकालपक्षे, यथोद्देशे पञ्चन्निति नान्ते जाताया एकदेशविकृतन्यायेनादन्तेऽपि सुलभत्वात्। न चोक्तन्यायस्य स्थानिवत्सूत्रे उपसंख्यानादनल्विधौ तत्प्रवृत्तिरिति युक्तम्। षट्त्वस्यानल्धर्मत्वेन तदाश्रयविधीनामनल्विधित्वादिति दिक्।

नन्विह बहिरङ्गपरिभाषयैव सिद्धिरिति चेन्न। संज्ञाकृतं बहिरङ्गत्वं परिभाषायां नाश्रीयत इति कृतितुग्ग्रहणेन ज्ञापनात्। तद्धि वृत्रहभिरित्यादौ "ह्रस्वस्य पिति" इति तुकि नलोपस्यासिद्धत्वार्थं क्रियते। यदि परिभाषयैव बहिर्भूतभिस्निमित्तो नलोपोऽसिद्धः स्यात्तद्व्यर्थं सदुक्तार्थं ज्ञापयतीति दिक्।

अन्ये त्वाहुः—न ह्युक्तासिद्धत्ववर्णनोपयोगः, पञ्चेत्यत्र तु स्त्रियां यत् प्राप्नोति तन्नेति "न षट्"इति-सूत्रार्थाश्रयणमहिम्ना भूतपूर्वषट्त्वमाश्रित्य निषिध्यते। अत एव षट्संज्ञायां नलोपासिद्धत्वस्य न फलमिति नलोपस्सुबित्यत्रोक्तं भाष्य इति । "प्रत्ययस्थाद्"इति-सूत्रे कादित्यत्राकार उच्चारणार्थो वर्णमात्रं विवक्षितम्, अत एवैतिका इत्यादावकचीत्वम् । पचत-कीत्यादिसिद्धये ऽकच्यकारो ऽविवक्षितः । किं च कारिकेत्यत्राकारेण व्यवधानादापूपरककाराभावेनेत्वं स्यात् । एकादेशे ऽपि "अचः परस्मिन्"इतिस्थानिव-त्त्वाद्व्यवधानमेव । आपि परतो ऽकारस्य कात्पूर्वस्ये-त्यर्थे ऽपि निर्दिष्टपरिभाषया चेत्वं स्यादिति तु न वाच्यम् । येन नाव्यवधानमिति ककाराकाराभ्यां व्यवधाने ऽपि प्रवृत्तेः, तेन रथकट्या पुत्रकाम्ये-त्यादावनेकव्यवाये इत्वं नेति स्थितम् । तत्र सुपः परो न चेदिति प्रसज्यप्रतिषेधः किमर्थमाश्रितो ऽसमर्थसमासादिदोषापत्तेरित्याशयेनाह असुपः कि-मिति । पर्युदासाश्रयणे समुदायस्य सुबन्तभिन्न-त्वेन च ततः परत्वादित्वमत्र स्यादिति भावेना-ह बहुपरिव्राजकेति । परिपूर्वकाद्व्रजेर्ण्वुल् ।

बहवः परिव्राजका यस्यामिति समासे सुपो लुकि कृते ऽपि प्रत्ययलक्षणेनापः सुबन्तात्परत्वेनात्रेत्वानापत्तिरित्याशयः। पूर्वस्य किमिति। कादिति पञ्चमीं श्रुत्वा "तस्मादित्युत्तरस्य" इत्युपस्थितेः परस्येतिलाभे पूर्वं टापा सह सवर्णदीर्घे परभूतह्रस्वाकाराभावादिति प्रष्टुराशयः। सिद्धान्ती प्रष्टुः पक्षं दूषयन् स्वसिद्धान्तमाह परस्येति। सवर्णदीर्घात्पूर्वं "वार्णादाङ्गं बलीयः" इति तिङन्ते वक्ष्यमाणन्यायादवत्वाद्वाऽन्त्यककारादनन्तरस्याकारस्येत्वं स्यादिति रूपासङ्गतिस्तदाह कटुकेति(१)। कटुरत्र कटुरसवती, अज्ञातार्थादौ कः। स्त्रियामपि कटुशब्द इत्यन्ये।

अत्राहुः—'प्रत्यये कि' इति सूत्रयित्वा पूर्वस्येति सुत्यजम्। "न यासयोः" इतिनिषेधाल्लिङ्गादेव

(१) वस्तुतस्तु कात्सुपीतिपञ्चमीसप्तमीरूपलिङ्गद्वयसत्त्वात्परिभाषाद्वयस्य युगपत्प्राप्तौ विप्रतिषेधाद् "उभयनिर्देशे पञ्चमीनिर्देशो बलवान् परत्वाद्" इतिपरिभाषया परस्येत्युपस्थितौ अनिष्टरूपं मा प्रसाङ्क्षीदिति पूर्वस्येति ग्रहणम्। किञ्च यद्यपि सूतिकापुत्रिकावृन्दारिकाणां वेतीत्यत्र वा अ इतिच्छेदेन इवर्णस्य पुत्रिकाशब्दस्थस्य पाक्षिकाकारबोधकेन उभयनिर्देशपरिभाषाऽप्रवृत्तिबोधनद्वारा सप्तमीपरिभाषाप्रवृत्तिबोधनेऽपि कटुकेत्यादौ अव्यवहितपूर्वाकाराभावेन सप्तमीपरिभाषाया अप्रवृत्तौ कदाचित्पञ्चमीपरिभाषाप्रवृत्तौ कटुक्येत्याद्यनिष्टरूपापत्तिः स्यात्सा मा भूदिति पूर्वस्येति ग्रहणं पूर्वस्यैवेतिनियमार्थकमित्येषा दिक्।

कादौ प्रत्यये इति नार्थः, किं तु आप्परस्य प्रत्ययस्थककारपरस्यात इत्त्वमित्यादिरर्थः, सामर्थ्यादाप्परत्वांशे ककारव्यवधानं सोढव्यमेवेति । "भस्त्रैषा"इत्यनेनापि व्याख्यानान्नञ्पूर्वाणां केवलानां च सङ्ग्रहेण सकललक्ष्यनिर्वाहे ऽप्यन्यथासिद्ध्या नञित्यादि माऽस्त्वित्याह तदन्तेति, स्पष्टार्थमिति च । पदाङ्गाधिकारे तस्य तदन्तस्य च सिद्धेरित्याशयः । ननु भस्त्राशब्दस्याकारस्थानिकाकारसम्भवादुत्तरविधिना वैकल्पिकेत्त्वसिद्धौ वैयर्थ्यमित्याशङ्क्याह उपसर्जनार्थमिति । अन्यस्य त्विति । अनुपसर्जनस्येत्यर्थः । उत्तरसूत्रेणेति । "अभाषितपुंस्काच्च"इत्यनेन, बाधकाभावादित्यर्थः । भस्त्राजाज्ञास्वानां विद्यमानपूर्वकाणामपीत्वं भवत्येव । तत्र टापः कप्रत्ययात्परत्वेन सुपः परत्वाभावादसुप इति निषेधाप्रवृत्तेः, इतरयोस्तु नेत्वप्राप्तिरिति मनसि निधायाह एषाद्वेति । सपूर्वयोर्विद्यमानपूर्वयोः । अन्तवर्तिनीमिति । न एतत् सु इति स्थिते ऽकचि कृते ऽकृते वा नञ्तत्पुरुषे अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते इति त्यदाद्यत्वात्प्राक् सुब्लुकि ततो ऽकचि वा पुनर्विशिष्टात् सुपि त्यदाद्यत्वे टापि समासा-

तु पूर्वोत्पन्नसुपः प्रत्ययलक्षणेन पर एव टाबि-ति भावः । अनेषकेति । अज्ञाता एषा एषका, ततो नञ्समासः । एवमग्रेऽप्यूहनीयम् । ननु स्वशब्दस्य चत्वारोऽर्थाः आत्मा, ज्ञातिः, धनम्, आत्मीयश्चेति । तत्र 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इति कोशादादिषु(१) त्रिषु स्त्रीत्वाभावः, किंत्वन्यार्थन्त्था एव स्त्रीत्वम्, तत्र सर्वनामत्वादकचोऽवश्यम्भावेनात्स्थानिकाकारालाभात् कथमयमुदाहर्तुमुचितोऽत आह स्वशब्देत्यादि । विशेषणमिति । व्यावर्तक इत्यर्थः । सम्भवव्यभिचाराभ्यां स्याद्विशेषणमर्थवदिति भावेनाह असम्भवादिति । स्वशब्दस्य तूभयमस्ति । उक्तं च हरदत्तमिश्रेण—

सम्भवव्यभिचारौ हि स्वशब्दे काकचोः सतोः ।
द्वैषयोः सम्भवो नास्ति, नान्यत्र व्यभिचारिता ॥ इति ।

तदेवोपपादयति स्वशब्दास्त्विति । नित्यमेवेत्वमिति । अत्र त्वकचि कृते आत्स्थानिकाकाराभावात् "प्रत्ययस्थाद" इतीत्वस्यैव प्रवृत्तेरिति भावः । "अभाषितपुंस्काच्च" इत्यत्र स्त्रीविषयाच्चेति सूत्रिते तु "न पुंसि दाम" इत्यमरोक्त्या स्त्रीनपुंसकत्व-

(१) आदित्वं च स्वोक्त्यभिप्रायं न तु कोशाभिप्रायम् ।

पर्यवसानाद्दामशब्दाद् डाप्यज्ञातादौ के दामाका दामका दामिकेतिरूपत्रयासिद्धिरिति । परं तु पञ्चमीश्रुत्या परस्येति लब्धमपि त्यक्त्वा विहितस्येति व्याख्यानम्, तस्य किं फलं तदाह बहुव्रीहेरिति । अविद्यमाना खट्वा यस्या इति विग्रहे "शेषाद्विभाष"इति समासान्तस्य कपो वैकल्पिकत्वात्तदभावे "गोस्त्रियोः"इति ह्रस्वे ततष्टापि सुप्यज्ञातादौ कप्रत्यये सुब्लुकि "के ऽणः" इति ह्रस्वे पुनष्टाप्यभाषितपुंस्काद्विहिताकारस्थानिकाकाराभावेनैतद्विकल्पाप्राप्तौ "प्रत्ययस्थाद्"इत्यनेन नित्यमेवेत्वम् । परविशेषणत्वे तु तादृशखट्वशब्दात् परत्वेन विकल्पः स्यादेवेति दोष इति भावः । शैषिके कपीति । न खट्वा सु—इत्यवस्थायां कपि सुब्लुकि प्रत्ययलक्षणेन भागद्वयस्य सुबन्तत्वात्समाससंज्ञायां "समासान्ताः" इतिशास्त्रमहिम्ना कबन्तस्यैव समासत्वेनोपसर्जनस्त्रीप्रत्ययान्तान्तसमासरूपप्रातिपदिकाभावाद "गोस्त्रियोः"इतिह्रस्वाभावे "केऽणः"इत्यस्य "न कपि"इति निषेधे ऽपि "आपो ऽन्यतरस्याम्"इति ह्रस्वे कपः प्राग्वर्तिखट्वशब्दात् परस्यापो ऽभाषितपुंस्काद्विहितत्वेनाकारस्थानिकाकारस्यायं विकल्पः । ह्रस्वाभावे तु अखट्वाकेतीति

भावः । वक्ष्यमाणेति । वचेर्लृट्, "लृटः सद्वा" इति शानच्, स्यतासीति स्यः, कुत्वषत्वे, आने मुगिति मुक् । टित्त्वादुगित्त्वाचेति । न्यायसाम्यादुभयोरुपादानं, स्थानिवत्त्वेनेत्यर्थः । एतेन लृटि ऋकारस्याप्यनुबन्धत्वात्तदनुबन्धकपरिभाषया न टित्प्रयुक्तङीपः प्राप्तिः, अत "उगित्वाच्च" इत्युक्तमित्यपास्तम् । उक्तपरिभाषया ऋकारेऽप्यग्राहकत्वसाम्यात् "टिड्ढा—" इति सूत्रेऽनुबन्धग्रहणात् परिभाषाया अप्रवृत्तेश्च । नचाल्विधित्वात् कथमिह स्थानिवत्त्वम्, "न ल्यपि" इति ज्ञापकेन टित्त्वादेरशास्त्रीयस्यातिदेशो "अनुबन्धकार्ये ऽप्यनल्विधौ" इति निषेधाप्रवृत्तिश्चेतिज्ञापनात् । तद्धि प्रदाय प्रधायेत्यादौ क्त्वो ल्यपि तस्य स्थानिवत्त्वेन कित्त्वमाश्रित्य "घुमास्थागापाजहातिसां हलि" इति कित्त्वनिमित्तेत्वप्राप्तौ तन्निवारणाय क्रियते । तच्चानल्विधाविति कोट्यैव स्थानिवत्त्वनिषेधादित्वाप्राप्तिरेवेति व्यर्थं सदुक्तार्थं ज्ञापयतीति । अत एव रमायामित्यादौ परत्वात् ङेरामित्यामि कृते स्थानिवद्भावेनामो ङित्त्वाद्याडागमः सिध्यति । समाधत्ते ङित्त्वेनेति । तेन सूत्रेण लिङादेशानां तिबादीनां यासुडागमस्य ङित्त्वं विधीयते । तच्च स्था-

निवत्त्वस्योक्तरीत्या बाधाभावात्तेनैव ङित्त्वे सिद्धे व्यर्थमिति लाश्रयमादेशानां न भवतीति ज्ञाप्यते । तेनाचिनोदमार्ट् इत्यादौ स्थानिवद्भावेन तिपो ङित्त्वेन "क्ङिति च" इति निषेधप्राप्तावप्यनया रीत्या स्थानिवद्भावेन ङित्त्वनिषेधाद् गुणवृद्धी सिध्यतः । प्रकृते लकाराश्रयटिदुगिद्रूपानुबन्धकार्यं ङीब् न भवति । ननु स्तुयादित्यादावनिग्लक्षणवृद्धिप्रतिषेधार्थं चिनुयुरित्यादौ "जुसि च" इत्यस्य निषेधार्थं च यासुटो ङित्त्वमास्ताम् । "उतो वृद्धिर्लुकि हलि" इत्यत्र हि उत इतिनिर्दिष्टस्थानिकतया इक्परिभाषानुपस्थितिः, 'अनियमे नियमकारिणी परिभाषा' इतिन्यायात् । "जुसि च" इति च "क्ङिति च" इत्यस्यापवाद एव । तथा च स्थानिवद्भावलब्धङित्त्वं स्तुयाच्चिनुयुरित्यादौ वृद्धिगुणौ निषेद्धुं नालं स्यात् । पुनर्ङित्त्वसामर्थ्याच्तूभयोर्निषेधो भवति । तस्मात् कथं ङित्त्वमुक्तार्थं ज्ञापयेदिति चेन्न । उत औदिति वक्तव्ये वृद्धिग्रहणेन "संज्ञापूर्वको विधिरनित्यः" इतिज्ञापनात्, स्थानिनिर्देशे ऽपीकपरिभाषोपस्थितये ऽनियम इत्युक्तन्यायस्यानित्यत्वज्ञापनाच्च । "क्सस्याचि" इत्यतोऽचीत्यनुवर्त्याजादौ जुसि गुणः स्यादिति 'जुसि च' इतिसूत्रार्थेन चिनुयुरित्यादाव-

जादित्वाभावेनादोषाच्चेति दिक् । ननु "हलः श्नः" इत्यत्र तृतीये भाष्ये तु "सार्वधातुकमपिद्"इतिसूत्रान्तर्गतमपिदिति योगं विभज्य "गाङ्कुटादिभ्यः" इत्यस्मान्ङितमनुवर्त्यावृत्तिं चाश्रित्य प्रसज्यप्रतिषेधं विधाय 'ङिच्च पिन्न भवति पिच्च ङिन्न भवति'इति वाक्यार्थद्वयं वर्णितम्, तेन ब्रूयादित्यत्र ब्रुव इतीण् न भवति । आतिदेशिकस्य पित्त्वस्यौपदेशिकेन ङित्त्वेन बाधनात् । अचिनोदमार्ड्‌ इत्यादावौपदेशिकेन तिबादीनां पित्त्वेनातिदेशिकङित्त्वाश्रयस्य ङित्त्वस्य बाधनाद् गुणवृद्धी भवतः, 'अतिदिष्टादुपदिष्टं बलीयः' इतिन्यायात् । एवं च मृज्यादित्यादावौपदेशिकेन पित्त्वेनातिदेशिकस्य ङित्त्वस्य बाधनाद् वृद्ध्यादिवारणाय यासुटो ङित्त्वमावश्यकमिति कथमुक्तार्थं ज्ञापयेदित्याशङ्क्य गत्यन्तरमाह श्नः शानचः शित्त्वेनेति । शानचः शित्त्वं हि "तिङ्शित्सार्वधातुकम्"इति सार्वधातुकसंज्ञया "सार्वधातुकमपिद्"इत्यनेन ङित्त्वे "क्ङिति च"इत्यनेन पुषाणेत्यादौ गुणनिषेधार्थं क्रियते । तच्च स्थानिवद्भावेन श्नाप्रत्ययस्य शित्त्वेनैव सिद्धे व्यर्थं सदुक्तार्थं ज्ञापयति । तथा चानेन ज्ञापितार्थेन "न ल्यपि"इत्येतज्ज्ञापितार्थस्य बाधादिह न ङीप् । स च बा-

धो न सार्वत्रिको, ऽतिप्रसङ्गात् तदाह क्वचि-
दिति । लक्ष्यानुरोधेन व्यवस्थेति भावः । एते-
न ज्ञापकस्य सजातीयविषयताया न्याय्यतया शा-
नजादेशस्य लाश्रयकार्याभावज्ञापकताऽनुपयुक्ता, अत
एव सार्वधातुकादेशे अनुबन्धो न स्थानिवदित्येव
ज्ञाप्यशरीरमुन्नावितं भाष्य इति मन्दोक्तमपास्तम् ।
अचिनोदमार्डित्यादौ गुणवृद्धिसिद्धये भाष्ये सामा-
न्यापेक्षस्यैवाभ्युपेयत्वात्, सार्वधातुकादेश इत्यत्र बहु-
व्रीह्याश्रयणेन लकारस्यापि क्रोडीकाराच्चेति दिक् ।
ननु शानचः शित्त्वमपि तत्सूत्रे भाष्ये प्रत्याख्यातम्,
तद्यथा किमर्थः शकारः, ज्ञापनार्थ इत्युक्त्वा ज्ञाप-
नफलमुक्तरीत्या दूषयित्वा तस्मान्नार्थो ऽनेनेति । तथा
च कथमुक्तार्थज्ञापनेन प्रकृते ङीबभाव इति चेत्स-
त्यम्, सत्यभिधाने वक्ष्यमाणेत्यादावजादिपाठादेव टा-
प्, स च ङीबादेर्बाधक इत्युक्तं प्राक् । अ-
जादिस्त्वाकृतिगणः । न चात्र विवदितव्यम् ।
"न मु ने" इत्यत्र "टायामादेशः" इति फणि-
भाष्यप्रयोगात् । "अजायां छागेति टाबन्तः प्रयोगो
दृश्यते, अतश्छागशब्दो ऽप्यजजातिषु" इति प्रथमाध्या-
यचतुर्थचरणे "चमसवदविशेषाद्" इति सूत्रे श्रीमदाचा-

र्यशङ्करभगवत्पूज्यपादभाष्ये वाचस्पतिकृतभामत्यां चोक्तेश्चेति प्राहुः । ननु टिड्ढेत्यत्राण् ग्रहणाच्चुरा शीलमस्या इत्यर्थे "शीलम्" "छत्रादिभ्यो णः" इति विहितणान्ते चौरीत्यत्र कथं ङीबित्यत आह ताच्छीलिक इति । शीलार्थके णेऽप्यण्कार्यं भवति, "कार्मस्ताच्छील्ये" इति ज्ञापकात् । तत्र हि अन्नित्यनेनाणि विहितं प्रकृतिभावं बाधितुं टिलोपो निपात्यते । यदि च णप्रत्यये ऽण्कार्य्यं न स्यात्तर्हि किं तेनेति । ताच्छीलिक इत्युक्त्या दण्डः प्रहरणमस्यां क्रीडायामित्यर्थे तदस्यां प्रहरणमिति णप्रत्यये दाण्डेति टाबन्त एवेति बोध्यम् । "प्राचां ष्फतद्धितः" इत्यत्र यञ एवानुवृत्तये "टिड्ढा" इतिसूत्रात्पृथग्योगे विभक्ते "यञश्च"इतिसूत्रे यद्यप्यपत्यप्रत्ययग्रहणं कर्तव्यमित्येव वार्त्तिककृता पठितं तथाऽप्यपत्याधिकारपरं तत् । तादृशश्च "गर्गादिभ्यो यञ्"इत्येतेनैव विहितस्तदन्तादेव च ङीप् नान्यस्मादित्यभिप्रेत्याह अनपत्याधिकारस्थादिति । अपत्याधिकारस्थभिन्नादित्यर्थः । अपत्यार्थभिन्नाद् अपत्यार्थेऽप्यपत्याधिकारस्थभिन्नाच्च न ङीबिति वर्तुलार्थः । आद्यमाह द्वैप्येति । 'द्वीपादनुसमुद्रं यञ्"इति यञ् ।

अन्त्यमाह दैव्येति । प्राग्दीव्यतीय इति । "तेन दीव्यति खनति जयति" इत्यतः प्राग् ये ऽर्था अपत्यादयस्तत्रायं विहितः, न तु "तस्यापत्यम्" इत्यधिकारे इत्यर्थः । यदा त्विदं वार्त्तिकं प्रत्याख्यातं भाष्ये, तदा तदुक्तयोगविभागाकारप्रश्लेषादिना "यञश्च" इत्यत्रापत्याधिकारस्थस्यैव यञो ग्रहणमिति व्याख्यानेन चोक्तार्थः क्रोडीकरणीय इति बोध्यम् । "प्राचां ष्फ—" इत्यत्र तद्धितग्रहणं किमर्थमित्याशङ्क्याह प्रातिपदिकत्वमिति । ष्फप्रत्ययान्तस्य प्रातिपदिकसंज्ञा यथा स्यादित्येवमर्थं तद्धितग्रहणम्, तेन "षिद्गौरा—" इति ङीष् सिध्यति । न च "षिद्गौरा—" इत्यत्र प्रातिपदिकविशेषणे सत्येवं स्यात् किंतु तस्यैव फलाभावेन व्यर्थत्वादिति वाच्यम् । त्रपा क्षमा मृजेत्यादौ धातोः षितो ङीष्वारणफलकत्वात् । ननु तत्र 'षितो ऽङ्प्रत्ययसम्पादनेन चरितार्थत्वादिह न स्याद्' इति कैयटोक्तेः । नच यञन्ते "यस्येति च" इति लोपार्थं तत्तद्धितग्रहणमिति वाच्यम् । सवर्णदीर्घेणापि सिद्धेरिति चेत्सत्यम् । इञन्तादपि ष्फः क्वचित् स्यादिति ज्ञापनार्थं तद्ग्रहणात् । तेन "आसुरेरुपसंख्यानम्" इति सिद्धमित्याहुः । ननु स्त्रियामेव ष्फ-

विधानादुक्तार्थानामप्रयोग इति न्यायेन ङीष् न स्या-दत आह षित्त्वसामर्थ्यादिति । ननु षित्त्व-सामर्थ्यात् प्रातिपदिकादेवेकारो न भविष्यतीति भा-ष्योक्तेः कथमीदृक् सामर्थ्यं व्यवस्थाप्यते । किं ततः, तावताऽपीदृशमन्तरा सामर्थ्यस्योपक्षीणत्वात् । उक्ते ऽपीति । प्रकृत्या स्त्रीत्वार्थे उक्ते ष्फप्रत्ययेन द्योतिते ऽपीत्यर्थः । सिद्धान्तसम्मते 'पञ्चकं प्रातिपदिकार्थः' इति पक्षे प्रत्ययानां द्योतकत्वस्यैव युक्तत्वादिति कारकादौ निरूपयिष्यते । द्योतकविषये 'उक्तार्थाना-म्'इत्ययं न्यायो न प्रवर्तते । व्यतिलुनाति इत्यादौ द्योतकसमुच्चयस्येष्टत्वात् । "द्विर्बद्धं सुबद्धं भवति'-इति न्यायात् । अत्रेदं षित्त्वं ज्ञापकम् । अत एव "येनाङ्गविकारः"इति सूत्रे भाष्ये 'अक्ष्णा काणः' इति प्रयोगः सङ्गच्छते । तत्र काणशब्दो ऽक्षिगतवि-कारवाचकः । किं च 'हरत्यघं सम्प्रति'इति मा-घप्रयोगो ऽप्युपपद्यते इति दिक् । द्योतकविषये ऽप्यु-क्तार्थानामिति प्रवर्तते क्वचित् गमकबलादिति का-रकप्रघट्टके वक्ष्यते । कुण्डोध्नी धैनुकमिति । कुण्डव-दूधो यस्य धेनूनां समूहस्य इत्यर्थे "अचित्तहस्ति-धेनोष्ठक्", "इसुसुक्तान्तात्कः" । तद्विधौ स्त्रिया-

मिति । तच्च वार्त्तिकम् । नन्विहैव बहुव्रीहेरूधसो ङीष् नश्चेति सूत्र्यतामनङ् चेति वा, समासान्तेषु "ऊधसो ऽनङ्" इति सूत्रं त्यक्त्वा धनुषो नङ् इति सूत्र्यतामिति चेन्न । कबभावे लब्धानङ्समासान्तत्वसरस्यास्य पक्षे कपा बाधापत्तेः । यथान्यासे तु अनङः समासान्ततया शेषत्वाभावान्न कप् । ननु "ऊधसो ऽनङ्" इतिसूत्रे नादेश एवास्तु, किं ङित्करणेनेति चेन्मैवम् । न चेहार्थमप्यावश्यकम्, अन्यथा "अल्लोपो ऽनः" इति न स्यात्, अनो लाक्षणिकत्वादिति वाच्यम् । भाष्यवार्त्तिकाविरोधेन लक्षणप्रतिपदोक्तपरिभाषाया इहाप्रवृत्तेरिति वदन्ति । ननु ममेयमित्यर्थे "युष्मदस्मदोरन्यतरस्यां खञ् च" इत्यण्, "तवकममकावेकवचने" इति ममकादेशे सत्यणन्तत्वाद् "टिड्ढा—" इतिसिद्धे ऽत्र तद्ग्रहणं व्यर्थमत आह नियमार्थमिति । "नित्यं संज्ञाच्छन्दसोः" इतिसम्पूर्णानुवृत्तेः संज्ञाच्छन्दसोरेव ङीबिति नियमशरीरम् । व्यावर्त्यमाह लोके ऽसंज्ञायामिति । ननु नेदं व्यावृत्तिफलम् । प्रत्ययस्थककाराभावप्रयुक्तेत्वाप्राप्तावपि "मामकनरकयोः" इति वार्त्तिकेनापि प्रकृतिककारे इत्वविधानेनैव ङीपो ऽप्रवृत्तेरिति चेन्न । आप्परत्वा-

भावे ऽपि सामर्थ्यादित्वकरणेन सिद्धार्थत्वात् । अन्तर्वदिति मतुप् पतिवदिति वत्वं च नुक्सन्नियोगेन नियम्यते । किमविशेषेण नेत्याह गर्भिण्यां जीवत्पतिकायां चेत्युक्तं भाष्ये, । तदेवाह गर्भिण्यामित्यादि । अन्यथासिद्ध्यभावमाह तत्रेत्यादिना । अन्तःशब्दस्य, मध्ये इत्यर्थकस्य । तदेवाह अधिकरणेति । शब्दशक्तिस्वभावादिति भावः । एवं चास्यान्यद्वारैव क्रियायोगः सप्तम्यर्थस्यैवेति भाव इत्याह अस्तिसामानाधिकरण्येति । "तदस्यास्त्यस्मिन्निति मतुब्"इति सूत्रस्य तदिति प्रथमान्तात् षष्ठ्यर्थे सप्तम्यर्थे चास्तिना सामानाधिकरण्ये सति मतुप्स्यादित्यर्थे प्रथमान्तस्यास्तीत्यत्र तिङर्थेन सामान्यकर्त्रा ऽभेदान्वयेन ततो मतुप् सिध्यति, प्रकृते च तदभावादप्राप्तिरिति भावः । ननु तत्सूत्तशक्तिस्वभावादेव बहुव्रीहाविव वर्त्तमानकालास्त्यर्थान्तर्भावेन मतुप् । अस्तिग्रहणं तु अस्तिशब्दादस्तिसामानाधिकरण्याभावेनाप्राप्तमतुपो विधानार्थं, तेनास्तिमानिति सिद्धम्, सत्ताकर्तृधनवानिति तदर्थ इति स्पष्टं भाष्ये । एवं चात्रापि तथैव मतुबस्त्विति चेन्न । तेन प्रथमान्तादेव मतुपो विधानात् ।

कथमन्यथाऽस्तिना सामानाधिकरण्यं नास्तीत्यप्राप्तो मतुप् निपात्यते ऽन्तर्वदिति भाष्यकारा व्याचक्षीरन्नित्यलम् ।

ननु "पत्युर्न" इत्यत्राधिकारलब्धम् "अनुपसर्जनाद्"इति, तच्च पत्युरितिषष्ठ्यन्तस्यानुगुण्याय षष्ठ्यन्तं कल्प्यते ऽनुपसर्जनस्य पत्युरिति, तत्सम्बन्धिनो ऽनुवृत्तिरित्याशङ्क्याह अनुपसर्जनस्येत्यादि । उत्तरार्थम्, पूतक्रतोरित्याद्यर्थम्, न तु पत्युरिति ।

अयं भावः—"सपूर्वस्य"इत्यत्र सहशब्दो विद्यमानवाची, पूर्वशब्दः पूर्वावयवपरो, व्याख्यानात् । तत्र केवलपतिशब्दस्य विद्यमानपूर्वावयवत्वासम्भवादव्यभिचाराच्च सामर्थ्यात् पतिशब्देन "ग्रहणवता प्रातिपदिकेन न तदन्तविधिः"इतिप्रतिषेधं बाधित्वा तदन्तं गृह्यते, तदुक्तम् पतिशब्दान्तस्येति । तथा च केवलः पतिशब्दो ऽत्र नावतिष्ठते सपूर्वस्येतिविशेषणादिति कथमनुपसर्जनस्येतिविशेषणं भवितुमर्हति किन्तु पत्यन्तस्यैवेति ।

तदाह तदन्तस्येति । बहुव्रीहाविति । इदमुपसर्जनस्योपलक्षणम्, तेन पतिमतिक्रान्ता ऽतिपत्नीति सिध्यति । दृढपत्नी । दृढः पतिर्यस्या इति विग्रहः । इह पत्यन्तो नोपसर्जनम्, किन्तु पति-

रेवेति विकल्पसिद्धिः । बहवो वृषलपतयो यस्या इति कर्मधारयोत्तरपदबहुव्रीहौ वारणायेहार्थोऽप्यनुपसर्जनपदसम्बन्ध इत्यन्ये । तदयुक्तं, भाष्यकैयटविरोधात् । ननु विद्यमानपूर्वावयवस्येत्यनेन समास इति पर्य्यवस्यति, तत्कथमन्यत्रेति शङ्कते व्यस्ते कथमिति । नन्वेतत्सूत्राप्राप्तेरपि "पत्युर्नः" इति तत्सिद्धेः शङ्कैव नोदेति । मैवम् । पूर्वसूत्रे यज्ञसंयोगः यज्ञसम्बन्धः, स च यज्ञफलप्रातियोगिकैश्वर्य्यवत्त्वम्, तदाशयेन तत्कर्तृकेत्यादिरर्थ उक्तः । यज्ञे तु त्रैवर्णिकानामेव सभार्य्याणामधिकारः, न तु शूद्रस्य । "यत्कर्तव्यं तदनया सह" इतिश्रुत्या बोधितार्थश्चोक्तो दम्पत्योरित्यादिना । तथा च श्रुत्यधिकारिणां तथा प्रयोगो नान्त्यजस्येत्यदोषात् । तदुक्तं भाष्ये, "यज्ञसंयोग इत्युच्यते तुषजकस्य पत्नीति न सिध्यति, उपमानात्सिद्धम्, पत्नीव पत्नी" इति, तदाह । उपचारादिति । अग्निसाक्षिकपाणिग्रहणाश्रयणादिना भावः । नन्वेवं यज्ञसंयोग इत्यस्य व्यावर्त्यालाभाद्वैयर्थ्यमित्याशङ्क्य स्वयं गत्यन्तरमाह यद्वेति । पतिरिवाचरतीति "उपमानादाचारे" इति क्विपि पतयति, ततः कर्तरि क्विप् कृत्संज्ञः, अत्र दृढप्रमाणाभावात् प्रौढिः ।

यज्ञसंयोग इति तु वृषलस्य पतिः स्त्रीतिप्रयोगसाधनेन चरितार्थमिति प्रथमं भाष्योक्तिसहायं समाधानमेव ज्याय इत्यलं भाष्यकैयटविरुद्धकल्पनया । सपूर्वस्य किमिति । पूर्वावयवपरः पूर्वशब्दः किमर्थं इति प्रश्नः । गवां पतिरिति । स्वामिनीत्यर्थः । पातीति पतिरितिक्रियाशब्दस्य त्रिलिङ्गत्वात्स्त्रीत्वमिति सङ्क्षेपः । मातरि षिच्चेति । "पितृव्यमातुल—"इतिसूत्रस्थमिदं पितामहीतिसिद्ध्यर्थम् । दंष्ट्रेति । दंशेर्दाम्नीशसेति करणे ष्ट्रन् । अयमजादिषु पठ्यते, गौरादिषु मातामहीपाठो ऽनार्ष इत्यन्ये । ननु कमण्डलुरूपामत्रार्थातिरिक्ते कुडि दाह इत्यस्माद् "गुरोश्च हलः" इत्यप्रत्ययान्तः क्रियाशब्दो भवतु प्रत्युदाहरणम्, अन्यो वारणीय इत्याशङ्क्याह यस्त्विति ।

अमृते जारजः कुण्डो मृते भर्त्तरि गोलकः ।—

इतिकोशाज्जातिवाची । ङीषिति । "जातेरस्त्रीविषयाद्"इत्यनेन । तत्र हि यः स्त्रीलिङ्गे नियतो, न तस्माद्विधीयते, अयं तु न तथाभूतः । कुण्डी कमण्डलौ जारात्पतिवत्नीसुते पुमानिति मेदिनीकोशादुक्तकोशाच्च । ननु मेदिनीकोशात्पिठरे तु न ना कुण्डमितिविश्वकोशात्स्त्रीनपुंसकयोः कुण्डशब्दस्य बोधनात्क-

मण्डलुपिठरयोः पर्यायत्वेनैकार्थ्यात् स्त्रियामनियतत्वेन "जातेरस्त्री—"इति ङीषि सिद्धे "जानपदकुण्ड—"इत्यस्य नियमार्थत्वेन कथममत्रातिरिक्ते जातिलक्षणो ङीषित्याशङ्क्य अनेकविधसंस्थानेष्वमत्रेषु कुण्डव्यवहारेण कुण्डत्वे जातित्वस्यैवाभावात्तेनाप्राप्ते जानपदेत्यनेनैव विधीयते इत्यभिसन्धायाह अमत्रे हीत्यादि । स्त्रीविषयत्वादिति तूपलक्षणम् । तस्मादुक्ते कुण्डीति सिद्धम् । अन्ये तु कमण्डलुरूपामत्रवाचिनो जातित्वमस्त्येवेति जातेरिति सिद्धे जानपदेति नियमार्थम्, अमृते भर्तरि जारजायां कुण्डेत्येवेत्याहुः । उतः किमिति । नन्वेतदभावे अत इति सम्बन्धे शुचिरित्यादौ न दोष इत्याशङ्क्य खरुसंयोगोपधादिति निषेधसामर्थ्यान्नात्रात इत्यनुवर्तते इति प्रश्नः । शुचिरिति । शुचेरौणादिकः कित् इप्रत्ययः । उणादीनामव्युत्पन्नत्वात् "कृदिकारात्"इत्यस्याप्यप्रवृत्तेरनेन ङीष् स्यादित्युत्तरम् । अन्ये त्वौणादिके व्युत्पत्तिपक्षस्यैव सिद्धान्तितत्वादत्र कृदित्यनेन ङीष इष्टत्वान्नेदं प्रत्युदाहरणं, किन्तु शुक्लेति । तत्र खर्विति कोट्योरत इत्यस्याभावे ऽत इत्यस्य सम्बन्धाभावबोधनद्वारोकारान्तत्वादेव ङीषप-

र्यवसाने ऽपि ततो ऽपि परत्वात् संयोगोपधेत्यनेनोकारादीनामपि सम्भवात्ततो ङीष्बोधनादित्याहुः ।

ननु स्वमङ्गं स्वाङ्गमित्यर्थश्चेत् सुमुखा शालेत्यत्रापि स्यात्, मुखस्य शालाङ्गत्वात्, सुकेशी रथ्येत्यत्र च न स्यात्, केशानां रथ्याङ्गत्वाभावादित्यतिव्याप्त्यव्याप्तिपरिहारायाह स्वाङ्गं त्रिधेति । स्पर्शवद्द्रव्यपरिमाणं मूर्तिः । प्राणीति । मुखनासिकासञ्चारी वायुः प्राणः, सो ऽस्त्यस्य । विकारो वातादिवैषम्यम् । एतच्चतुष्टयमेकलक्षणम्, तच्च केशादावस्ति, इतरत्र तु नास्तीत्याह सुमुखेत्यादिक्रमेण । इदानीं सुकेशी रथ्येत्यादौ केशस्य प्राणिस्थत्वाभावेन ङीषो ऽप्राप्तौ द्वितीयं लक्षणमाह अतत्स्थमिति । न तस्मिन् प्राणिनि तिष्ठतीति । तत्र प्राणिनि दृष्टम् तदपि स्वाङ्गमित्यर्थः, तदाह अप्राणिस्थस्येति । ननु सुस्तनी प्रतिमेत्यत्र प्रतिमागतस्तनस्य प्राणिनि कदाऽप्यदृष्टत्वान्न स्यादिति तृतीयं लक्षणमाह तेनेति । अप्राणिनो ऽपि स्वाङ्गं यदि तेन तज्जातीयेन वस्तुना प्राणी यथा सम्बद्धस्तथाऽप्राणी चेत् सम्बद्धस्तदपि स्वाङ्गमित्यर्थस्तदाह प्राणिवदिति । इदं च स्पष्टं भाष्यकैयटयोः । "स्वा-

ङ्गाच्चो,— नासिकोदर, नक्रोडा सहनञ्'' इति पाठक्रमः, उत्सर्गनिषेधयोर्विप्रतिषेधाभावेन कल्याणक्रोडेत्यादौ सावकाशेन नक्रोडादीत्यनेन नासिकोदरयोरपि निषेधे प्राप्ते निरवकाशत्वेनायमपवाद इत्याह द्वयोरिति। ननु बाध्यसामान्यचिन्तया सहनञित्यपि बाध्यतामत आह पुरस्तादिति। लक्ष्यानुरोधेन बाध्यविशेषचिन्तैवाश्रितेति भावः। अत एव सहनञित्यादि वक्ष्यति समनन्तरमेव। एतन्न्यायेन स्वाङ्गादिति बाधितं न स्यादिति न्यायान्तरमाह मध्ये ऽपवादेति। मध्ये ऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरानिति न्यायशरीरम्। नैराकाङ्क्ष्यमस्य बीजम्। ननु बाध्यसामान्यचिन्तामाश्रित्य सर्वं बाध्यतां, किमुक्तन्यायद्वयानुसरणेनेति चेन्मैवम्। सहनञित्यस्यापि बाधापत्तेः। न्यायाविमौ तत्रैव स्पष्टौ भाष्ये। परत्वादिति। सहेत्यादिपूर्वातिरिक्ते चरितार्थत्वात्। निपातानामनेकार्थत्वादाह इतिशब्दः प्रकारे इति। तथा च भाषायामिति न कार्यं "दीर्घजिह्वी च च्छन्दसि''इत्यतः छन्दसीत्यस्य "दिक्पूर्व—" "वाहः"इतिसूत्रयोः सम्बन्धेनास्वरितत्वादत्राप्यसम्बन्धसिद्धेः। स च भिन्नक्रम इत्याह अनन्तरमिति।

प्रकारस्य सादृश्यार्थत्वादाह छन्दसीति । अतिदिष्टस्य कादाचित्कत्वादाह क्वचिदिति । तेन "सखा सप्तपदी भव" इत्यपि सिद्धम् ।

अन्ये तु पूर्वसूत्रयोरपि च्छन्दसीत्यस्यानुवृत्तेर्भाष्ये दृष्टत्वादिहापि तत्सम्बन्धे प्राप्ते तन्निवृत्तये भाषायामिति, इतिशब्दश्चकारार्थे, तेन छन्दस्यपीत्याहुः ।

केचित्तु तादृशभाष्यस्य प्राचीनपुस्तकेष्वदर्शनान्नानुवृत्तिरिति वदन्ति ।

ननु भिन्नेष्वभिन्नाभिधानबोधहेतुर्नित्यमेकमनेकानुगतं सामान्यं जातिरिति दर्शनसिद्धम्, तच्च शुक्लादिगुणेऽप्येकत्वनित्यत्वपक्षेऽतिव्याप्तम्, जननेन प्राप्यते सा जातिरित्यपि युक्तत्वादात्रव्याप्तमिति का सा जातिरित्यत आह आकृतीति । आकृतिरवयवसन्निवेशो, गृह्यते ऽनेनेति ग्रहणमिति करणे ल्युट्, सामान्ये नपुंसकम् । आकृतिर्ग्रहणं यस्या इति विग्रहस्तदाह अनुगतेति । ईदृशाकारो गौरित्याकृत्युपदेशादिन्यङ्ग्येत्यर्थः । तटीति । जलसमीपदेशविशेषो हि तटम् । ननु बालाद्यवस्थाभेदाभिन्नानेकदेहवृत्तिदेवदत्तत्वादेराकृतिव्यङ्ग्यत्वेन लक्षणमतिप्रसक्तमिति चेन्नैवम् । समानकालिकानेकव्यक्तिवृत्त्यनुगतसं-

स्थानव्यङ्ग्येत्यर्थात् । अत्रस्थाभेदेऽपि तद्भेदाप्रतीतिश्च स एवायमिति प्रतीतेश्चेति दिक् । ननु ब्राह्मणक्षत्रियादिव्यावृत्तावयवसंस्थानाभावाद् वृषलत्वादीनां जातित्वं न स्यादतो लक्षणान्तरमाह लिङ्गानामित्यादि । इदमपि जातिरित्यर्थः । सर्वाणि लिङ्गानि न भजतीति सर्वशब्दस्य लिङ्गेन सापेक्षत्वेनासामर्थ्ये भाष्यप्रयोगप्रामाण्यात् ण्त्रिसमासौ । आख्यातमाख्यानमुपदेशः, निर्ग्राह्या नितरां ग्रहीतुं शक्या, तदाह असर्वलिङ्गेति । वृषलीति । एकत्र व्यक्तौ वृषलत्वे उपदिष्टे तदपत्यतत्सहोदरादौ वृषलत्वं सुग्रहमिति भावः । ननूक्तजातिलक्षणाभ्यामौपगवी कठीत्यादेरसङ्ग्रहो ऽनुगतसंस्थानव्यङ्ग्यत्वाभावात् सर्वलिङ्गत्वाच्चेत्यतस्तृतीयं लक्षणमाह गोत्रमिति । गोत्रपदार्थमाह अपत्येति । चरणपदेन विवक्षितमर्थमाह शाखेति । शाखाया अध्येतेति विग्रहः । कठी बह्वृचीति । कठेन प्रोक्तमधीते वैशम्पायनान्तेवासित्वाण्णिनेः कठचरकाल्लुक्, अध्येत्रणस्तु प्रोक्ताल्लुक् । बह्वय ऋचो ऽध्येतव्या यस्याः सा, "ऋक्पूः"इत्यप् । 'न स्त्रीशूद्रौ वेदमधीयाताम्'इति श्रुत्याऽध्ययननिषेधेऽपि तद्वंश्यत्वात्ताच्छब्द्यमित्यधिकं नागेशीये । नन्वलाबूरितिभाष्योदा-

हरणादुत इति न सम्बध्यते कथमुकारान्तत्वलाभो ऽत आह पर्युदासादिति । स च सदृग्ग्राहीति(१) भावः । ऊङः फलं दिदर्शयिषुस्तृतीयान्तमुपाहरति अलाब्वेति । नोङ्धात्वोरिति । ऊङो धातोश्च परे शसादय उदात्ता न स्युरिति तदर्थः । एतदर्थमेव ङकारः कृतः, अन्यथा यवाग्वेत्यादावपि निषेधः स्यात् । ननूङि दीर्घोच्चारणमसाम्प्रतिकम् । प्रयोगाणां सवर्णदीर्घेणैव प्रतिपत्तेः । न च श्वश्रूरित्येतत्साधनार्थम्, "श्वशुरः श्वश्र्वा" इति निर्देशात् सिद्धेः । सत्यप्यूङि तन्निर्देशेनैवान्त्याकारलोपो ऽन्यथाऽऽदिभूतवकाराकारस्यापि लोपापत्तिः । ङ्याबित्यत्र चतुर्थे भाष्ये श्वश्रूरित्येतददन्तमव्युत्पन्नं प्रातिपदिकमितिस्वरसात्तत्स्वरलाभः स्याद् वृत्त्यादिपठितं श्वशुरस्येतिवचनमनादेयमिति चेन्न । प्रश्लेषेणोकारद्वयप्रतिपादनद्वारा ब्रह्मबन्धूरित्यादिबहुव्रीहौ परकार्यनिवृत्त्यर्थत्वादिदं स्पष्टं भाष्ये । ननूरुशफयोरेकार्थत्वाभावात् व्यधिकरणत्वेन समासार्थासङ्गतिरित्याश-

---

(१) अयं भावः—पर्युदासस्थले नञ आरोपितप्रवृत्तिनिमित्तबोधकत्वम्, आरोपश्च सदृश एवेति पर्युदासस्य सदृशग्राहित्वप्रवादः । अत एव अत्वं भवसीत्यादौ युष्मदर्थप्राधान्येन मध्यमपुरुषः, अतौ भवत इत्यादौ द्विवचनतस उपपत्तिः, अन्यथा सदृशपदार्थस्यैक्येनायुष्मदर्थत्वेन च तन्न स्यादिति दिक् ।

ङ्क्य शफं क्लीबे खुरः पुमानित्यमरोक्ते ऽपि शफः खुरे गवादीनां मूले विटपिनामपीतिहेमचन्द्रोक्तेः शफाविव जर्भुराणेतिश्रुतेश्च शफस्य पुंलिङ्गत्वमपीति ध्वनयन्नाह शफावित्यादि। इवेति नोपमाद्योतकं किन्तु फलितार्थकथनपरमित्याह उपचारादिति। शफशब्दप्रवृत्तिनिमित्तस्योरुपदार्थे आरोपाल्लक्षणयेति भावः। शक्यतावच्छेदकारोप एव लक्षणेत्यन्यत्र विस्तरश्चिन्तामणौ च। ननु वार्त्तिकं व्यर्थम्, आद्यस्य "समो वा हिततयोः" इति निष्पन्नस्यैकदेशविकृतन्यायेन संहितेतिसूत्रेणैव सिद्धेः, अन्त्यस्य सहशब्दस्य सर्वस्याप्यूरुसाहितत्वेन सहोरूरिति प्रयोगस्यैवाभावादित्याशङ्क्याद्ये आह हितेनेति। विद्यमानं हितन्तयोरितिवक्तव्यार्थः। अन्त्ये आह सहेते इति। नितम्बभारं रतिश्रमं वेति शेषः। अस्तु वा सहो विद्यमानार्थकः, एवमपि न दोष इत्याह यद्वेति। अतिमनोहराकृती ऊरू यस्या इत्यर्थः। कमलानि कमलानीतिवदियमलङ्कारपरिपुष्टिः, कैयटे स्पष्टम्। संज्ञायां किमिति। "उङुत" इत्यत्र मनुष्यजातेरित्यनुवृत्तिः, अत एव "पङ्गोश्च बाह्वन्तात् संज्ञायाम्" ति चरितार्थौ, तथाऽप्यविशेषात् "संज्ञायां कद्रुकम-

ण्डल्वोः छन्दसि'' इत्यनेन सिद्धिरिति प्रश्नः। लोके नागमातुस्संज्ञाया कद्रूरित्यादि न सिद्ध्येदित्युत्तरम्। एवं चेह लौकिकार्थमित्याह अच्छन्दोऽर्थमिति। युवतिरित्यत्र तद्धितान्तत्वेन प्रातिपदिकसंज्ञार्थं "यूनस्तिः"इत्यस्याधिकारे पाठः, सा च परिभाषयैव सिद्धेति किमर्थो ऽधिकार इत्यत आह उत्तरार्थ इति। इहकरणं परिभाषाया अनित्यताज्ञापनार्थमित्यन्ये। ननु टापः प्रागेवाधिक्रियता, "प्राचां ष्फ"—"यस्येति च"इत्यनयोः तद्धितेदूग्रहणे च मा स्ताम्। नैतत्, पटूवीत्यादावोर्गुणप्रसङ्गात्। न चेदूग्रहणमेव ङीषि तद्धितकार्याभावं ज्ञापयतीति नोक्तदोष इति वाच्यम्। कुरूरित्यादावतिप्रसङ्गात्। न च कुरूरित्यादिसिद्धये स्त्रीप्रत्ययेषु तद्धितकार्याभावज्ञापकमोदूग्रहणमिति चेत्, आसुरायणीत्यादौ ष्फेऽपि यस्येति लोपानापत्तेः। अत एव दण्डिनीत्यादौ टिलोपो नेत्याहुः।

ननु युवतीकरनिर्मितं दधीति कथं प्रयोगः, "सर्वतो ऽक्तिन्नर्थाद्''इति गणसूत्रेण तिप्रत्ययेन द्योतिते ऽपि स्त्रीत्वे द्योतकसमुच्चयस्यादोषात् ङीष्सिद्धेः। बाहुलकात् यौतेरौणादिकेन कनिप्रत्ययेन सिद्धेश्च।

आद्ये युवतीनां समूह इत्यर्थे ऽणि "भस्याढे" इति पुंवद्भावे यौवनमिति स्यात्, इष्यते तु यौवतमिति । अन्त्ये ऽगतिकगतित्वं चेति मनसि निधायाह श-त्रन्तादिति । यौति मिश्रीकरोत्यात्मानं ययेत्यर्थे लटः शतुर्ङीप् । एवं न यौवतमुक्तरीत्या सिद्धं, त्यन्तात्तु यौवनमित्येव । न च भिक्षादिपाठसामर्थ्यान्न पूंवत्, तत्पाठस्य भाष्यकृता प्रत्याख्यानादिति सङ्क्षेपः॥

इति स्त्रीप्रत्ययाः ॥

अथ स्वौजसित्यादिना विहितसुपामर्थविशेषव्य-वस्थादर्शनाय कारकप्रकरणारम्भः । तत्र जातिव्य-क्तिलिङ्गसंख्याकारकेतिपञ्चकं प्रातिपदिकार्थ इति भ-गवद्भाष्यकृतकृतुनान्तः । तथा च "द्व्येकयोः" इत्यादिना प्रातिपदिकार्थेति सूत्रस्यैकवाक्यतया लिङ्गग्रहणेन च सत्त्वाभिधायिन एव प्रातिपदिकार्थेत्यस्य सङ्ग्रहादव्य-यात् प्रथमाया अनुत्पत्तावुच्चैरित्यादौ रुत्वं ग्राम उच्चैस्ते स्वमित्यत्र "सपूर्वायाः प्रथमाया" इति ते-आदेशो न स्यादिति तदर्थं प्रातिपदिकार्थेत्यस्याव-श्यकत्वात्ततश्च लिङ्गेत्यस्य गतार्थत्वाद्वैयर्थ्यमित्यतो विवक्षितमाह नियतेति । यस्मिन् प्रतिपदिके उच्चा-

रिते यस्यार्थस्य नियमेनोपस्थितिः स तदर्थ इत्यर्थः । तटादिशब्दानां तत्तत्प्रत्ययसमभिव्याहारे सकललिङ्गबोधकतया न किमपि लिङ्गं तेभ्यो नियतोपस्थितिकमिति न तद्बोध्यलिङ्गस्य प्रातिपदिकार्थेति सङ्ग्रह इति लिङ्गग्रहणमित्याशयः । नन्वेवं सिंहो माणवको गौर्वाहीक इत्यादौ सिंहादिसदृशरूपार्थस्य शक्यार्थरूपप्रातिपदिकार्थेत्यनेनासङ्ग्रहात् प्रथमानुपपत्तिरिति चेन्न । शक्यार्थे पदं साधुत्वेनान्वाख्याय पश्चात् पदान्तरसमभिहारे तात्पर्यानुपपत्त्या लक्षणाङ्गीकारेण लक्ष्यार्थबोधेन सर्वसामञ्जस्यात् । न च 'विभक्तौ न लक्षणा'इतिवादाविवादः, एकविभक्तेरपरविभक्तौ न लक्षणा, 'व्यत्ययो बहुलम्'इत्यनुशासनविरोधादित्याशयात् । लक्षणा तु शक्यतावच्छेदकारोप एव, अतस्मिन् स इत्यारोपार्थकभाष्यस्वरसात्, आरोप्यते ताद्रूप्यं न तु मुख्यमिति कैयटोक्तेश्च । यथाऽऽह सिंहत्वादिरूपावच्छेदकस्यारोपो माणवकादौ ।

ननु शक्यसंबन्धो हि लक्षणा । अन्यथा शक्यादन्येन रूपेण ज्ञाते भवति लक्षणेत्यभियुक्तोक्तिविरुध्येतेति चेन्न । भाष्याद्यसंस्पर्शात् । शक्यतावच्छेदकान्यरूपवत्त्वेन गृहीतेऽर्थे लक्षणा । शक्य-

तावच्छेदकारोप इत्यर्थवर्णनेनाभियुक्तोक्तेर्मदुक्तलक्षणालक्षणपक्षपातित्वेनाविरोधाच्चेत्यधिकं नागेशीयचिन्तामण्योः ।

ननु 'कर्मणि द्वितीयैव'इतीहार्थनियमात् प्रातिपदिकार्थादौ केवलप्रथमायाः पर्यवसानादवधारणार्थकमात्रग्रहो व्यर्थ इत्याशङ्क्य सूत्रकृत्सम्मते 'कर्मण्येव द्वितीया'इत्याकारकप्रत्ययनियमे कर्मादीनामनियमात्तेष्वपि प्रथमातिप्रसङ्गभङ्गाय तद्ग्रहणमित्याशयेनाह मात्रशब्दस्येति । मात्रं कार्त्स्न्ये ऽवधारणे चेत्यमरादिहावधारणमर्थः, द्वन्द्वोत्तरमस्वपदविग्रहे मयूरव्यंसकादित्वात् समासो ऽवधेयः । प्रत्येकं योग इति । द्वन्द्वे इतरेतरयोगसमाहारयोः समूहो विशेष्यो घटकपदार्था विशेषणानीति समूहस्य च स्वशब्दैरेवाभिधानेनावयवानतिरेकेण भानाभावात्तत्रान्वयिनीवावयवे ऽप्यन्वयसम्भवादित्यभिप्रायः । एतन्मूलकमेवोच्यते द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते इति, उपपादयिष्यते चेदं समासे । ननु वीरः पुरुष इत्यादौ विशेष्यविशेषणभावस्याधिकस्य भानात् कथं प्रथमा । न च पूर्वापरेतिसमासविधानाज् ज्ञापकात् स्यादेव सा प्रथमा द्वितीयाद्यन्ते तद्विधानस्य चारिता-

ष्यादिति चेन्नैवम् । तस्य वाक्यार्थत्वेन प्रथमप्रवृत्त-संस्कारबाधानुपपत्तेः । तदुक्तमत्रैव भाष्ये । "यदत्राधिक्यं स वाक्यार्थः" इति । निरुक्तप्रातिपदिकार्थ-स्वीकारात् फलितमाह अलिङ्गा इत्यादि । असत्त्वभूतत्वेन तत्र लिङ्गाद्ययोगादलिङ्गत्वव्यवहारादिति भावः । न चालिङ्गत्वे 'सदृशं त्रिषु लिङ्गेषु' इत्याथर्वणप्रणवविद्यागतश्रुतिविरोधः यथोपक्रमोपसंहाराभ्यामस्याः श्रुतेर्ब्रह्मपराया अप्यत्र भाष्यप्रामाण्यादुपसंहारस्तथा लिङ्गाद्यभावपरताया अपि सुलभत्वात् । 'आब्ग्रहणं व्यर्थमलिङ्गत्वाद्' इति वार्तिकोक्तेश्च । न चाव्ययीभावस्य कथं लिङ्गयोगः, वचनप्रामाण्यादिति दिक् । नियतलिङ्गा इति । नियमेन पुंलिङ्गाद्युपस्थापका इत्यर्थः । वासुदेवलक्ष्मीब्रह्मपराः कृष्णश्रीज्ञानशब्दा नियमेन पुंस्त्रीक्लीबानुपस्थापयन्तीति भावः । मात्रपदेन कर्माद्याधिक्ये प्रथमा न भवेत, अपि तु लिङ्गपरिमाणग्रहणाल्लिङ्गाधिक्ये परिमाणाधिक्ये च स्यादेवेत्याशयेन लिङ्गमात्राधिक्य इत्युक्तम् । यद्यपि लिङ्गादिमात्रे इत्येवाक्षरार्थः, तथापि प्रातिपदिकार्थं विना लिङ्गादिप्रतीतेरसम्भवादाधिक्यग्रहणात् ।

अन्ये तु सूत्रे प्रातिपदिकार्थशब्देन प्रवृत्तिनि-

मित्तं तदाश्रयश्च गृह्यते । एवं चालिङ्गा लिङ्ग-प्रवृत्तिनिमित्तकाश्चाव्ययपुम्शब्दादयः प्रातिपदिकार्थ इत्यस्योदाहरणम्, अन्ये सर्वे लिङ्गाधिक्ये इत्यस्येति सविस्तरं प्राहुः ।

ननु द्रोणादीनां परिमाणमर्थ इति प्रातिपदिकार्थ इत्यनेन सिद्धावेतदग्रहो व्यर्थ इत्याशङ्क्य यदा मा-नमेयसम्बन्धात् व्रीह्यादौ द्रोणादयो वर्तन्ते तदा-व्यभिचाराज्ञास्ति मेयस्य ततो नियतोपस्थितिरिति तेनागतार्थत्वमित्यभिप्रेत्य प्रथमार्थमाह **परिमाणेति** । एवं च मानमेयभावस्य संसर्गविधया शाब्दबोधे भा-नार्थ प्रमेय एव द्रोणादीनामर्थः । अन्यथा ना-मार्थयोरभेदबोधस्य व्युत्पत्तिसिद्धत्वादभेदबोध एव स्यादिति भावः । तदेवोपपादयति **द्रोणरूपमित्या-दिना** । द्रोणाभिन्नमित्यर्थः । ननु पाचक औप-गव इत्यादौ पचनाश्रय उपगवपत्यमित्यर्थेन भाष्या-दिसिद्धेन सर्वत्र भेदान्वय एव प्रकृतिप्रत्ययार्थयो-रिति कथमुक्तार्थलाभ इत्याशङ्क्या "आमिक्षा देवता-युक्तां वदत्यैवैष तद्धित"इति मीमांसकनिकाये-न देवतार्थकतद्धितादावैन्द्रंहविरित्यादाविन्द्राभिन्नदेवताकं हविरिति बोधस्याभ्युपगमादिहाप्यदोषादित्यभिप्रेत्य

विवेचयति प्रत्ययार्थे इत्यादि । प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यमिति व्युत्पत्तेरिति भावः । अभेदेन संसर्गेणेति । इतरसम्बन्धानवच्छिन्नविशेषणविशेष्यभावेनेत्यर्थः । अभेदस्तु न संसर्ग(१)इति नागेशीयचिन्तामण्योर्विस्तर, स्तत एवावसेयः । प्रत्ययार्थस्तु, परिमाणं तु । परिच्छेद्यपरिच्छेदकभावेन, मेयमानसम्बन्धेन । व्रीहौ, धान्यादौ । एवं च द्रोणाभिन्नपरिमाणनिष्ठपरिच्छेदकतानिरूपितपरिच्छेद्यताविशिष्टो व्रीहिरित्यर्थः ।

अन्ये तु "तिङ्समानाधिकरणे प्रथमा" इति वार्तिकैकवाक्यतया परिमाणेत्यस्य परिमाणे वर्तमानात् प्रातिपदिकादित्येवार्थः । न च प्रातिपदिकार्थत्वात् सिद्धिः । प्रवृत्तिनिमित्ततदाश्रयद्रव्ययोरेवात्र प्रातिपदिकार्थपदेन ग्रहणात् । द्रोणादिपदानां च द्रोणत्वाद्येव प्रवृत्तिनिमित्तम् । द्रोणः परिमाणमिति द्वौ ब्राह्मणावितिवत्प्रयोगः । द्रोणस्यानेकार्थत्वाद्वा । एवं च भेदान्वयेन राज्ञः पुरुषमानयेतिवद्द्रोणो व्रीहिमानयेत्यस्या-

(१) सम्बन्धस्य द्विनिष्ठत्वाद् । अत एवाभियुक्तोक्तं 'संबन्धो हि द्विष्ठत्वे सति सम्बन्धिभिन्नत्वे सति आश्रयतया विशिष्टबुद्धिनियामक'इति लक्षणं सगच्छते । अभेदस्तु न द्विष्ठ इति न तस्य तत्त्वमिति भावः ।

प्यापत्तेः, द्रोणो व्रीहिरितिप्रयोगस्तु गौर्वाहीक इत्यादिवल्लक्षणया साधुः। तस्मात् परिमाणस्योदाहरणं द्रौणः खारी आढकमिति भाष्योक्तमेव रमणीयमिति प्राहुः।

ननु वचनशब्दो वाचकपर्यायः, स च व्यर्थो ऽर्थे शास्त्रीयकार्य्यासम्भवादिति संशय्य वाच्यवाचकयोरभेदाध्यवसायेन पूर्वाचार्य्यैः संख्यायां व्यवहृत इत्याशयेनाह वचनं संख्येति। उक्तार्थत्वादिति। "उक्तार्थानामप्रयोगः" इति न्यायादिति भावः। अर्थप्रत्यायनाय लोके शब्दः प्रयुज्यते, सचार्थो यद्यन्येन प्रतिपादितस्तदा प्रयोजनाभावाच्छब्दान्तरप्रयोगेण न भाव्यम्। अक्षिनिकोचेनाप्यवगते ऽर्थे शब्दो न प्रयुज्यते, किं पुनः शब्दान्तरेण प्रतिपादिते इत्यनभिहितसूत्रकैयटेन मूलमुपदर्शितम्। न्यायस्वीकारश्च भाष्ये ऽपीति नाप्रामाण्यमाशङ्क्यम्। अनभिहितसूत्रसत्त्वे तु तदधिकारात् परिगणनस्य भाष्ये प्रत्याख्यानात् सिद्धान्तपञ्चकपक्षे प्रातिपदिकेनाभिहित एकत्वादौ विभक्तेरप्राप्तिरिति भावः। ननु प्रातिपदिकत्वेनोक्तत्वं विभक्त्युत्पत्तौ न दूषकम्। अन्यथा पञ्चकपक्षे कर्मादौ द्वितीयाद्यनापपत्तेः, एवं

चोक्तार्थत्वादित्यादिग्रन्थश्चिन्त्य इति चेन्न। भाष्य-कैयटाद्यनवलोकनात्। यथोक्तमनभिहितसूत्रे, "अभिहिते प्रथमा न प्राप्नोति, किं कारणं, प्रातिपदिकेनाभिहितत्वस्याविनाभावाद्"अनभिहिताधिकारे ऽपि सूत्र-सामर्थ्यात् प्रथमा स्यादेव। तदप्युक्तं तत्रैव-न क्वचित् प्रातिपदिकेनानुक्तः प्रातिपदिकार्थः, उच्यते-च प्रथमा, सा वचनाद्भविष्यतीति। द्वितीयादयस्तु कर्मादीनां विध्यन्तरैरप्यभिहितत्वसम्भवात् प्रातिपदि-केनाभिधानमनादृत्य विध्यन्तरानभिधाने एव स्युरधि-कारसूत्रसत्त्वे, प्रत्याख्यानेऽप्यनभिधाने सावकाशा अ-भिहिते न स्युरेवेति गूढाभिसन्धिः। अस्मादेव व-क्ष्यति प्रातिपदिकार्थमात्रे प्रथमैवेति। तदेतत्सकल-मभिप्रेत्याह वचनमिति, सूत्रे वचनग्रहणमित्यर्थः। न चैकादिशब्देभ्यः सर्वविभक्त्यापत्तिरिति वाच्यम्। अनन्वितार्थकविभक्त्यपेक्षयाऽनुवादकविभक्तेरेव न्या-य्यत्वात्।

अत्राहुः—अर्थे प्रथमेत्येव सारम्, इतरत् सर्वं त्यक्तुं शक्यम्। तद्यथा, अर्थे प्रथमेत्युक्ते कस्यार्थे इत्याकाङ्क्षाया यस्मात् स्वादिविधिस्तस्येति ल-भ्यत एव। स्वादयश्च प्रातिपदिकाल्लिङ्गप्रत्ययविशिष्टा-

च विधीयन्ते, तदर्थत्वं च ततो नियतोपस्थितिक-त्वमेव। एवं च मृडानी हिमानीत्यादौ पुंयोगमहत्त्वादेरपि ङ्यन्ताद् नियतभानेन प्रथमा सिध्यति। पञ्चकपक्षस्य सिद्धान्तत्वेन लिङ्गमपि प्रातिपदिकार्थत्वात्तेनैव सिद्धे व्यर्थम् इति। द्रोणो व्रीहिरित्यपि गौर्वाहीक इत्यादिवच्छक्यार्थे साधयित्वा लक्षणीयार्थान्वयबोध इति परिमाणमपि व्यर्थम्। न केवला प्रकृतिः प्रयोक्तव्येति समयादेव सिद्धौ वचनग्रहणमप्यपार्थकम्। मात्रग्रहणमपि व्यर्थम्। विशेषविहितैः कर्मणि द्वितीयेत्यादिभिर्बाधितत्वेन कर्मादौ प्रथमाया अप्रवृत्तेः, कर्मणि द्वितीयेत्यादिषु कर्मणि द्वितीयैव नान्यविभक्तिरित्येवमर्थस्य नियमस्वीकारात्। कर्मण्येव द्वितीयेत्यादिप्रत्ययनियमपक्षे कर्मादौ प्रथमा न च मात्रपदेनैव वारणीयेति वाच्यम्। तत्र पक्षे प्रातिपदिकार्थ एव प्रथमेतिनियमपर्यवसानेन तद्वारणादिति।

अत्र वदन्ति—"अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति न्यायेनैवार्थेऽपि तत्सिद्धौ सम्पूर्णं सूत्रं न कार्यमिति। इदं तु न सत्। अर्थनियममाश्रित्य मात्रग्रहणं "सम्बोधने च"इति सूत्रं लि-

ङ्यादिग्रहणं प्रत्याख्याता वार्तिककृता "तद्धितश्च" इति-सूत्रे प्रातिपदिकग्रहणमनर्थयता भाष्यकृता च सह विरोधापत्तेः । अनभिहितसूत्रसार्थक्याय कर्तव्यः कट इत्यादौ तत्र मते प्रथमाविधायकात् पूर्वं कर्तृकर्मणोरितिसूत्रस्य पाठेन परकृद्योगलक्षणषष्ठीमादायेति वदद्भिरनभिहितसूत्रे भाष्यकैयटतद्व्याख्यातृभिः सार्द्धं विरोधाच्च । एवं चार्थग्रहणस्य वितथत्वे ऽपि प्रथमेत्येतावन्मात्रमेव सारमित्यालोचयाम इति न कश्चित् क्षुद्रोपद्रवः ॥

## इति प्रथमा

कर्तुः किमिति । "कारके" इत्यधिकारसूत्रे कारकशब्दः क्रियापरः, करोति कर्तृकर्मव्यपदेशानिति व्युत्पत्तेः । आप्नोतेः सन्नन्तान्मतिबुद्धीति वर्तमाने कर्मणि क्तः । तत्र केनाप्तुमित्यपेक्षाया अवश्यजायमानत्वेनाधिकारात् क्रिययेत्यर्थलाभेनैव सूत्रार्थोपपत्तौ नार्थस्तद्ग्रहणेनेति प्रष्टुराकूतम् । एवं सति क्रियया आप्तुमिष्यमाणमित्यर्थे फलाश्रयस्यापि फलनिष्ठजन्यतानिरूपितजनकतावच्छिन्नत्वसंसर्गेण तदासंनमे ऽपि कर्मसंज्ञा स्यादित्याशयेनोत्तरयति माषे-

ष्विति । माषेषु बुभुक्षया प्रसक्तमश्वं माषनाशो मा भूदित्यन्यत्र बध्नातीति तात्पर्यार्थः । माषेष्वि-त्यत्राधारसंज्ञायाः परत्वाद्बाधकं कर्मत्वं स्यादिति भावः । तदेवाह कर्मण इति । वस्तुगत्या साक्षात् स-मवायसम्बन्धेन व्यापारस्य कर्तृनिष्ठत्वेन कर्त्रैष्यमाणे एव तत्सञ्ज्ञासम्पत्तिर्भविष्यति । अत एव कर्तुरि-त्यस्य प्रश्नोत्तराभावो भाष्ये इति कर्तुरिति चि-न्त्यप्रयोजनमित्याहुः । तमब्ग्रहणं किमिति । अ-वयवद्वारा समुदायस्य प्रश्नः । कर्तुरुद्देश्यं कर्मे-त्येवास्तामित्यभिप्रायः । पयसौदनमिति । इदं च प्रत्युदाहरणं तदानीम्, यदा कृतभोजनोऽपि पयो-लाभेन भोजने प्रवर्तते । भोजनक्रियायाः पयउद्दे-श्यकत्वात् । ईप्सिततमशब्दस्तु क्रियाशब्द एव, नाभि-प्रेतपर इति स्पष्टं "वारणार्थानाम्"इत्यत्र भाष्यकैय-टयोः । तथा च पयसस्तदा फलाश्रयत्वेनाविव-क्षणान्न कर्मत्वमित्याशयः । तर्हि तमपः किं फल-मिति वाच्यम् । कूपादन्धं वारयत्यग्नेर्माणवकं वार-यतीत्यादावन्धमाणवकयोः कर्मसंज्ञासम्पत्तिरेव, इतरथा वारणार्थेत्यपादानसञ्ज्ञाऽस्यापवादो भवेत् । न चा-ग्निकूपयोः सा सावकाशेति शङ्क्यम् । तयोरपि

तदुपस्थाप्यसंयोगरूपफलाश्रयत्वेन कर्मत्वस्यैव प्रवृत्तेः । वारयतेश्च संयोगाद्यनुकूलव्यापाराभावानुकूलव्यापारोऽर्थः, स एव प्रवृत्तिविघात उच्यते । न च संयोगो न तत्कर्तृव्यापारप्रयोज्य इति तत्र कर्मत्वाप्राप्तिः । कर्तृव्यापारवाचकधातूपात्तफलाश्रयत्वस्यैव लाभात् । तस्मान्माणवकादेः कर्मत्वसम्पादकं तमब्ग्रहणम् । ईप्सितमात्रे सावकाशस्यापादानत्वस्येप्सिततमेऽनेन बाधनात् । तत्त्वं च प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वम्(१) । तच्च नाग्निकूपादौ ।

---

(१) नन्वत्राश्रयतानियामकः सम्बन्धो यः कश्चिदाश्रीयते उत नियतः कश्चन । आद्ये कालस्यापि कालिकसम्बन्धेन फलाश्रयत्वात्कर्मतापत्तिः । अन्त्ये च कः स इति चेन्न । फलशरीरघटकजन्यतावच्छेदकस्य तस्याश्रयणात् । तथाहि धात्वर्थत्वे सति धात्वर्थव्यापारजन्यत्वम् फललक्षणम् गम्यादिस्थले विभागस्य, व्यापारस्य च तत्त्ववारणफलककोटिद्वयघटितमावश्यकम् । तत्र व्यापारनिष्ठजनकतानिरूपितजन्यताया अवच्छेदको योऽभीष्टस्सम्बन्धस्तेन सम्बन्धेन यस्तस्याश्रयः स कर्मेतीति । नन्वेवमपि त्यज्यादिधातुस्थलवद् विभज्यादिस्थलेऽपि विभागे धातुवाच्ये समवायसम्बन्धेन जन्यतायाः सत्त्वात्तेन सम्बन्धेन तदाश्रयस्य ग्रामादेः कर्मत्वापत्तिरिति चेन्न । ग्रामाद्विभजत इति प्रयोगानुरोधेनेदृशस्थले समवायप्रतियोगित्वस्य जन्यतावच्छेदकसम्बन्धत्वेन विवक्षणात्तेन सम्बन्धेन ग्रामस्य फलानाश्रयत्वेन तस्य कर्मत्वाभावात् । वस्तुतस्तु जन्यताया अवच्छेदकसम्बन्धे पे-

केचित्तु ईप्सिततमस्यापीप्सितत्वादिति प्रश्नः। उत्तरे तु ओदन एवेप्सिततमो न तु पयः, नहि केवलपयःपानेन सन्तुष्टिः, किं तु तत्संस्कृतेनौदनेन। पयसस्तथात्वे तु भवत्येव पयः पिबतीति। यद्यपि इदं न सत्। वारणार्थसूत्रे स्वव्यापारजन्यफलाश्रयार्थकस्यैवेप्सितपदस्य भाष्यकृदुक्तेः, अन्यथा कूपादन्धं वारयतीत्यादौ कूपादेरीप्सितत्वाभावादपादानत्वानापत्तेः, तथापि वारणार्थसूत्रे क्रियाजन्यफलाश्रय एवार्थः। इह तु तमब्ग्रहणात् क्रियाजन्यफलाश्रयत्वेन कर्तुरिच्छाविषयत्वमिति भेदः। पयो हि फलाश्रयत्वेन कर्मण एवेच्छाविषयः। अत एव कर्मणा यदीप्सितं तदपादानमित्युक्तं भाष्ये इत्याहुः।

ननु पूर्वप्रक्रान्तमेव "अधिशीङ्स्थासां कर्म" इतिसूत्रे कर्मपदं तदेवानुवर्ततामित्याशङ्कमानं प्रत्याह कर्मेत्यनुवृत्ताविति। एकयोगनिर्दिष्टत्वेनाधारस्याप्यनु-

---

च्छिकत्वस्यायुक्तत्वात् पतत्यादिस्थले विभागस्य संयोगजन्यस्य फलत्ववारणाय फललक्षणे धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारताश्रयत्वस्य विवक्षणीयतया प्रकारतायाश्चैच्छिकत्वस्य सर्वसंमतत्वेन तदवच्छेदकस्यैवाश्रयतानियामकत्वेनोक्तस्थले उक्तरीत्या अदोषात् विस्तरस्तु अन्यत्र द्रष्टव्यः।

वृत्तावाधारस्यैव कर्मसंज्ञा स्यात्तन्निवृत्त्यर्थमिह कर्मपदमित्यर्थः ।

अयं भावः—"आधारो ऽधिकरणम्" इत्यत्र कस्याधार इत्याकाङ्क्षोदये कारकाधिकात् क्रियाया एवेत्युपलब्धौ स्वतन्त्रेप्सिततमपदाभ्यां साक्षात् क्रियाया आधारे कर्तृकर्मसंज्ञाविधानेन परम्परया तस्या आधार इत्यत्रस्थितौ योग्यतया कर्तृकर्मद्वारैव क्रियाश्रयस्याधिकरणसंज्ञा सम्पद्यते । एवं च कर्त्रा स्वनिष्ठव्यापारेणाप्तुमिष्यमाणस्तन्निष्ठक्रियायास्तद्द्वाराऽऽधारः कर्मत्वं प्रतिपद्येत । ततश्च यस्य धातोः फलं विषयतासम्बन्धेन विषये, समवायसम्बन्धेन कर्तर्यपि तिष्ठति, तस्यैव योगे तत्स्यादित्याशयेनाह गेहं प्रविशतीत्यत्रैवेति । इत्यादावेवेत्यर्थः । इहोक्तसम्बन्धाभ्यां गेहचैत्रयोः फलं तिष्ठतीति भावः । यद्वा, फलसमानाधिकरणव्यापारवाचकत्वेनायमकर्मको धातुः, तथा चैतादृशयोग एव तत् स्यादित्याशय इति स्थितस्य गतिश्चिन्तनीया । वस्तुगत्या एवं सति कर्माधारयोः परस्परापेक्षत्वेन सूत्रद्वयवाक्यार्थानुत्पत्त्यैव नाधारानुवृत्तिः । अकर्मकधातुयोगे तत्करणे बहूपप्लवापत्तिः । अत एव कर्मानुवृत्त्यननुवृत्तिविधाना-

भावो भाष्ये इति सुधीभिर्विभावनीयम् ।

अथ पञ्चकं प्रातिपदिकार्थो विभक्तयश्च द्योतिका इति भाष्यसिद्धान्तः । द्योतकत्वं च समभिव्याहृतवृत्त्युद्बोधकत्वम् । भाष्ये कर्मादीनां विभक्त्यर्थत्वव्यवहारोऽपि द्योत्यतयैव । अत एव द्व्येकयोरित्यादीनां नियमत्वं बहुषु बहुवचनमितिसूत्रे भाष्याद्युक्तं सङ्गच्छते । एवं भावकारककालसंख्याश्चत्वारो धातोरेवार्थास्तिङश्च द्योतकाः । अत एव प्रकृत्यर्थविशेष्यको बोध उभयत्रेत्यादिरस्मत्कृतचिन्तामणौ नागशीये चोपपत्तिविस्तरः ।

"अनभिहिते" इत्येतदभावे स्वादिसूत्रेण "अनिर्दिष्टार्थाः" इतिन्यायेन कर्मादौ संख्यायां च स्वादिना सिद्धे नियमत्वोपपत्तिः । तत्र यदा कर्मणीत्यादेर्द्व्येकयोरित्यादेश्चैकवाक्यतायामेकस्मिन् कर्मणीत्यन्वयेन सूत्रजनितबोधे कर्माद्यर्थप्राधान्यं, तदा सूत्रजनितबोधविषयप्रधानविषयेण "उक्तार्थानामप्रयोगः" इतिन्यायेनैव सिद्धेरनभिहितसूत्रं न कार्यम् । यदा तु कर्मगते एकत्वे इत्यन्वयेन संख्यायाः प्राधान्यं, तदा कार्यमेव तत्, तथा चानुक्तैव विभक्तिरित्यभिप्रायेणाह **अभिहिते त्विति** । प्रथमैवेति ।

अनभिहिताधिकारे ऽपि प्रातिपदिकार्थस्य प्रातिप-दिकेनोक्तत्वे ऽपि सूत्रसामर्थ्यात् सा भवत्येवेति भावः। अत एव "अभिहिते प्रथमा" इति वार्तिकं सङ्गच्छते। इहत्याभिसन्धिः प्रागप्युक्तः। कियद्भिरभिधानं भवतीत्यपेक्षायामाह **प्रायेणातिङित्यादि**। अत एव कटं भीष्मं कुर्वित्यादौ विशेष्यपदोत्तरोत्पन्नद्वितीयया विशेषणगतकर्मत्व उक्ते ऽपि विशेषणादपि सम्पद्यते द्वितीया। यदा तु प्रक्रियादशायां कटो ऽपि कर्म भीष्मादयो ऽपि कर्मेतिस्वीकारात् कटत्वविशिष्टकटनिष्ठकर्मत्वोक्तावपि भीष्मत्वगुणविशिष्टनिष्ठकर्मत्वस्य बोधनाय विशेषणादपि सा, तदा परिगणनं प्रत्याचख्युर्भाष्यकाराः। तिङ्कृतौ स्वप्रकृत्यर्थं प्रति यस्य यस्य कर्मत्वं तस्य सर्वस्यापि कर्मत्वमभिधत्त इति न कृतः कटः सुन्दर इत्यादौ द्वितीयेत्यादिकं नागेशीयचिन्तामण्योरवसेयम्। लःकर्मणितिप्तसूझीत्यनयोरेकवाक्यतया तिङाऽपि कर्मणो ऽभिधानमित्यभिप्रेत्याह हरिः सेव्यत इति। प्रीत्यनुकूलव्यापारो भजेः सेवेश्चार्थः कर्त्रादयस्तिङो द्योत्यार्थाः, तेषां विशेषणत्वं, प्रकृत्यर्थस्य विशेष्यत्वम्। कर्तृलकारे व्यापारो विशेष्यः। कर्मलकारे फलं विशेष्यम्। एवं च चैत्रकर्तृको वर्त-

मानकालिको हरिकर्मक एको व्यापारः(१)। चैत्रकर्तृकवर्तमानव्यापारजन्या हरिनिष्ठा एका प्रीतिरिति शाब्दबोधः। उपपत्तिस्तु चिन्तामणौ बोध्या। तेन क्रीतमित्यधिकारे "शताच्च ठन्यतौ"इति यता कर्मणोऽभिधानमाह शत्य इति.। शतेन क्रीतो ऽश्वः शत्यः शतिकः। भाष्ये प्रायेणेत्यदृष्टमपि प्राच्यानुरोधेन यदुक्तम्, तस्य फलमाह क्वचिन्निपातेनेति। वस्तुगत्याऽत्र पद्ये तुमुनः साधुत्वायेष्यते(२) इत्यस्याध्याहार आवश्यकः। अन्यथा क्रियाया उपपदत्वाभावेन "तुमुण्ण्वुलौ"इतिसूत्राप्रवृत्तेः। एवं च तिङैवाभिधानम्। तथा च विषवृक्षो ऽपि संवर्द्ध्य च्छेत्तुं यदिष्यते तदसाम्प्रतमन्याय्यमित्यर्थः। तादृशेच्छाया अन्याय्यत्वं च तद्विषयस्यान्याय्यत्वेन ज्ञेयम्। युक्तं चैतद्, इतरथा प्रथमाया अपि कारकविभक्तित्वेन क्रियामन्तराऽनुत्पत्तिः स्यात्, प्रथमान्तकारकस्य क्रियायामन्वयनियमेन प्राच्यनये ऽसङ्गतिश्च। 'अमुं नारद इत्यबोधि सः' इत्यादौ नारद

(१) लकारवाच्यसङ्ख्यायाः कर्तृकर्मगतत्वस्य सिद्धान्ते सत्त्वेनैको व्यापार इत्युक्तिर्विरुद्धा; एवम् एका प्रीतिरित्यत्रापि; स्वाश्रयवृत्तित्वरूपपरम्परासम्बन्धेन वा स्थितं कथञ्चिन्निर्वोढव्यमिति दिक्।

(२) एवं च इच्छार्थेति तुमुन् सिध्यति।

इतीति श्रीकृष्णीयज्ञानानुकरणम्, प्रथमान्तस्य चाप्रातिपदिकत्वान्न द्वितीया । नारद इत्येतच्छब्दाभिलप्यमानाकारो बोध इति तदर्थः । एवं सर्वत्र बोध्यम् । 'मातेव हितकारिणीम्'इति त्वसाध्वेवेति चिन्तामणौ विस्तरः ।

विभागानुकूलव्यापारानुकूलव्यापारो दुहादेरर्थ इत्यभ्युपगमाद् गां पयो दोग्धीत्यादौ गौः पयस्त्यजति गवा पयस्त्याजयतीत्याद्यर्थप्रतीत्या कर्तुरित्येव कर्मत्वे सिद्धे व्यर्थम् "अकथितं च"इतिसूत्रम्, तथाऽपि यदा पयोनिष्ठविभागानुकूलव्यापारादिरेव तद्धात्वर्थः, तदाऽपादानत्वाद्यविवक्षायामन्येनासिद्धकर्मत्वप्रतिपत्तये तदावश्यकम् । तत्र नटस्य शृणोतीत्यादौ नटस्यापि कर्मत्वे प्राप्ते गानद्वारा श्रवणक्रियाजनकत्वरूपकारकत्वसत्त्वात् । न च कर्मयुक्त्वं धात्वर्थव्यापारात् प्राक् तदनन्तरं वा तत्सम्बद्धत्वम् । तच्च सति सम्भवे प्राक्सम्बद्धत्वमेव ग्राह्यम्, अत एव गां पयो दोग्धि स्थाल्यामित्यादौ स्थाल्यादेर्न दोषः, तथा च कर्मयुक्त्वाभावादेव न तत्र दोष इति वाच्यम् । तदंशस्यापि परिगणनलभ्यत्वात् । अतः परिगणनमुक्तम् । एवं च तद्राजसूत्रे प्रच्छिपर्यायस्य चु-

दोर्द्विकर्मकत्वसमर्पकम् "अहमपीदमचोद्यं चोद्य" इति भाष्यप्रयोगमसमञ्जसं मन्वान आह अर्थनिबन्धनेति । परिगणितत्वे ऽपि न स्वरूपाश्रयेति भावः । इदं कैयटानुरोधेन ।

वस्तुगत्या तथा सति "आख्यातोपयोगे" इत्यत्र भाष्योक्तपरिगणनं भज्येत । "दुहियाचिरुधिप्रच्छिभिक्षिचिञ्ब्रुविशासयः" इति हि भाष्योक्ताः, तदर्थकयाचिग्रहणेनैव सिद्धे भिक्षिग्रहणं व्यर्थं च स्यात् । प्रागुक्तभाष्यप्रयुक्तचुदेरन्येषां च येषां द्विकर्मकत्वमिष्टं तेषां व्यापारद्वयार्थकत्वेन कर्तुरित्यनेनैव सिद्धमित्यधिकं नागेशीये ।

कारकं किमिति । एतदभावे कर्मयुक्ते माणवके ऽपि तत् स्यात्, तस्यापि परम्परया योगात् । तद्वारणाय तद्ग्रहणे कृते ऽपि क्रियान्वयित्वरूपस्य तस्य परम्परया आधारसंज्ञायामवश्यं स्वीकर्तव्यतया माणवकेऽपि सत्त्वेन न तद्दोषनिर्मुक्तिः । एवं च प्रश्नानुपपत्तौ जिज्ञासायामत्र किंशब्दः, कारकमित्यस्य को ऽर्थ इति भावः ।

जिज्ञासितं च प्रत्युदाहरणमुखेन दर्शयति माणवकस्येति । करोति क्रियां निर्वर्तयतीति व्युत्प-

त्तिप्रदर्शकभाष्येण क्रियाजनकमिति तदर्थः। जनकत्वं चान्यथासिद्धिशून्यत्वे सति नियतपूर्ववर्तित्वमिति माणवके न दोषः, प्रश्नरूपकार्यस्य तत्पित्राऽन्यथासिद्धेः। माणवकसम्बन्धिपितृकर्मकपथिकर्मकप्रश्नानुकूलो व्यापार इत्यादिकश्चिन्तामणौ विस्तरस्तत एवात्रगन्तव्यः।

गतीत्यादि किमिति। अन्यानधीनत्वरूपप्रधानत्वस्य प्रयोजकव्यापारे सत्त्वेन तदनुरोधिकर्मत्वस्यान्तरङ्गादपि कर्तृत्वाद्बलवत्त्वेन "कर्तुरीप्सिततमम्"इत्यनेनैव कर्मत्वं सिध्यतीति प्रष्टुर्भावः। एवं सिद्धे णिजर्थेनाप्यमानस्य चेद् भवति तर्हि गत्यर्थादीनामेवेति नियमार्थं तत्सूत्रमित्याशयेनोत्तरयति पाचयतीति। एवं च शत्रूनित्यादौ शत्रवः स्वर्गमगच्छन् तान् श्रीहरिः प्रैरयत्, शत्रवो ऽनुत्पन्ने णिचि कर्तारः, उत्पन्ने णिचि कर्माभवन्। स्वर्गकर्मकगमनानुकूलशत्रुकर्मकव्यापारानुकूलो हरिनिष्ठो व्यापार इत्यादिर्बोधः। इह तु ओदनकर्मकपचनानुकूलदेवदत्तकर्तृकव्यापारानुकूलो यज्ञदत्तनिष्ठो व्यापार इत्यादिर्बोधः। गत्यादियोगे प्रयोज्यस्य कर्मत्वशक्तिमत्तया तदतिरिक्तधातुयोगे प्र-

योऽस्य कर्तृत्वशक्तिमत्तया बोधादित्येवं सर्वत्र बोध्यम् । स्पष्टं चेदं "हेतुमति च"इत्यत्र फणिभाष्ये । ननु "गतिबुद्धि"इत्यत्र बोधनं बुद्धिर्ज्ञानमित्यर्थस्य दृशादावपि 'पश्यार्थैश्च—'इत्यत्र प्रसिद्धत्वेन सत्त्वाद्बुद्ध्यर्थत्वेन "दृशेश्च"इति वार्तिकं व्यर्थमित्यत आह सूत्रे ज्ञानसामान्येति ।

अयं भावः—ज्ञानं द्विधा जन्यते । केवलान्तःकरणेन, अन्तःकरणानुसन्धानसहायचक्षुरादीन्द्रियपञ्चकेन च । आद्यं सकलविषयत्वात् व्यापकत्वेन सामान्यं व्यपदिश्यते, अन्त्यं प्रत्येकं रूपादिविषयकत्वाद् व्याप्यत्वेन विशेष इति ।

अनेनेति । वार्तिकारम्भेणेत्यर्थः । ज्ञानफलमाह स्मरेति । ननु शब्दं करोतीत्यर्थे "शब्दवैर"-इतिक्यङन्ताण्णिचि शब्दाययतेर्गतीत्यादिसूत्रेण प्राप्तौ वार्तिकं विफलमित्यत आह धात्वर्थेत्यादि ।

धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसङ्ग्रहात् ।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥

इत्यभियुक्तोक्तेः शब्दरूपकर्मणो धातुना क्रोडीकृतत्वादिति भावः । एवं चाकर्मकत्वप्रयुक्तस्यापि

कर्मत्वस्य प्रतिषेधार्थं "शब्दायतेर्न" इति वार्तिकमिति कैयटादयः ।

अन्ये तु शब्दरूपकर्मणो धात्वर्थसङ्गृहीतत्वेऽपि बहिर्भूतपुत्त्रादिकर्मणोऽत्राभावे मानाभावः । अत एव शब्दकर्मत्वस्य शब्दक्रियाणामितिपक्षे ह्वयतिक्रन्दयतिशब्दायतीनां प्रतिषेध उक्तो भाष्ये, न तु शब्दकर्मणामिति पक्षेऽपि । कैयटादिमते त्वकर्मकत्वेन पक्षद्वये प्रतिषेधस्यावश्यकत्वेनैकपक्षे प्रतिषेधं विदधतो भाष्यस्यासङ्गतिः । एवं च सकर्मत्वाद्गतीत्यादेरप्राप्त्या "शब्दायतेर्न"इति प्रतिषेधश्चिन्त्य इत्याहुः ।

गतीत्यादीति सूत्रं नियमस्य सजातीयापेक्षत्वात् सकर्मकाणां चेदेतेषामेवेति नियमपरम् । एवं सिद्धेऽकर्मकग्रहणं सामर्थ्याद् देशकालादिभिन्नकर्माभाववतो ग्रहणार्थमित्याशयेनाह येषामिति । देशकालादीत्यादिना भावाध्वनोः सङ्ग्रहः । अत्रेति । अत्रैव सूत्रे इत्यर्थः । इह शास्त्रे सर्वत्राविद्यमानकर्मकाणामेवाकर्मकपदेन ग्रहणमिति कैयटोक्तं तु न युक्तम् । कृतपूर्वी कटमित्यादौ कर्मणोऽविवक्षया भावे क्तस्य भाष्यकैयटादावुक्तत्वात्, अधीगर्थेतिसूत्रे कर्मणः शेषत्वविवक्षया अकर्मकत्वे मातुः स्मर्यते

इत्यत्र भावे लकारस्य महाभाष्ये उदाहृतत्वाच्चेति दिक् । न त्वविवक्षितेति । अत एव न हि कश्चिदपि कालभावाध्वभिरकर्मकः सम्भवतीति सामर्थ्यात्तद्भिन्नकर्माभाववतो ग्रहणमित्युक्तं गतिबुद्धीत्यत्र भाष्ये । यदि ह्यत्राविवक्षितकर्मकाणां ग्रहणं स्यात्, तदा क्रियामात्रविवक्षायां कालादीनामविवक्षितत्वात्तैरप्यकर्मकत्वं सम्भवत्येवेति भाष्यस्यासङ्गतिः स्पष्टैवेत्यधिकं नागेशीये । ननु अल्पाच्तरत्वेन पूर्वनिपाते कर्त्तव्ये तदकरणेनाभिनीत्येतादृशानुपूर्वीकसमुदायस्य ग्रहणात् 'निविशते यदि शूकशिखा पदे सृजति सा कियतीमिव न व्यथाम्'इति नैषधीयपद्यस्य निष्प्रत्यूहत्वे ऽपि पापे ऽभिनिवेश इत्यत्रापि कर्मत्वं दुर्निवारमित्यत आह परिक्रयण इत्यादि । अन्यतरस्यामितीदमखण्डमव्ययं विकल्पार्थसमर्पकम् । विकल्पेऽशद्वयं निषेधो विधिश्च । अत्रानुवृत्तिसामर्थ्याद् निषेध एवाश्रीयत इत्युपपादयितुमाह व्यवस्थितेति । विशेषे ऽवस्थिता निषेधरूपेत्यर्थः । फलितमाह क्वचिन्नेति । अत्र बीजं तु "एष्वर्थेष्वभिनिविष्टानाम्"इति समर्थसूत्रभाष्यप्रयोग एव । अन्ये तु उक्तभाष्यप्रयोगादभिनिविश्इत्यानुपूर्व्या अ-

विकृताया एव यत्र श्रवणं तत्रैवैतत्सूत्रप्रवृत्तिः। तथा च मण्डूकप्लुतौ व्यवस्थितविभाषाऽऽश्रयणे च न मानमित्याहुः।

वस्तुगत्या तत्रानुपूर्वी सूत्रगता सविसर्गा, धातुगता हलन्ता, प्रयोगगता अदन्ता, इति नैकविधेत्यानुपूर्व्या भेदेनाविकृतेति कस्य विशेषणमित्यव्यवस्थितेर्यत्नान्तरमेवाश्रयणीयम्, किञ्चैतत् सूत्रं प्रति षत्वविधेरसिद्धत्वादविकृतैवास्त्यानुपूर्वीत्यपि सुवचमिति मूलकृतोऽभिप्राय इति वदन्ति।

जपमनु प्रावर्षदित्यत्र लक्षणं जपः, तज्ज्ञानेन हि कालविशेषविशिष्टा वृष्टिर्ज्ञाप्यते। लक्षणत्वं च ज्ञानजनकज्ञानविषयत्वम्, तच्चानुना द्योत्यम्, द्वितीयार्थश्च लक्ष्यलक्षणभावसम्बन्धः। एवं च जपाभिन्नहेतुज्ञानजन्यज्ञानविषयो वर्षणमिति बोधः, तथा चास्यापि हेत्वर्थे प्रवृत्तिरित्यभिप्रायेणाह परापीति।

अयमाशयः—हेतुत्वाविवक्षणे लक्षणे कर्मप्रवचनीयसंज्ञाया वृक्षमनु विद्योतते विद्युदित्यत्रावकाशः। "हेतौ" इति तृतीयायास्तु धनेन कुलमित्यत्र। प्रकृते हेत्वविवक्षाया विप्रतिषेधशास्त्रमहि-

म्ना तृतीयैव प्राप्तेति ।

बाध्यते इति । न चेह निशम्येत्यध्याहृत्य कर्मणि द्वितीयाऽस्तु, उपपदविभक्तेरित्यनेन हेतुतृतीया निवारिता, अनोः कर्मप्रवचनीयसंज्ञया गतिसंज्ञाबाधनाद् "गतिर्गतौ" इति निघातो निवर्तितः, "कर्मप्रवचनीययुक्ते" इति द्वितीया वृक्षं प्रति विद्योतते विद्युदित्यादौ चरितार्थेति स्पष्टं कैयटे, एवं च बाध्यते इति रिक्तं वच इति शङ्क्यम् । अनुना जपस्यासम्बन्धादुक्तबोधानापत्तेः । पुनः सञ्ज्ञेति । नच सजातीयस्थले बाध्यबाधकभावो दृष्टः, विजातीयत्वात् संज्ञया विभक्तिबाधो ऽशक्यः कर्तुमिति वाच्यम् । पुनःसंज्ञाकरणबोधितपुनर्द्वितीयाविधानसामर्थ्यादिति विवक्षितार्थत्वात् । नन्विह "तृतीयार्थे" इत्यनेन सिद्धे "अनुर्लक्षणे" इति व्यर्थमिति चेन्न । द्वयोर्विषयभेदात् । तत्र हि तृतीयापदेन तन्निमित्तशब्दः "सहयुक्ते" इत्यत्रोपात्तो ऽनन्तरत्वात् सहशब्दो लक्षितः, तदर्थे साहित्ये द्योत्य इत्यर्थः । अत एव नद्या सहेत्यर्थं समनन्तरं वक्ष्यति । "क्रीडोऽनुसम्परिभ्यश्च" इत्यत्र प्रथमे कैयटे स्पष्टश्चायमर्थः । एतेन न चेह "तृतीयार्थे" इतिसूत्रेण गतार्थत्वं शङ्क्यम्, पुरस्तादिति

न्यायेन "सहयुक्ते" इत्येतन्मात्रबाधकत्वादिति मन्दोक्तमतमपास्तम् । "अपिः पदार्थ—" इत्यत्र पदस्याप्रयुज्यमानपदान्तरस्यार्थः पदार्थः । तत्र बिन्दुरित्यादेः पदस्यार्थो ऽपिद्योत्यः । एवं च सर्पिषो ऽपि स्यादित्यस्य सर्पिषो बिन्दुरपि स्यादित्यर्थः । तादृशोत्प्रेक्षामभिव्यञ्जयितुमाह सम्भावनायां लिङिति । "उपसंवादाशङ्कयोश्च" इतिसूत्रे भाष्यपठितेन उपसंवादाशङ्कयोर्लिङ्" इति वार्तिकेनेति भावः । सूत्रमिदं यद्यपि च्छान्दसम्, तथाऽपि वार्तिकं लोकवेदसाधारणमिति तत्रैव स्पष्टं भाष्ये । न चाशङ्का नामोत्प्रेक्षा, ततश्च कथमुक्तार्थे ऽपि वार्त्तिकप्राप्तिः । सम्भावनाया अप्युत्कटकोटिकाऽऽशङ्कारूपत्वात् । नन्वेवं बिन्द्वादिपदार्थ एव यद्यपेर्द्योत्यस्तर्हि स्यादित्येतत्पदवाच्यक्रियया सम्बन्धाभावेनायोगात्—षत्वादेरप्रसक्तौ गत्युपसर्गसंज्ञयोर्बाधे फलाभावादलमपेः कर्मप्रवचनीयसंज्ञाभिनिवेशक्लेशेनेत्याशङ्क्याह तस्या एवेति । सम्भावनाया एवेत्यर्थः । तथा च बिन्दोस्तद्दौर्लभ्यप्रयुक्तदौर्लभ्यसम्बन्धस्य च सम्भावनाभिव्यञ्जितस्यापेर्द्योत्यत्वात्तत्सम्बन्धेन स्यादित्यनेनान्वयान्नोक्तदोष इति भावः । विषयभूते भवने इति । धातुना लिङा च

भावनैवोपस्थाप्यते । आद्या आर्थी भावना, अन्या तु शब्दरूपत्वाच्छाब्दीत्युद्घोषः । अत्र धात्वर्थभावनायाः प्राधान्यम्, तयोः सम्बन्धो विषयविषयिभावरूपः । एवं च पचेदित्यादौ प्रेरणविषयः पचनमितिवदत्रापि लिङर्थसम्भावनाया विषयो भवनरूपो धात्वर्थ इत्याशय इत्यन्यत्र विस्तरः । मदुक्तामेव गतिमाह **कर्तृदौर्लभ्यमिति** । कर्तुर्बिन्दोर्दौर्लभ्यं तेन प्रयुक्तं दौर्लभ्यम् तद्रूपसम्बन्धेन भवनक्रियायां स्यात्पदवाच्यायामपिद्योत्यबिन्दोः कर्तृतया तद्द्योत्योक्तसम्बन्धेन चान्वयादिति भावः, तदाह **अपिशब्दबलेनेत्यादि** । पदार्थद्योतकता नाम, अप्रयुज्यमानबिन्दुरूपपदान्तरार्थद्योतकता नाम । ननु कर्मप्रवचनीयद्योत्ये ऽर्थे सर्पिषो ऽन्वयेन तस्य कर्मप्रवचनीययुक्तत्वात् द्वितीया स्यादत आह **नेहेति** । **न त्वपिनेति** । बिन्दुना तद्योगेऽप्यपिद्योत्यसम्बन्धेनानन्वय इत्यर्थः । कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगित्वमेव कर्मप्रवचनीययुक्तत्वम्, प्रकृते चापिद्योत्यस्योक्तसम्बन्धस्य बिन्दुः प्रतियोगी, न तु सर्पिरिति भावः । यदा तु स्पष्टप्रतिपत्तये ऽपिद्योत्यस्यापि बिन्दोः प्रयोगः, तदाऽपि द्वितीयां बाधित्वो-

पपदविभक्तेरिति प्रथमैव । शाब्दबोधस्तु सर्पिरवयवबिन्दु-दौर्लभ्यप्रयुक्तदौर्लभ्यवती बिन्दुकर्तृका सम्भावनाविषयः सत्तेति । तमब्ग्रहणं किमिति । रामेण बाणेनेत्यादौ बाणः स्वगताक्रियया प्राणवियोगादिसिद्धौ प्रकृष्ट उपकारकः । प्रकर्षस्तु यद्व्यापारानन्तरमव्यवधानेन फलोत्पादस्त-द्रूपः । रामश्च कर्त्ता, स च कर्तृप्रत्ययसमभिव्याहारे प्रधानीभूतधात्वर्थाश्रय इति नागेशीयचिन्तामण्योरुपप-त्तिविस्तरः । एवं च कारकाधिकारात्, करणल्युडन्त-करणेतिमहासंज्ञया च साधकत्वे लब्धे साधकग्रहणमेव साधकतमार्थं भविष्यतीति प्रष्टुराकूतम् । गङ्गायां घोष इति । आधार इति सूत्रे ऽप्येवंरीत्याऽधिकरणमित्यधि-करणल्युडन्तमहासंज्ञयैव सिद्धे आधारग्रहणसामर्थ्यात्स-र्वावयवव्याप्त्या य आधारः, सो ऽधिकरणसंज्ञः स्यात् । तथा चेदं सूत्रं तिलेषु तैलं दध्नि सर्पिरित्यादावेव प्रव-र्तेत, गङ्गायामित्यत्र नैव स्यात् संज्ञा । न हि सर्वा-वयवैर्घोषं व्याप्नोति तीरम्, तीरधर्मस्य घोषाधारत्व-स्यात्यन्तसामीप्यात् प्रवाहे ऽत्रारोपो बोध्यः । शक्यता-वच्छेदकारोप एव लक्षणा । चतुर्भिः प्रकारैरतस्मिन् स इत्येतद्भवति(१), ताद्धर्म्यात्सामीप्यात्साहचर्यात् ता-

(१) अन्यत्रान्यशब्दप्रयोग इत्यर्थः ।

त्स्थ्यादिति पुंयोगादिति सूत्रे चतुर्विधस्यैव सम्बन्धस्य लक्षणा(१)नियामकत्वोक्तेः। उदाहरणानि तु गौर्वाहीको (२),गङ्गायां घोषो, यष्टीः प्रवेशय, मञ्चाः क्रोशन्तीति यथासंख्यं वेदितव्यानीत्यन्यत्र विस्तरः। तथा चातिरिच्यमानं तमब्ग्रहणमस्मिन् कारकप्रकरणे प्रकारार्थबोधकपदं विना शब्दसामर्थ्यगम्यः प्रकर्षो नाश्रीयते इति ज्ञापयति, तेन गौणाधारस्यापि संज्ञा सिध्यति। एवं गङ्गाया गाव इत्यादिकमुदाहरणम्, सर्वावयवव्याप्त्यभावेन मुख्याधारत्वाभावात्। इदं सर्वं स्पष्टं प्रकृतसूत्रे फणिभाष्ये।

अन्ये तु तदाक्षेपकरणासमर्थं प्रति आधारादिपदं चरितार्थम्। आध्रियते ऽस्मिन्नित्याधार इत्येतदर्थमाधारपदमित्याहुः। प्रकृतसूत्रस्वरितसूत्रस्थभाष्यपक्षयोः प्रकृतसूत्रस्थ एव ज्यायानिति मूलकाराशयं वर्णयन्ति।

साधकपदमप्यव्यवहितफलोत्पादकलाभार्थमावश्य-

---

(१) वैयाकरणमते आलङ्कारिकवच्छक्यतावच्छेदकारोपस्यैव लक्षणात्वात् आरोपे निमित्तानामुक्तरीत्या चतुर्णामेवोपादानमिति भावः।

(२) गोशब्दो हि स्वशक्यवृत्तिगुणसजातीयगुणवत्त्वसम्बन्धेन निमित्तेन आरोपितगोत्ववन्तं वाहीकं बोधयतीत्यर्थः;विस्तरोऽन्यत्र।

कम् । एवं चाधारादिपदे स्वरितत्वप्रतिज्ञयाऽधिकः कार्यो ऽधिकारः आधिककार्यमिति तदर्थः, तेन गौणाधारस्यापि ग्रहणम् । तथा च व्यवधानेन फलोत्पादके करणत्वोपचारेण तृतीयान्तप्रयोगस्यासाधुत्वबोधनं तमप्फलम् । एतेन तमपा गौणमुख्यन्यायाप्रवृत्तिः कारकप्रकरणे बोध्यते इति परास्तम् । स्पष्टं चेदं स्वरितेनेत्यत्र महाभाष्ये ।

"सहयुक्ते" इत्यत्र "पृथग्विनानानाभिः" इतिवत्सहेनेतिवाच्ये युक्तग्रहणं शब्दविशेषानादरेणार्थयोगे भवत्वित्यर्थम्, अत एवोक्तमेवं साकं सार्द्धमिति । अत एव क्वचिच्छब्दयोगं विनाऽपि भवतीति तदाह विनापीति । न्यायसिद्धे ऽर्थे लिङ्गमप्याह वृद्ध इति । सहार्थः साहित्यं समभिव्याहृतक्रियादिसमानकालिकतत्क्रियादिमत्त्वम् । अस्ति चेदं पुत्रेण सहेत्यादौ । न च माषवापोत्तरं तत्रैव क्षेत्रे तिलवापे तिलैः सह माषान् वपतीत्यत्र दोषः, समानेत्येतदग्रे देशेत्यस्यापि निवेशात् । ननु पुत्रेणेत्यत्रागमनक्रियाकर्तृत्वादेव तृतीया सिद्धा, सत्यम्, पुत्रेण सह स्थूल इत्यस्यैव मुख्योदाहरणत्वात् । न चाप्रधानग्रहणं प्रत्याख्यातम्, ततश्च स्थूलादेरपि तृतीयापत्तिः । "उपपदविभक्तेः" इति-

न्यायेन प्रथमाया एव बलीयस्त्वादित्युक्तं भाष्ये। एवं च प्रथमाया अपि कारकविभक्तित्वमिति स्पष्टमेव भाष्ये उक्तम्। कारकविभक्तित्वं च क्रियाजनकत्वार्थकविभक्तित्वम्। एतेन प्रथमायास्तन्नास्तीति (१)

(१) अयं भावः—क्रियान्वयित्वस्य कारकत्वेन प्रथमार्थस्य तदभावान्न तस्याः कारकविभक्तित्वम्। तथाहि सर्वत्र प्रथमायाः प्रातिपदिकार्थमात्रबोधकत्वेन प्रातिपदिकार्थस्य च स्वातिरिक्तं विभक्त्यर्थमद्वारीकृत्य क्रियायामनन्वयेन तस्याः क्रियान्वय्यर्थाबोधकत्वेन न तत्त्वम्। अभिहिते प्रथमेति तु शब्दान्तरेण कर्मत्वाद्युक्तावपि उक्तार्थानामिति न्यायस्यात्यन्तस्वार्थिकप्रत्ययादिस्थलेषु व्यभिचारं दृष्ट्वा प्रातिपदिकार्थाधिकान्योक्तसम्भवत्कर्मत्वादिबोधार्थत्वेन प्रातिपदिकमात्रार्थकप्रथमाबाधकद्वितीयादिविभक्तीनां प्राप्तौ प्रकृते कर्मादिविषय उक्तार्थानामितिन्यायस्याव्यभिचारबोधनद्वारा द्वितीयादिनिवृत्तिफलकप्रातिपदिकेतिसूत्रप्राप्तप्रथमानुवादकम्। अत एव अभिहितस्थले न कारकबोधावृत्तिः, अन्यथा शब्दान्तरेण प्रथमया च तदुक्तौ तद्बोधावृत्तिर्दुर्वारा स्यात्। किञ्च देवदत्तः पचतीत्यादौ प्रथमाया अपि भवन्मते कर्तृबोधकत्वेन कारकस्य क्रियान्वयनियमेन तिङर्थाभेदान्वयस्य सिद्धान्तसिद्धस्य भङ्गः स्यात्। न च तिङर्थद्वारा तस्यापि क्रियान्वयित्वेन साक्षात्क्रियान्वयस्याधिकरणस्थलानुरोधेन वक्तुमशक्यत्वेन नोक्तनियमभङ्ग इति वाच्यम्। यत्कारकस्य क्रियायामन्वयो यावतीं परम्परां नाप्राप्त्याऽपेक्षते तदधिकपरम्परानाश्रयेण क्रियान्वयस्य विवक्षितत्वात्। भवति चाधिकरणस्य क्रियान्वयाय कर्तृकर्ममात्रद्वारकपरम्पराश्रयणस्य नाप्राप्तिरिति साऽऽश्रीयते। तदधिकपरम्परानाश्रयणादेव मूले वृक्षः कपिसंयोगीत्यादौ अस्तिक्रियाध्याहारं विना नास्य साधुतेत्यन्यत्र विस्तरः। कर्तुरन्वये च परम्पराश्रयणस्य नाप्राप्त्यभावात्तिङर्थद्वारा क्रियान्वयेऽपि उक्तरूपक्रियान्वयभङ्गप्रसङ्गो दुर्वार इति दिक्।

नव्योक्तमपास्तम् । अधिकं चिन्तामणेरवसेयम् । "हेतौ" इति सूत्रे न शब्दस्वरूपं गृह्यते सप्तमीनिर्देशात्, निमित्तकारणेतिसिद्धेश्च । स च लौकिकः फलसाधनीभूतो गृह्यते, न तु 'तत्प्रयोजको हेतुश्च' इति परिभाषितः । तस्मात्कर्तृत्वादेव तृतीयासिद्धेः । ननु लौकिकहेतोरपि तृतीया करणत्वादेवोपपद्यते ऽतो हेतुकरणयोर्भेदमाह द्रव्यादीति । आदिना गुणक्रिये । हेतुः क्रियान्वय्यपि, द्रव्यगुणयोरप्यन्वयस्तस्येत्याह साधारणमिति । करणं तु क्रियामात्रजनकमिति भावः । वैषम्यान्तरमप्याह निर्व्यापारेति । व्यापाररहितमित्यर्थः । करणं तु व्यापारवदेवेति भावः । एवं च प्रतियोगित्वात् ततः करणत्वस्य वैलक्षण्योपलब्धावपि स्फुटप्रतिपत्तये पुनराह करणं त्विति । दण्डेनेति । दण्डनिष्ठजनकतानिरूपितजन्यताश्रयो घटः, निरूप्यनिरूपकभावः संसर्गः । पुण्येनेति । पुण्यहेतुकदर्शनाश्रयो हरिरित्यर्थः । अत्र दण्डे व्यापारसत्त्वे ऽपि क्रियाजनकत्वाभावान्न करणत्वम्, पुण्ये क्रियाजनकत्वे ऽपि व्यापाररहितत्वान्न करणत्वम् । नन्वलं श्रमेणेत्यादौ क्रियावाचकपदाभावादप्रतीतेः क्रियायाः, कथमत्र करणसंज्ञेत्यत आह गम्यमानाऽपीति । न तु

श्रूयमाणैवेत्याशयः। प्रविश पिण्डीमितिवाक्यार्थे वाक्यैकदेशप्रयोग इत्यादिना स्पष्टम् "इग्यणः" इत्यत्र भाष्ये। अलमिति निषेधार्थकम्, तदाह साध्यं नास्तीति। साध्यमित्यस्य नामत्वे ऽपि प्रकृतिभागस्य क्रियात्वादस्ति क्रियायोगः। अत एव काष्ठैः पाक इत्याह इह साधनेति। ननु रुच्यभिलाषयोरेकार्थत्वादर्थग्रहणसामर्थ्यात्परामपि कर्मसंज्ञां बाधित्वा हरिर्भक्तिमभिलष्यतीत्यत्रापि सम्प्रदानसंज्ञा स्यादित्याशङ्कयानयोर्भेदमाह अन्यकर्तृक इति। अभिलष्यतिकर्त्रपेक्षया यदन्यदभिलष्यतिकर्म, तत्कर्तृक इत्यर्थः। हरिर्भक्तिमभिलष्यतीत्यत्र भक्तिविषयक इच्छादिरूपो व्यापारो ऽर्थः। हरये रोचते इत्यत्र तु हरिनिष्ठप्रीत्यनुकूलव्यापारोऽर्थ इति तयोरर्थभेदान्नोक्तो दोष इति भावः, तदाह हरिनिष्ठेति। प्रीयमाणः किमिति। एतदभावे रुच्यर्थानां प्रयोगे कारकं सम्प्रदानं स्यादिति सूत्रार्थे जायमानेऽपि शेषत्वविवक्षायामस्य चारितार्थ्येन परत्वादधिकरणसंज्ञयैव भाव्यम्। एवं च पथो न दोष इति शङ्कितुर्भावः। शेषत्वविवक्षया चरितार्थत्वं नापवादत्वानिवारकम्, अन्यथा सकलकारकप्रकरणे यथासम्भवमपवादत्वप्रातिपादकपरा

आकरग्रन्था उच्छिद्येरन्, किंतु कारकत्वविवक्षाया-मेव । तच्चात्र नास्तीत्यपवादत्वात्तथोऽपि सम्प्रदानत्वं स्यादित्यभिप्रयन्नाह पथीति । एतेनाधिकरणसंज्ञाया न दोषः, प्रीयमाणपदं तु परत्वात्कर्मत्वेन देवदत्तं रोचते इत्येतन्निवृत्त्यर्थमित्युक्तिश्चिन्त्या । एवं "श्लाघह्नुङ्, धारेः, स्पृहयतेः" इत्येतेषां शङ्कोत्तराशयौ वेदितव्यावित्याहुः । नन्वीप्सितशब्दः क्रियापरो नाभिप्रेतपरः, तथा च तमपमन्तरेणेप्सिते एव च संज्ञाऽस्ति, तत्किमुच्यते ईप्सितेति, किमुच्यते च प्रकर्षेतीत्याशङ्क्य स्पृहधातुरिच्छामात्रवाची फलावच्छिन्नेच्छावाची च । आद्ये सम्प्रदानत्वम्, अन्त्ये कर्मत्वमिति गूढाभिसन्धिनाऽऽह ईप्सितमात्रे इत्यादि । प्रकर्षविवक्षायां फलाश्रयत्वेन विवक्षायाम् । परत्वादिति । सम्प्रदानत्वस्य क्रियाजनकत्वेनाद्यार्थे चारितार्थ्येनापवादत्वाभावादिति भावः । चतुर्थीसमवधाने पुष्पसम्प्रदानिकेच्छेति बोधः । द्वितीयासमवधाने पुष्पकर्मिकेति बोधः । कुमार्य इव कान्तस्य त्रस्यन्ति स्पृहयन्ति चेत्यादौ तु क्रियासम्बन्धमात्रविवक्षया षष्ठी । ननु चित्तदोषरूपता सर्वेषामस्तीत्येकतरेणैव सिद्धिमाशङ्क्य भिन्नार्थकत्वमाह क्रोधोऽमर्षः, वाक्च-

क्षुरादिविकारानुमेयः प्ररूढकोपः । अपकारः, अपकारविषयेच्छा । अक्षमा उत्कर्षविरोधिधर्मारोपानुकूलो व्यापारः । गुणेषु गुणविषये, दोषः दोषत्वम् । कोपप्रभवा इति । क्रोधादिषु कोपाव्यभिचारादिति भावः । तदुक्तम्—"न ह्यकुपितः क्रुध्यति, न चाकुपितो द्रुह्यति" इत्यादि भाष्ये । अत एवाह विशेषणं सामान्येनेति । उक्तभाष्यात् प्ररूढकोप एव क्रोध इति कुपेस्तदर्थत्वाभावात्तद्योगे नापादानत्वम्, यस्मै कुप्यसीत्यादिकं त्वसाध्वेवेत्याहुः । पत्ये शेते इतिवत् "क्रियया यमभिप्रैति" इतिवार्त्तिकेनोक्तप्रयोगं केचित् समर्थयन्ते । स्वरूपमित्यस्य यत्नान्तरेणानिर्धार्य्यत्वात् स्वरूपस्यैव ग्रहणे इष्टासिद्धिं मत्वाऽऽह अलमिति । अलमित्यनेन पर्याप्त्यर्थग्रहणं, व्याख्यानादित्यर्थः । तत्र ज्ञापकमप्याह तस्मै प्रभवतीति । प्रभुप्रभवतिभ्यामर्थो गृह्यते न तु स्वरूपम् । अत एवोक्तं भाष्ये प्रभुर्मल्लाय प्रभवति मल्लो मल्लायेति । तेन प्रभविष्यति मारणाय मज्जननीत्यादिसिद्धिः । षष्ठ्या साधुत्वे बीजमाह स एषां ग्रामणीरिति । भाष्ये आशीर्विषये षष्ठीं बाधित्वा पूर्वविप्रतिषेधेन चतुर्थी भवतीत्युक्तम्, तदर्थं व्याख्यातुमाह चकार इति । आ-

शीर्विवक्षायामिति । आशीर्विषयत्वाविवक्षायामित्यर्थः । परमपीति । स्वस्तियोगे चतुर्थ्या अवकाशः स्वस्ति जाल्मायेति । अत्र तत्त्वकथनम्, जाल्मत्वादाशीरभाव इति कैयटः । स्वस्तिभिन्नाः कुशलार्थास्तु षष्ठ्या अवकाशः । मन्यकर्मणीत्यत्रानभिहिताधिकारेण मन्येति न यका निर्देशः, तद्योगे कर्मण उक्तत्वेन चतुर्थ्यप्रवृत्तेरिति तादृशरूपं निश्चित्याह श्यनेति । एतेन यका निर्देशो नास्ति व्याख्यानादित्युक्तिश्चिन्त्या । श्यन् तूपलक्षणं लिङादावपि भवति, तद् ध्वनयन्नाह तानादिकेति । तनादौ भवः "तत्र भवः" इति ठक् । तेन तृणाय मत्वा रघुनन्दनोऽपि बाणेन रक्षः प्रधनान्निरास्थदिति भट्टिप्रयोगो व्याख्यातः । तत्र मत्वेति रूपं दैवादिकस्यैव इडभावदर्शनात् । चेष्टायां किमिति । गत्यर्थयोगे विभक्तिविधानेन क्रियारूपत्वेन धात्वर्थभासनादिष्ट एवेति प्रश्नः । धात्वर्थभासनेऽप्यभिमतार्थं तदित्याशयेनोत्तरयति मनसेति । शारीरव्यापारस्यैवात्र ग्रहणादिति भावः । अत एव करचरणादिव्यापारश्चेष्टा—इत्युक्तं भाष्यादौ । अनध्वनीति किमिति । एतदुक्ते कुत्र न भवतीति जिज्ञास्यते, तत्र स्वरूपमिति वच-

नात्स्वरूपस्यैव ग्रहणे प्राप्ते ऽध्वन्यर्थग्रहणं कर्त्तव्य-मिति भाष्योक्तेः पर्यायादपि चतुर्थी न भवतीत्य-भिप्रेत्य विज्ञापयति **पन्थानमिति** गत्यर्थकर्मणि चतुर्थी वेत्येवास्तु, किं द्वितीयाग्रहणेन। अपवाद-विषयेऽपि द्वितीयाविधानार्थत्वात्तद्ग्रहणस्य। तेन ग्रामं गन्तेत्यत्र कृद्योगलक्षणषष्ठी न भवतीति कैयटवृत्ति-कारादयः। अत्र वार्तिकम्—आस्थितप्रतिषेधश्चेति। अत्र भूते कर्मणि क्तः, आस्थितः आक्रान्तः। तथा च क्र-मणव्यापारजन्यफलाश्रयस्याध्वनः प्रतिषेध इति तदर्थः, तदाह **गन्त्राधिष्ठितेति**। गन्तृशारीरिकक्रियाजन्य-फलाश्रय इत्यर्थः, तेन पन्थानमित्यत्र चतुर्थी। अस्या उक्तेर्व्यावृत्तिमाह **यदा त्वित्यादि**। उत्पथा-द् उत्पथं सन्त्यज्य, ल्यब्लोपे पञ्चमी। इष्यते, न तु आक्रान्तः उत्पथेन गन्तुमशक्त इति शेषः। ननु स्त्रियं गच्छति अजां नयतीत्यादौ स्यादेव चतु-र्थी। मैवम्। अध्वपदेन गन्तृप्राप्यार्थस्याभिधानात्, स्त्रियाश्च प्राप्तत्वात्। पथोऽपि यत्राप्राप्तत्वं तत्र भ-वत्येव चतुर्थी। नयतेस्तु न गतिरर्थः, तस्य प्रा-पणान्वयित्वादित्यत्रैव कैयटः। ननु घटाद्भिन्न इत्या-दौ पञ्चमी कथमत आह **अन्येत्यर्थेति**। भेदवान-

न्यार्थः, तर्हि परग्रहणं किमर्थमत आह प्रपञ्चार्थमिति । न च इतरस्त्वन्यनीचयोरित्यमरान्नीचार्थकस्येदं ग्रहणमिति वाच्यम् । अस्माच्चारो मन्दो वेत्यादाविव "पञ्चमी विभक्ते" इतिसिद्धेः । ननु इतरदितिनिर्दिश्यमानप्रतियोगिक एव प्रयुज्यते, तद्यथा चैत्रः शूर इतरः कातर इति, अतो नायमन्यार्थ इति चेन्न । प्रतियोग्याकाङ्क्षाया उभयत्र तद्वदन्यः कातर इत्यस्यापि वक्तुं शक्यत्वेन तुल्यत्वात् उक्तामरकोशविरोधाच्च । अन्ये तु ध्रुवमितिसूत्रे ऽपायशब्देन भेदस्यापि ग्रहणम् "पञ्चमी विभक्ते" इतिसूत्रे विभागार्थकविभक्तपदेन भेदेन व्याख्यानात् । अत एव घटाद्भेद इति सिद्धम्, तद्योगे ऽप्यपादानत्वात् । अन्यशब्दार्थस्याक्रियात्वाच्चद्योगे एतद्विधानात्, अत एव घटः पटो नेत्यादौ न पञ्चमी । नञो भेदत्वदर्थकत्वेऽपि अक्रियात्वात् । अत एवेतरग्रहणं चरितार्थम् । अत एव भाष्ये ऽर्थग्रहणं नोक्तमित्याहुः ।

ननु प्रागादिपदानां दिग्वाचकत्वाव्यभिचारान्नैव तत्सिद्धिरित्याह अञ्चूत्तरपदस्येति । नन्वदिगर्थसम्यक्पदयोगे पञ्चमीविधानाय तद्ग्रहणमिति चेन्न । दिक्शब्दसाहचर्येणाञ्चूत्तरपदस्यापि दिग्वाचकस्यैवा-

त्र ग्रहणात् । न च समनतरं दिक्शब्दस्य देशका-
लार्थत्वोक्तेर्दिगर्थत्वस्य व्यभिचार इति वाच्यम् ।
शब्दग्रहणसामर्थ्येन तादृशार्थपरत्वे ऽपि स्वतो दि-
गर्थत्वाव्यभिचारात् । बाधितुमिति, परत्वात् प्राप्त-
मित्यादिः । परत्वे ऽपि प्रतिपदविधित्वादिदमेव बाधते
इति भावः । "षष्ठ्यतसर्थे"इत्यत्र प्रत्ययग्रहणात्त-
स्य श्रूयमाणप्रत्यय एव प्रवृत्तिः, तदेदं न कर्त्तव्य-
मिति तु तत्त्वमिति स्पष्टं भाष्ये । नन्वासकलाद्
ब्रह्मेत्यभिविधौ न स्यादत आह वचनग्रहणादिति ।
मर्यादायामिति वाच्ये वचनग्रहणसामर्थ्यात् अव-
धिमात्रं विवक्ष्यते । तेन विनेति मर्यादा, तेन सहेत्य-
भिविधिरिति वृद्धोक्तौ । तेनेतिविशेषणांशस्तु न विव-
क्षित इति भावः । यद्वा मर्यादेतिशब्द उच्यते ऽस्मि-
न् तन्मर्यादावचनमाङ्मर्यादाभिविध्योरिति सूत्रं, तत्र
य आङ् दृष्टः स उक्तसंज्ञ इत्यर्थः । शेषे किमिति ।
"दिवस्तदर्थस्य"इत्यादिना विच्छेदादनेनापि करणकारके
एव षष्ठीविधानं युक्तमिति प्रश्नः । छिरन्हीति । वृत्त्या-
दिप्रामाण्यान्मण्डूकानुवृत्तिराश्रयणीयेत्युत्तरम् । कृति
किमिति । कर्त्तृकर्मपदाभ्यामन्यथाऽनुपपत्त्या क्रियाऽऽक्षि-
प्यते, तद्वाचकश्च धातुरेव, तस्माच्च द्वये प्रत्ययास्तिङः

कृतश्च, तत्राद्ययोगे नलोकेतिनिषेधात् कृद्योग एव पर्यवसानम्। न च नलोकेत्यकृदव्ययस्याग्रहणार्थं तत्। तत्राव्ययार्थस्य ये कर्तृकर्मणी इतिव्याख्याने-नैवेष्टसिद्धेः। न चोभयप्राप्तावित्यत्रान्यपदार्थसमर्पकं तदिति वाच्यम्। "एकाचो द्वे" इत्यादौ धातुलाभवद् व्याख्ययैव कृतीत्येतल्लाभात्। ननु देवदत्तेन शत्यो ऽत्र इत्यादौ षष्ठीप्रतिषेधार्थं तदिति चेन्न। विवक्षि-तक्रियाया अभावेनेह षष्ठ्यप्राप्तेः। कारकान्वययो-ग्यक्रिया धातूपस्थापितैव न तु तद्धिताद्युपस्थितेति स्पष्टमत्रैव द्वितीयभाष्ये। तस्मात् कृद्योग एव पर्यवसानात् किं तेनेति प्रष्टुराकूतम्। समाधत्ते तद्धित इति। तद्धितान्तशक्तिग्रहमात्रप्रयोज्योपस्थितिविषयायाः क्रियायाः कर्त्तरि कर्मणि च मा भूदित्यर्थः। कृद्ग्रहणेन तु कृदन्तशक्तिग्रहप्रयोज्योपस्थितिविषय-क्रियायाः कर्त्तृकर्मणोः षष्ठीति सूत्रार्थः सम्पद्यते। ननु तण्डुलानां पाचकतर इत्यत्रापि न स्यात्, मैवं, पाचकादेस्तद्धितं विनाऽपि प्रयोगात्तच्छक्तिग्रहसत्त्वेन कृ-दन्तशक्तिग्रहप्रयोज्योपस्थितिविषयत्वस्य क्रियायास्स-त्त्वात्। एतेन तद्धिताधिक्ये मा भूदित्येतदर्थं कृद्-ग्रहणं तण्डुलानामित्यत्र षष्ठी त्वसाध्वीति नव्योक्तम-

पास्तम् । अत एव तद्धितस्य ये कर्तृकर्मणी तत्र मा भूत, कृतो ये तत्रैव यथा स्यादित्येवमर्थमित्युक्तमत्र भाष्ये, न तु त्वदुक्तम् । कृतपूर्वी कटमिति । पूर्वं कृतमनेनेति विग्रहे ऽविवक्षितकर्मतया भावे क्ते पूर्वादिनिस्सपूर्वाच्चेतीनिः, तदनन्तरं कटरूपकर्मणोऽन्वयः, अनभिहिताधिकारेऽप्युक्तरीत्या कर्मणो ऽनभिहितत्वात् षष्ठी स्यात्तद्वारणाय कृद्ग्रहणात् । इह च तद्धितान्तशक्तिग्रहप्रयोज्योपस्थितिविषयाक्रियाकर्मणः सत्त्वेन कृदन्तशक्तिग्रहमात्रप्रयोज्योपस्थितिविषयक्रियाकर्मणोऽभावान्न दोषः । नन्विह निष्ठान्तत्वेनैव षष्ठीनिषेधसिद्धौ कृद्ग्रहणं व्यर्थमत्रेति चेन्नैतदस्ति । निष्ठान्तशक्तिज्ञानसहकारेणोपस्थितक्रियान्वयिनोरेव "न लोक—"इति निषेधात् । न चाधीती व्याकरण इत्यत्रेव क्तस्येति सप्तमी स्यादिति वाच्यम् । क्तान्तप्रकृतेः कर्मणीति तदर्थात्, इह चातथात्वात् । कटमकर्मकोत्पत्तिकर्त्रेति बोधः । सर्वोऽयमिति । लाद्यादेशविषयक इत्यर्थः । कारकषष्ठ्या इति कर्तृकर्मणोर्विहिताया इत्यर्थः । प्रतिषेध इति । अनन्तरस्येति न्यायादिति भावः । शेषे षष्ठीत्विति ।

अन्ये तु छात्रस्य हसितमित्यत्र "न लोक"इति

निषेधे प्राप्ते वार्त्तिककृतोक्तं "नपुंसके भावे क्तस्य योगे षष्ठ्युपसंख्यानम्" इति । तत्र प्रतिपदोक्तत्वान्नपुंसके भावे क्त इति विहितः क्तो गृह्यते, तेन भ्रान्तं देशमिति भर्त्तृहरिपद्ये "गत्यर्थाकर्मक" इत्यनेन भावे क्ते तद्योगे षष्ठ्यभावस्सिद्धः । तच्च शेषषष्ठ्या छात्रस्य हसितमिति प्रयोगे निर्वाह्य प्रत्याख्यातं भाष्यकृता । तथा च कारकषष्ठीनिषेधविषये शेषविवक्षा न कार्येत्यभिप्रायो वार्त्तिकस्य लभ्यते । भाष्यस्य तु क्तप्रत्ययातिरिक्तविषये ऽभिधानाच्छेषत्वं न विवक्षणीयमिति । तस्मान्मूलोक्तं चिन्त्यम् । ब्राह्मणस्य कुर्वन्नित्यत्र कार्यमित्यध्याहारेण नरकस्य जिष्णुरित्यत्र जातमित्यध्याहारेण तद्योगे षष्ठी साधुरिति वदन्ति ।

कर्तरीति किमिति । कर्तृकर्मणोरिति नित्ये प्राप्ते वैकल्पिकोऽयमारम्भः । तत्रैतदभावे कर्मण्यपि विकल्पस्तु न भविष्यति, प्रायो भावकर्मणोः कृत्यानां विधानेन कर्मण उक्तत्वादनभिहिताधिकारात् कर्तर्येव भविष्यतीति प्रश्नः । सिद्धान्ती तु लक्षणं स्वविषयीभूतसर्वलक्ष्यसाधकमित्याभिप्रयन्नाह साम्नामिति । एवं च कर्माननुवृत्तिफलकं कर्तृग्रहणम् । अतिव्याप्तिं मत्वाऽऽह अत्र योग इति । योगावयव इत्यर्थः ।

उभयप्राप्तिना कृत्येन योगे षष्ठी नेति सूत्रार्थः । व्रजमिति । न च "गुणकर्मणि वेष्यत" इति विकल्पोऽस्त्विति वाच्यम् । कृत्यातिरिक्ते चरितार्थस्य विकल्पस्य दोग्धव्या गावः पयः कृष्णेनेत्यादौ गुणकर्मणि उक्तत्वात्प्रधाने चरितार्थेनानेन परत्वाद्बाधनाद् । उक्तोऽर्थ इति । याथान्यासिक इत्यर्थः ।

॥ इति विभक्त्यर्थाः ॥

---